

# माध्यन्दिन-संहितायाः पदपाठः

(त्रिविधावान्तरपाठैः समन्वितः)



सम्पादक :-

**युधिष्ठिरो मीमांसकः**

ओ३म्

# माध्यन्दिन-संहितायाः पदपाठः

त्रिविधावान्तरपाठैः संयुतः

पदपाठानां तुलनात्मकाध्ययनेन विविधैः परिशिष्टैश्चालंकृतः




सम्पादकः—

युधिष्ठिरो मीमांसकः



| | | |
|---|---|---|
| द्वितीयवारम् | माघ सं० २०५२ | मूल्य |
| ५०० | जनवरी सन् १९९६ | १००.०० |

प्रकाशक—
रामलाल कपूर ट्रस्ट, बहालगढ़,
जिला सोनीपत (हरियाणा) १३१०२१

# समर्पणम्

राजस्थान-संस्कृतशिक्षाविभाग-संचालकानां
संस्कृतविदुषां परमसहायकानां
निष्कारणमित्रमणीनां
विद्वद्वर्याणां
**स्व० श्री माधवकृष्णशर्मणः**
पुण्य-स्मृतौ
समर्पयति ग्रन्थमिमं युधिष्ठिरो मीमांसकः।

मुद्रकः—
कमाल प्रिंटिंग प्रेस, नई सड़क, दिल्ली
में आफसेट से मुद्रित।

# सम्पादकीयम्

अस्माकं भारतीयानां कृते वेदा एव परमं प्रमाणमित्यत्र नास्ति सन्देहावसरः। वैदिकाः संहिताग्रन्था यथा भारतीयैर्ब्राह्मणैः कण्ठस्थीकृत्याद्य-यावत् सुरक्षिताः, तादृशमुदाहरणं क्वचिदपि देशान्तरे नोपलभ्यते।

वैदिकमन्त्राणामर्थ-परिज्ञानाय प्राचीनैराचार्यैः पदग्रन्थानां प्रवचनं कृतम्। पदप्रवचने च प्रगृह्यत्वावग्रहत्वादिप्रदर्शनेनार्थपरिज्ञाने महत्साहाय्यं लभ्यते। पदपाठमेव प्रकृतिं कृत्वा संहितारक्षणाय प्रवृत्ताः क्रम-जटा-घनाद्या अष्टौ विकृतयः। एवं पदपाठो मन्त्रार्थपरिज्ञानं संहितापाठरक्षणं चोभयमपि प्रयोजनं साधयन् महान्तमुपकारं विदधाति।

**चतुर्विधः पाठः**—अस्य ग्रन्थस्य सम्पादनकर्मणः प्राग् आसीन्मदीयो विचारो यथा संहितायां नैकोऽपि पाठभेदस्तथैव पदग्रन्थोऽपि पाठभेद-विरहित एव। परं यदा मया विविधानां कोशानां पारस्परिकी तुलना सूक्ष्मेक्षिकया व्यधायि, तदैतत् सत्यं प्रथमतः प्रकटीभूतं यन्माध्यन्दिनपदपाठे सन्ति केचन व्यवस्थिताः पाठभेदाः। तान् आलोच्य वर्गीकृत्य च विज्ञातं यत् सम्पादनकर्मण्युपयुज्यमानाः कोशाः पदपाठस्य चतुर्विधान् व्यवस्थितपाठान् व्यञ्जयन्ति। तत्रैकः पाठः प्रधानभूतः, अपरे त्रयोऽवान्तरपाठरूपाः। एतेषां चतुर्विधपाठानां विषये 'माध्यन्दिनपदपाठस्य चतुर्विधः पाठः' इत्यस्मिन् प्रकरणेऽस्माभिर्विस्तरेण विवेचना कृता, सा तत्रैव द्रष्टव्या। अस्मिन् ग्रन्थे वैदिकैः प्रायेण पठ्यमानः पाठः प्राधान्येन यथासम्प्रदायं स्थूलाक्षरैर्मुद्रितः। अपरयोः द्वयोः पाठयोर्यावानंशो भिन्न आसीत्, तावान् एव सूक्ष्माक्षरेषु यथास्थानं संगृहीतः। मुख्यरूपेण मुद्रापितात् पाठाद् अतिस्वल्पेषु पदेषु स्वर-विषयको यो व्यवस्थितो भेदः काशिकपाठ उपलभ्यते, स अधस्तात् टिप्पण्यां यथास्थानमुट्टङ्कितः। एवमयमस्मत्प्रयासः माध्यन्दिनपदपाठस्य चतुर्विधानेव पाठान् संगृह्णाति।

माध्यन्दिनानां संहितायां पदग्रन्थे च यकारवकारयोर्लेखन उच्चारणे चान्यवेदेभ्यो यद् वैशिष्ट्यं तत्र लेखनविषये 'माध्यन्दिनसंहितायां पदपाठे च

**यकारवकारयोर्विशिष्टा लेखनपद्धतिः'** इत्यस्मिन् प्रकरणे (पृष्ठ ३४-४१), उच्चारणविषये च तुरीये परिशिष्टे (पृष्ठ ६४१-६४४) विचारः कृतः। अस्मिन्नेव च परिशिष्टे षकारस्य यत् खकाररूपमुच्चारणं तस्यापि यथाशास्त्र-मालोचनं विहितम्।

**ꣳ ꣴ विषयको विचारः** – माध्यन्दिनपाठे ꣳ ꣴ इत्येवं संकेतितः को वर्णः, कथं च तस्योच्चारणं शिक्षाशास्त्रसम्मतमित्यस्मिन् विषये तृतीये परिशिष्टे (पृष्ठ ६३८-६४०) विचारो विहितः।

**के यमाः कति च**—यमानां किं स्वरूपं, कति यमाः, कश्च तेषा लेखन-प्रकार इत्यस्मिन् विषये द्वितीये परिशिष्टे (पृष्ठ ६३५-६३७) विचारः कृतः।

**पदपाठानां पारस्परिकी तुलना**—सर्वेषामपि पदग्रन्थानां प्रवचन-प्रकारो यथाशाखं भिद्यते। तेषु यावानपि पारस्परिको भेद उपलभ्यते, स सर्वोऽपि **'पदपाठानां तुलनात्मकमध्ययनम्'** इत्यस्मिन् प्रकरणे (पृष्ठ ११-३३) यथाशास्त्रं यथाशाखं च विस्तरेण प्रपञ्चितः। अनेन प्रकरणेन सर्वेषामेव समुपलब्धानां पदग्रन्थानां प्रवचनप्रकारोऽञ्जसा परिज्ञातुं शक्यते।

**एतत्कार्ये प्रवर्तने निमित्तम्**—एकोनविंशत्युत्तरद्विसहस्रसंख्याके (२०१६) वैक्रमाब्दे राजस्थानान्तर्गत 'केकड़ी' नगरवास्तव्याः पण्डितप्रवराः श्रीमदन-मोहनव्यासशर्माणोऽकस्मात् केनचिन्निमित्तेन ममावसथमलंकृतवन्तः। वार्तालापे तेषां हस्तलिखितग्रन्थानां संग्रहे रुचिमुपलभ्य मया निवेदितं—यत्कदाचित् संयोगात् वेदव्याकरणविषयकः कोऽपि हस्तलेखो भवतां दृग्गोचरी भवेच्चेत् पुस्तकस्वामिने पत्रं पुष्पं समर्प्य मदर्थं ग्रहीतव्यः। द्वित्रिमासानन्तरं यदा पण्डितवर्याः पुनः मम गृहं समागतास्तदानीं द्वौ हस्तलिखितौ ग्रन्थौ मह्यमर्पित-वन्तः। तयोरेको माध्यन्दिनपदपाठस्य १४७१ वैक्रमाब्दे लिखितः कोश आसीद्, अपरो भर्तृहरिविरचित-शतकत्रयस्य द्विशतवर्षपूर्वं राजस्थानभाषामिश्रितायां व्रजभाषायां पद्यमयः कोशः। सार्धपञ्चशतवर्षपुरातनं माध्यन्दिन-पदपाठस्य कोशमकस्मादुपलभ्याहं हर्षातिरेकेण पुलकितगात्रोऽभूवम्। यतो ह्यस्य पदग्रन्थ-स्यैतावत्प्राचीनः कोशः क्वचिदपि पुस्तकालयेषु नास्तीति सुविदितमासीन्मम।

कार्यान्तरे व्यापृतत्वान्मया किञ्चित् कालं नायं ग्रन्थः सूक्ष्मया दृष्ट्याऽवलोकितः। यदा कालान्तरे मयाऽयं कोशः सूक्ष्मया दृशा परिशीलितः, भिस्थानेषु मुद्रितैश्च पाठैरस्य तुलना विहिता, तदास्मिन् कोशे महद् वैशिष्ट्य-मुपलभ्यातितरां मुदितोऽभूवम्, प्रकाशने चास्य मतिं कृतवान्।

**राजस्थानसंस्कृतशिक्षाविभागतः साहाय्यम्**—कोशमिममहं तात्कालिक-राजस्थानसंस्कृतशिक्षासंचालकेभ्यो गीर्वाणवाणीप्रसाराय बद्धपरिकरेभ्यो मित्र-वर्येभ्यः स्वर्गीयेभ्यो विद्वद्वर्येभ्यो **माधवकृष्णशर्ममहोदयेभ्यः** प्रदर्शितवान् । तेऽप्येतावत्कालप्राचीनं महार्घं कोशं दृष्ट्वाऽत्रत्यं वैशिष्ट्यं चावगम्य नितरां प्रसन्ना अभवन् । वार्तालापे मयोऽक्तम्—यदि भवतां राजस्थानसंस्कृतशिक्षा-विभागोऽस्य ग्रन्थस्य सम्पादन-कर्म्मणि साहाय्यं विदध्यात्, तर्ह्यहं ग्रन्थमिमं विविधानां प्राचीनकोशानां साहाय्येन सम्पादयितुमिच्छामि । अनुसन्धानकार्य-कुशलैः श्रीमद्भिर्माधवकृष्णशर्मभिरस्य कार्यस्य यथावद् गौरवं परिज्ञाय ग्रन्थस्यास्य सम्पादनकर्मणि स्वविभागतो यथोचितसाहाय्यप्रदानं प्रतिज्ञातम् ।

**त्रिवर्षं यावत् प्रतिमासं सार्धशतमुद्राणां साहाय्यम्**—राजस्थानसंस्कृत-शिक्षाविभागसंचालकेभ्यः साहाय्यविषयकं समाश्वासनं प्राप्य विविध-पुस्तकालयेभ्यः हस्तलिखितग्रन्थान् संगृह्य सुदूरस्थानीयेषु पुस्तकालयेषु गत्वा विविधान् कोशान् आलोच्यास्य ग्रन्थस्य सम्पादनकर्मणः रूपरेखां निश्चित्य मया राजस्थानसंस्कृतशिक्षाविभागसंचालकेभ्यः साहाय्यार्थं प्रतिवेदनं प्रदत्तम् ।

तत्रभवन्तो राजस्थानसंस्कृतशिक्षासंचालका विद्वद्वर्या माधवकृष्ण-शर्माणो विविधै राजनियमैः प्रतिबद्धहस्ता अपि स्वविभागात् सार्धशतमुद्रा-मासिकसाहाय्यप्रदानाय स्वीकृतिमुपलभ्य मामस्य सम्पादनकर्मणि नियोजित-वन्तः । यद्यपि राजकीयसाहाय्यं द्वाभ्यां वर्षाभ्यामेव स्वीकृतमभूत्, तथापि कार्यस्यास्य गौरवं जानानैः संचालकमहोदयैरेकवर्षाय साहाय्यं परिवर्धितम् । एवं राजस्थानसंस्कृतशिक्षाविभागस्य महता साहाय्येनास्य ग्रन्थस्य सम्पादन-कार्यस्य त्रिभिर्वर्षैर्मया पूर्तिर्विहिता ।

**प्रकाशनकार्ये साहाय्यम्**—एतादृशस्य महतो ग्रन्थस्य प्रकाशनमप्यति-व्ययसाध्यं भवति । तावद् व्ययीकर्तुं मादृशोऽकिञ्चनो जनो न कथमपि समर्थः । अतोऽस्य ग्रन्थस्य प्रकाशनकर्मणि सहायतार्थं केन्द्रीयशिक्षायुवक-सेवामन्त्रालयस्य संस्कृतविभागाध्यक्षेभ्यः २०२५ वैक्रमाब्दे प्रतिवेदनं प्रेषितम् । संस्कृतविभागाध्यक्षैः सहायतानिर्णायकसमितेश्चान्यैः सदस्यवर्यैरस्य कार्य-स्योपयोगितां महत्त्वं च विज्ञाय प्रकाशनकर्मणि साहाय्यमुररी कृतम् ।

**श्रीरामलालकपूरन्यास (ट्रस्ट) स्य महान् सहयोगः**—सस्वरस्य वैदिक-ग्रन्थस्य मुद्रणव्यवस्था भारतस्य राजधान्यां विद्यमानेषु अनेकेषु बृहन्मुद्रणालयेषु क्वचिदपि नास्ति । दूरदेशे च मुद्रणकार्ये महान् विलम्बो जायते । अतो मया श्रीरामलालकपूरन्यासाधिकारिभ्यो निवेदितं यत् स्वकीये नवस्थापिते मुद्रणा-

नयेऽस्य ग्रन्थस्य मुद्रणव्यवस्थां कुर्वन्त्विति । तैर्महतौदार्य्येण पञ्चसहस्रमुद्रमितं धनं व्ययीकृत्य वैदिकग्रन्थप्रकाशनयोग्यानि द्विविधानि महार्घाणि सस्वराणि मुद्राक्षराणि (टाइप) मुम्बईनगरस्थनिर्णयसागरसंस्थातः परिक्रीयाऽस्य ग्रन्थस्य मुद्रणे महत्साहाय्यमाचरितम् ।

## कृतज्ञता-प्रकाशनम्

१—श्रीमतां पण्डितमदनमोहनव्यासमहाभागानामहमत्यन्तं कृतज्ञोऽस्मि, यैरतिदुर्लभः सार्धपञ्चशतवर्षपुरातनः माध्यन्दिन-संहितायाः पदपाठस्य हस्तलेखो मह्यं प्रदत्तः ।

२—राजस्थानसंस्कृतशिक्षाविभागस्य तात्कालिकानां संचालकानां विद्वन्मूर्धन्यानां स्वर्गीयमाधवकृष्णशर्मणामतिशयं कृतज्ञोऽस्मि । यैरस्य ग्रन्थस्य सम्पादनाय स्वविभागात् त्रिवर्षं यावत् प्रतिमासं सार्धशतमुद्राणां साहाय्यं विहितम् ।

३—श्रीरामलालकपूरन्यासस्य (ट्रस्टस्य) अधिकारिणामप्यहमति कृतज्ञोऽस्मि, यैरस्य ग्रन्थस्य मुद्रणाय पञ्चसहस्रमुद्रा व्ययीकृत्य यथावद् व्यवस्था विहिता ।

४—अस्मन्मित्राणां श्रीमहेन्द्रशास्त्रिमहोदयानामप्यहं नितान्तं कृतज्ञोऽस्मि, यैरस्य महत्त्वपूर्णग्रन्थस्य मुद्रणपत्रशोधनं महता परिश्रमेण सम्पादितम्, तदनु च संशोधनपत्र-विधानार्थं समग्रो ग्रन्थः पुनरवलोकितः । यदि तेषामस्मिन् कर्मणि साहाय्यं नाभविष्यत्तर्ह्यस्य ग्रन्थस्य शुद्धं मुद्रणमसम्भवमेवासीत् । एतेषां साहाय्यस्य गौरवन्त्वनेनैव ज्ञातुं शक्यते, यदेषां सहयोगप्राप्तेः प्राग् यावन्ति पृष्ठानि मुद्रितान्यासन् तेषु मम दृष्टिदोषेण स्खलनान्यधिकान्यभूवन् ।

**नम्रनिवेदनम्**—अस्य ग्रन्थस्य सम्पादने वैदिकानां साम्प्रदायिकपाठस्य व्यवस्थापने महति प्रयत्ने कृतेऽपि ममाज्ञानात् प्रमादाद्वा क्वचित् स्खलनं संजातं स्यादिति नातिसम्भवम् । तदर्थं विद्वद्वरेण्याः वैदिकवाङ्मयस्य रक्षणे कृतपरिश्रमाः क्षमायाचनपुरःसरं प्रार्थ्यन्ते यन्ममाल्पज्ञस्य दोषान् संमार्ज्य ग्रन्थमिमं पठनपाठनकर्मण्युपयुज्य मामकीनं परिश्रमं सफलयन्तु, संशोधन-पत्रानुसारं च पूर्वं ग्रन्थं संशोध्य पठन्त्विति ।

सं० २०२८, ज्येष्ठ कृष्णा ३
सोनीपत (हरयाणा)

विदुषा वशंवदः
युधिष्ठिरो मीमांसकः

# माध्यन्दिन-पदपाठस्य विषय-सूची

विषयः पृष्ठसंख्या

### माध्यन्दिनपदपाठस्य सम्पादनकर्मण्युपयुक्तानां

# हस्तलिखितानां मुद्रितानां च ग्रन्थानां परिचयः

माध्यन्दिनपदपाठस्यास्य सम्पादनकर्मणि विभिन्नस्थानीया ये ये हस्तलेखा मुद्रिता वा ग्रन्था उपयुक्तास्तेषां परिचयोऽधस्तात् प्रस्तूयते—

## हस्तलिखिताः कोशाः

१. क—अयं हस्तलेखोऽस्माभिर् **'अजयमेरु'** (अजमेर) मण्डलान्तर्वर्तिनि **'केकड़ी'** नगरे निवसतां मित्रवर्याणां व्यासोपाह्वानां पण्डित **मदनमोहनमहोदयानां** कृपयाऽधिगतः। अस्य विवरणम्—

**आकारः**—४ × १० 'इञ्च' मितः।

**पङ्क्तयः**—प्रतिपृष्ठं ९ नवसंख्यामिताः।

**अक्षराणि**—प्रतिपङ्क्ति चत्वारिंशदक्षराणि प्रायेण।

**लिपिः**—प्राचीना देवनागरी।

**लेखनकालः**—१४७१ तमो वैक्रमाब्दः, १३३६ तमः शकाब्दः।

**पत्राणि**—पूर्वार्धे भूरामचन्द्र (१३१) मितानि, उत्तरार्धे ऋषिद्वीप (७७) मितानि। आहत्योभयोर्भागयोर् २०८ अष्टोत्तरद्विशतमितानि पत्राणि सन्ति।

**अन्त्यपाठः**—पूर्वार्धस्यान्त इत्थं पाठ उपलभ्यते—

"शुभं भवतु मंगलं॥ संवत् १४७१ वर्षे शाके १३३६ बहमेने[1]"।

---

१. 'वहमाने' इति शुद्धः पाठो द्रष्टव्यः। उत्तरार्धस्यान्त्यपाठे शुद्धो निर्देश उपलभ्यते।

असाढ शुदि १५ भौमे । [1]अद्य हंसीघणी ग्रामवास्तव्य ज्योतिरामदेव-
सुत घोतिपीपासुत असेस्वरपठनार्थे लिषितम् । [2]य्यादृशं पुस्तकं दृष्ट्वा
तादृशं लिखितं मया । [2]य्यदि शुद्धमशुद्धं वा । मम दोषो न दीयते ॥१
तैलाद् रक्षेज्जलाद् रक्षेद् रक्षे शिथिलबन्धनात् । परहस्ते गता रक्षे ।
एवं वदति पुस्तिकं ॥ शांति भवतु । गुरुभ्यो नमः । परमगुरुभ्यो नमः ।"

उत्तरार्धस्यान्ते त्वित्थं पठ्यते—

"समाप्तम् । शिवमस्तु । य्यादृशं पुस्तकं दृष्ट्वा तादृशं लिखित-
म्मया । य्यदि शुद्धमशुद्धम्वा । मम दोषो न दीयते ॥१ संवत् काला-
तीत विक्रमसम्वत् १४७१ वर्षे शाके १३३६ वहमाने । सींघणी-
ग्राम्यवास्तव्य ज्योतिरामदेवशुत ज्योतिपीपाशुत अमरेश्वरपठनार्थे
लिषितं । शुभं भवतु मंगलं । भग्नपृष्ठकटिग्रीवा । दिव्यदृष्टिरने-
कधा । कष्टेन लिखितं चेदं । य्यत्नेन प्रतिपालयेत ॥३ तैलाद्रक्ष
जलाद्रक्ष । रक्षे शिथिलबन्धनात् । मूर्षहस्ते गता रक्षे । एवं वदति
पुस्तकम् । हरसूर उपाध्याय गुरुनमस्कृत्य येनेदं पुस्तकं ददौ ।"

प्रत्यध्यायमन्ते पाठनिर्देशः—अस्मिन् कोशे प्रत्यध्यायमन्त तद्इत्थं
पाठ उपलभ्यते—

'इति श्री व्वाजशनेयसंहितायां पदपाठने प्रथमोध्यायः ।'

एवमेवाऽऽत्रिंशदध्यायान्तं पाठ उपलभ्यते । तत्र प्रायेण
'व्वाजसनेयीसंहितायां' 'पदपाठेन' 'पदेन' वा इत्येवं पाठभेदमात्रमुप-
लभ्यते । एकत्रिंशदध्यायादारभ्याऽऽचत्वरिंशदध्यायान्तं दशस्वध्यायेषु
'शाकल्य कृते[3]पदे' इत्येवं विशिष्टः पाठो दृश्यते । तद्यथा—

"इति श्रीव्वाजसनेयी-संहितायां शाकल्यकृते पदेन एकत्रिंशोध्यायः ।"

---

१. अस्याः पङ्क्त्या मूलपाठः पत्रघर्षणादपमृष्टः, तदुपरि केनचिदव-
कालजेन लेखकेन अयं पाठो लिखितः । पुनर्लिखितेऽस्मिन् पाठे ग्रामादिनामानि
भ्रष्टानि । शुद्धनामानि उत्तरार्धस्यान्ते निर्दिष्टे पाठे द्रष्टव्यानि ।

२. याज्ञवल्क्यशिक्षायां पदादेर्यकारवकारयोर्गुरुत्वमुपदिष्टम् ।
वैदिका पदादेर्वकारस्प गुरुत्वद्योतनाय यथा 'व्व' इत्येवं निर्दिशन्ति तथैवात्र
हस्तलेखे यकारस्य गुरुत्वद्योतनाय यकारोऽपि 'य्य' इत्येवं लिख्यते ।

३. अस्ति कलकत्तानगरस्थे 'रायल एशियाटिक सोसायटी'नाम्नि
पुस्तकालये माध्यन्दिनपदपाठस्यैको हस्तलेखः, तस्यान्तेऽपि 'शाकल्य कृते'
इति पाठो दृश्यते । अस्य विवरणमग्रे यथास्थानं द्रष्टव्यम् ।

"इति श्री व्वाजसनेयीसंहितायां शाकल्यकृते पदे चत्वारिंशोऽध्यायः ।"

**लेखः**—सम्पूर्णोऽप्ययं कोश एकेनैव लेखकेन लिखितो वर्तते । मध्ये मध्ये क्वचित् जीर्णेषु पत्रांशेषु पत्रान्तरं संयोज्य लेखकान्तरेण कृता पाठपूर्तिरुपलभ्यते । हस्तलेखोऽयं प्रायेण शुद्धो वर्त्तते ।

**अक्षरविन्यासः**—कोशस्यातिप्राचीनत्वात् केषाञ्चिद् वर्णानां लेखविन्यासो भिन्नप्रकारक उपलभ्यते । तत्र सन्ध्यक्षराणामुपरितना मात्रा वङ्गलिपिवत् पुरस्तान्निर्दिश्यते । तद्यथा—

**ाद ावा वः=देवो वः ।**

**ात्रे ष्टु ाभ न=त्रैष्टुभेन ।**

**ाद्योः=द्यौः ।**

इमां मात्रानिर्देशपद्धतिमाधुनिका विपश्चितः **'पृष्ठमात्रा'** पदेन व्यवहरन्ति । वयं त्वस्याः पद्धतेः कृते **पूर्वमात्रा प्राङ्‌मात्रा** पदस्य वा व्यवहार उचित इति मनुमः । एषा मात्रानिर्देशपद्धतिश्चतुः शतवर्षेभ्यः प्राचीनेषु देवनागराक्षरलिखितेषु ग्रन्थेषूपलभ्यते ।

**वैशिष्टयम्**—अस्मिन् कोशे बहुविधं वैशिष्टयमुपलभ्यते । तत्र द्वित्रिस्थानवर्जं सर्वत्रैवास्मिन् हस्तलेखे मन्त्रपाठानुसारं सकलपदानां पाठ उपन्यस्यते । अन्येषु पदग्रन्थेषु पुनरुक्तानां पदानां मन्त्राणां च पदानि लुप्यन्ते[1] (पदपाठे न पठयन्ते) । तल्लोपाच्च मन्त्रकण्डिकासंख्याभिः सह पदकण्डिकासंख्यानां बहुधा भेदः संजायते । इह पुनरुक्तानां पदानामपि सकलपाठनिर्देशान्न कण्डिकासंख्या मन्त्रसंख्यातो भिद्यते । क्वचित् पुनरुक्तमन्त्रपाठे प्रतीकनिर्देशं कृत्वा सकलपाठलेखनाय स्थानं रिक्तमप्युपलभ्यते ।

एतदतिरिक्तमत्र कोशे यत्किञ्चिद्वैशिष्टयमुपलभ्यते तत्सर्वं **'माध्यन्दिनपदपाठस्य चतुर्विधः पाठः'** इत्यस्मिन् प्रकरणे विस्तरेण विहितं, तत्तत्रैव द्रष्टव्यम् ।

२. ख—अयं हस्तलेखः पूनानगरस्थाद् **भण्डारकर प्राच्यविद्याशोधप्रतिष्ठानाद्** उपलब्धः । अयं कोशस्तत्र संग्रहे 'क्रमाङ्क ८, सन् १८८१, ८२' इत्येवं निर्दिष्टो वर्तते । अस्य विवरणम्—

**आकारः**—२$\frac{१}{२}$ × ११$\frac{१}{२}$ 'इञ्च' मितः ।

---

१. वैदिका अस्य निर्देशं **'गलितपाठ'** शब्देन कुर्वन्ति ।

**पङ्क्तयः**—प्रतिपृष्ठं ४ चतस्रः ।

**अक्षराणि**—प्रतिपङ्क्ति द्वात्रिंशत्त्रयस्त्रिंशद् वा प्रायेण ।

**लिपिः**—देवनागरी ।

**लेखनकालः**—१६६१ तमो वैक्रमाब्दः, १५५६ तमः शकाब्दः ।

**पत्राणि**—पूर्वार्धे २४३, उत्तरार्धे १७८; आहृत्य ४२१ एकविंशत्युत्तरचतुःशतानि सन्ति ।

**अन्त्यपाठः**—पूर्वार्धस्यान्त इत्थं पाठ उपलभ्यते--

**"इति पदे विंशतितमोऽध्यायः ।। संवत् १६६१ व शाके १५५६ श्रावणवदि १० लिखितं ।। श्रीरस्तु ।। ॐ नरसिंहाय नमः ।। श्री रामाय नमः ।। ॐ नमः कृष्णाय नमः ।। ॐ नमः श्री विन्दुमाधवाय नमः ।। ॐ नमः विश्वेश्वराय नमः ।।**

**श्री रामाय नमः ।। श्री कृष्णाय नमः । प्रथमविंशतिपदानि २० ।।"**

उत्तरार्धस्यान्ते—

**"इति श्रीवाजसनेयसंहितापदे चत्वारिंशतितमोध्या ।। संवत् १६६१ वर्षे मागसरमासे कृष्णपक्षे द्वितीयाया तिथै । श्रीरामाय नमः ।। ।। श्रीरामाय नमः पदपुस्तकं समाप्तं श्रीबिन्दुमाधवाय नम ।"**

**प्रत्यध्यायमन्ते पाठनिर्देशः**—

**"इति वाजसनेयसंहितायां दीर्घपाठे पदे प्रथमोध्यायः ।**

**इति वाजसनीये संहितायाः पदे द्वितीयोध्यायः ।**

**इति वाजसनीये संहिताया दीर्घपाठे तृतीयोध्यायः ।**

**इति वाजसनेय पदसंहितायां एकविंशोध्यायः ।"**

एवमन्यत्रापि द्रष्टव्यः ।

**लेखः**—पूर्वार्धे ४८ अष्टाचत्वारिंशत्पत्रपर्यन्तस्यैको लेखकः, इतोऽग्रे आग्रन्थसमाप्ति (पूर्वार्धे चोत्तरार्धे च) यावद् अपरो लेखकः वर्णविन्यासः साधुतरः, लेखोऽपि प्रायेण शुद्धः ।

**३. ग**—अयमपि हस्तलेखः पूर्वस्मादेव ग्रन्थागारादुपलब्धः । अयं कोशस्तत्र संग्रहे 'क्रमाङ्क ४४, सन् १८९२-९५' इत्येवं निर्दिष्टः । अस्य विवरणम्—

**आकारः**—४×८१/२ 'इञ्च' मितः ।

**पङ्क्तयः**—प्रतिपृष्ठं षट् सप्त वा ।

**अक्षराणि**—प्रतिपङ्क्ति २६-२८ संख्याकानि ।

**लिपिः**—देवनागरी ।

**लेखनकालः**—१८५० तमो वैक्रमाब्दः, १७१५ शकाब्दः ।

**पत्राणिः**—पूर्वार्धे १७४, उत्तरार्धे १४१; आहृत्य ३१५ पञ्चदशोत्तरशतत्रयमितानि ।

**अन्त्यपाठः**—पूर्वार्धस्यान्ते १७४ तमे पत्र इत्थं पाठ उपलभ्यते—

**"इति संहितापदे विंशतितमोऽध्यायः ॥२॥ छ ॥ ओ३म् । इमम् । मे । संवत् १८५० । का शाके १७१५ मार्गशिरमासे कृष्णपक्षे १० गुरौ ब्रह्मपुरी मध्ये वास्तव्य उदीच्य ज्ञातीय आ० जीवणजीसुत मोतीरामेण संहितायाः पदानि आत्मपठनार्थं लिखितानि ॥ परोपकारार्थं च ॥ चिरंजीवभाई संपत्रामस्येदं पुस्तकम् ॥ शुभं भवतु ॥ कल्याणमस्तु ॥"**

उत्तरार्धस्यान्ते १४१ तमे पत्रे—

**"...असौ । अहम् ॥१४॥ हरिः ओम्३ ॥ खम् । ब्रह्म ॥ इति वाजसनेयसंहिता पदे च... ।"**

इतोऽग्रे पत्रस्य नाशात् पाठः खण्डितो वर्तते ।

**प्रत्यध्यायमन्ते पाठनिर्देशः**—

**"इति पदे प्रथमोध्यायः ।**

**इति संहितापदे विंशतितमोऽध्यायः ।**

**इति वाजसनेयपदे संहितायां एकविंशोध्यायः ।**

**इति वाजसनेय संहितायां पदे चतुस्त्रिंशतिमोध्यायः ।"**

इत्येवं प्रकारो द्रष्टव्यः ।

**लेखः**—अयं सम्पूर्णोऽपि कोश एकेनैव लेखकेन लिखितो वर्तते । ३५ पञ्चत्रिंशत्तमोऽध्यायः स्वरचिह्नविरहितो वर्तते ।

**४. घ**—अयमपि कोशो भण्डारकरप्रतिष्ठानत एवास्माभिर्लब्धः । अयं कोशस्तत्र संग्रहे 'क्रमाङ्क ३५३, सन् १८८३-८४' इत्येवं निर्दिष्टो वर्तते । अस्य विवरणम्—

आकारः—४×८ 'इञ्च' मितः ।

पङ्क्तयः—प्रतिपृष्ठं सप्त वाऽष्टौ वा ।

अक्षराणि—प्रतिपङ्क्ति २०-२४ संख्यामितानि ।

लिपिः—देवनागरी ।

लेखनकालः—१७४१ तमः शकाब्दः (=१८७६ वैक्रमाब्दः)।

पत्राणि—सर्वाणि संकलय्य ३२७ सप्तविंशत्युत्तरशतत्रयमितानि ।

अन्त्यपाठः—एकोनविंशस्याध्यायस्यान्ते त्वयं पाठ उपलभ्यते—

"इति पदे संहितायां एकोनविंशोध्यायः । ३१११ ।। श्रीराम् ।। छ ।। श्री गंगागोदावरी प्रसन् ।। छ ।। श्री कृष्णाबाई प्रसन्न् ।। श्री रामचन्द्रप्र । सन् ।। छ ।। कृष्णार्पणमस्तु ।। श्री वेदमूर्तिप्रसन्न् ।"

उत्तरार्धस्यान्ते—

"......असौ । ब्रह्म ।।१४।। ओम् । खम् ।। ब्रह्म ।।१५।। इति-वाजसनेयसंहितायां पदेषु चत्वारिंशतिमोऽध्यायः । शक १७४०१ प्रमाथिनाम संवत्सरे भाद्रपदबद्धतृतीया सौम्यवासरे तद्दिने तृतीय-प्रहरे इदं पुस्तकं समाप्तम् ।"

प्रत्यध्यायमन्ते पाठनिर्देशः—

"इति वाजसनेय संहितायां पदे प्रथमोध्यायः ।

इति वाजसनेयपदे चतुर्दशोध्यायः ।

इति पदे संहितायामेकोनविंशोध्यायः ।

इति वाजसनेयपदसंहिताया एकविंशोध्यायः ।"

लेखः—अयं कोशो मध्ये मध्ये बहुशः खण्डितः सन् प्रपूरित इत्यनुमीयते । अत एवात्र बहुरूपाणि पत्राणि बहूनां लेखकानां चाक्षरविन्यासो दृश्यते । यद्वाऽयं कोशो बहुभिः खण्डितैः कोशैः प्रपूरितः स्यात् ।

५. ङ—अयं कोशो वाराणसेयसंस्कृतविश्वविद्यालयस्थे सरस्वतीभवनसंग्रहे विद्यते । अस्य कोशस्य प्रवेशसंख्या ४१२११, संख्या च ००१०५२ वतते । अस्य विवरणम्—

**आकारः**—४·३ × ९·१ 'इञ्च' मितः ।

**पङ्क्तयः**—प्रतिपृष्ठं प्रायेण १६ षोडश ।

**अक्षराणि**—प्रतिपङ्क्ति प्रायेण १८ अष्टादश ।

**लिपिः**—देवनागरी ।

**पत्राणि**—३०१ संख्यामितानि । पूर्वार्धस्येदं पुस्तकम् ।

**अन्त्यपाठः**—कोशान्तेऽयं पाठ उपलभ्यते—

**"इति वाजसनेयसंहितायां दीर्घपाठे विंशतिमोऽध्यायः ।**

**विशेषः**—अयं कोशः पूर्वार्धस्यैव वर्तते । लेखनकालोऽत्र निर्दिष्टो नास्ति । यद्ययं कोशोऽग्रे निर्दिष्टस्य कोशस्यैव पूर्वभागः स्यात्, तथा सति अस्य लेखनकालः १९३५ तमो वैक्रमाब्दः, १८०० तमः शकाब्दश्च भवितुमर्हति ।

६. **च**—अयं कोशोऽपि **वाराणसेयसंस्कृतविश्वविद्यालयस्थ**-सरस्वतीभवनस्थ एव । अस्य प्रवेशसंख्या ४१२१२, संख्या च ००१०५३ वर्तते । अस्य विवरणम्—

**आकारः**—४·२ × ९·१ 'इञ्च' मितः ।

**पङ्क्तयः**—प्रतिपृष्ठं प्रायेण १६ षोडश ।

**अक्षराणि**—प्रतिपङ्क्ति प्रायेण १८ अष्टादश ।

**लिपिः**—देवनागरी ।

**लेखनकालः**—१९३५ तमो वैक्रमाब्द; १८०० तमः शकाब्दः ।

**पत्राणि**—८६ षडशीतितमानि । उत्तरार्धस्येदं पुस्तकम्

**अन्त्यपाठः**—अस्यान्ते त्वयं पाठ उपलभ्यते—

**"इति वाजसनेयसंहितायां दीर्घपाठे पदे चत्वारिंश्शद्दशमोऽध्यायः ॥४०॥ संवत् १९३५ शाके १८०० आश्विन कृष्ण ११ भानुवासरे ।"**

**विशेषः**—पत्राणां सदृशाकाराद् अक्षरविन्यासस्य च सादृश्यादयं कोशः पूर्वनिर्दिष्टस्यैव कोशस्योत्तरभागः प्रतीयते । संग्रहसूची-निर्मातुः प्रमादात्, संग्रहस्थकोशानां वा संख्यापरिवृद्ध्यर्थमेक एव-कोशो विभज्य द्विर्निर्दिष्टः ।

७. छ—अयमपि कोशः वाराणसेयसंस्कृतविश्वविद्यालयीय-सरस्वतीभवनस्थः। अस्य प्रवेशसंख्या ६८५०, संख्या च ००१०६२ वर्तते।

अस्मिन् कोशे स्वल्यान्येव पत्राणि सन्ति, पदपाठोऽपि स्वर-विहीन एव। अतोऽयमुपयोगानर्ह एव समपद्यत।

८. ज—अयं कोशोऽस्माभिर्होशियारपुरस्थाद् विश्वेश्वरानन्द-शोधसंस्थातः समधिगतः। अयं तत्संग्रहे ७९ एकोनाशीतिसंख्यायां निर्दिष्टो वर्तते। अस्य विवरणम्—

**आकारः**—४×९ 'इञ्च' मितः।

**पङ्क्तयः**—प्रतिपृष्ठं ८ अष्टौ।

**अक्षराणि**—प्रतिपङ्क्ति पञ्चत्रिंशत् प्रायेण।

**लिपिः**—देवनागरी।

**पत्राणि**—अयं कोश उत्तरार्धमात्रस्यैव विद्यते। आदौ २, ३, ४ संख्याकानि पत्राणि लुप्तानि सन्ति, एवमन्तेऽपि ८५ पञ्चाशीति पत्रादग्रे चत्वारिंशदध्यायस्य द्वादशमन्त्रभागमारभ्य समाप्तिपर्यन्तो भागो विलुप्तो वर्तते।

**लेखनकालः**—अस्य कोशस्यान्त्यपत्रस्यानुपलम्भाद् लेखन-कालोऽज्ञात एवास्ति। तथाप्यक्षरविन्यासात् त्रिशतवर्षपूर्वलिखितोऽयं कोशः प्रतिभाति।

**लेखः**—अस्मिन् कोशे लेखन्याः स्थूलसूक्ष्मभावाद् अक्षराणां स्थूलसूक्ष्मभावेऽपि एकेनैव लेखकेनायं समग्रः कोशो लिखित इत्यक्षर-विन्यासात् स्पष्टं प्रतिभाति।

**प्रत्यध्यायमन्ते** पाठनिर्देशः—

**"इति पदसंहितायामेकविंशतिमोध्यायः।**

**इति पदसंहिताया एकोनत्रिंशतिमोध्यायः।**

**इति पदसंहिताया एकोनचत्वारिंशतिमोध्यायः"।**

**लेखनपद्धतिः**—अस्मिन् कोशे पदादौ यकारवकारौ सर्वत्र 'य' 'व' इत्येवं सामान्यरूपेणैव लिखितौ, केवलम् एकत्रिंशदध्यायस्य षट्सु मन्त्रेषु पदादिर्यकारः 'य' इत्येवं लिखितो दृश्यते।

९. **भ**--अयं कोशः **कलकत्तानगरस्थे 'रायल एशियाटिक सोसाइटी'**नाम्नि पुस्तकालये वर्तते । अयमस्माभिस्तत्रैव गत्वा समवलोकि । अयं कोशस्तत्संग्रहे १६६०तमे क्रमाङ्के निर्दिष्टो विद्यते । अस्य विवरणम्—

१. अयं हस्तलेख **उत्तरार्धमात्र**स्यैव विद्यते । अस्मिन् ग्रन्थेऽष्टाविंशत्यध्यायस्य द्वितीयमन्त्रं यावत् (४४ पत्रं यावद्) स्वराङ्कमुपलभ्यते, नेतः परम् ।

२. अस्मिन् कोशे १०२ द्व्युत्तरशतमितानि पत्राणि सन्ति ।

३. कोशान्ते च **'इति शाकल्यकृतपदे विंशतिमोऽध्यायः'** इत्येवं पाठ उपलभ्यते ।

अत्र चत्वारिंशत्तमोऽध्याय एवोत्तरार्धस्याध्यायसंख्यामाश्रित्य विंशतितमया संख्ययाऽभिहितो ज्ञेयः ।

## मुद्रित-पदग्रन्थाः

१०. **ञ**—काश्यां गौरीशयन्त्रालये मुद्रितः पत्राकारः स्थूलाक्षरयुतः । अस्मिन् कोशे संयुक्तव्यञ्जनानां प्रायेण यथायथं द्वित्वनिर्देशः, यकारवकारयोश्चापि साम्प्रदायिकनिर्देश उपलभ्यते । स्वरसंचारे केषुचिद् विशिष्टेषु स्थलेषु भेद उपलभ्यते । अयं भेदः **'माध्यन्दिनपदपाठपरिचय'**प्रकरणे **'माध्यन्दिनपदपाठस्य चतुर्विधः पाठः'** इत्यस्मिन् प्रकरणे च निरूपितः, स तत एवावगन्तव्यः । अस्माभिस्त्वयं स्वरसंचारभेदो यथास्थानं **'इति काशिकः पाठः'** इत्येवं रूपेण टिप्पण्यां संगृहीतः । अयं कोशः प्रायेणाशुद्धिबहुलो वर्तते ।

११. **ट**—अयं पदपाठग्रन्थो मुम्बय्यां तत्त्वविवेचक-यन्त्रालये मुद्रितः पत्राकारो मध्यमाक्षरयुतः । अस्मिन् पदपाठे प्रायेण रेफोत्तरवर्तिन एव व्यञ्जनस्य द्वित्वमुपलभ्यते । अयं ग्रन्थः काशीमुद्रितापेक्षया शुद्धः ।

१२. **ठ**—श्रीमद्दयानन्दसरस्वतीप्रणीते यजुर्वेदभाष्ये मुद्रितः पदपाठः । अस्य प्रथमं तृतीयं च संस्करणमस्माभिरिहोपयुक्तम् । अनयोः संस्करणयोः क्वचिद् भेदोऽपि दृश्यते । इह पदपाठे लुप्तानि सर्वाणि पदानि मन्त्रपाठवत् यथास्थानं पठितानि । अपूरितेषु पदेषु क्वचित् स्वरराहित्यं, स्वरान्यथानिर्देशः, अवग्रहाभावः, अव-

ग्रहान्यथानिर्देशः, इतिपदेनावेष्टनाभाश्चेत्येवं रूपा लिपिकृतो बहवो दोषा उपलभ्यन्ते ।

१३. ङ—अयं पदपाठः श्रीपण्डितब्रह्मदत्तजिज्ञासुभिः संशोधिते स्वकृतविवरणेन परिबृंहिते श्रीमद्दयानन्दसरस्वतीप्रणीतयजुर्वेदभाष्ये (प्रथमे भागे) मुद्रितो ज्ञेयः । अस्य ग्रन्थस्य काश्यां मुद्रितं द्वितीयं संस्करणमिहोपयुक्तम् । यद्यप्यत्र संयुक्तानां वर्णानां द्वित्वपाठः, पदाद्योश्च यकारवकारयोः साम्प्रदायिकपद्धत्या निर्देशो नास्ति, तथाऽप्यत्र 'ठ' ग्रन्थस्था लिपिकरदोषा न सन्ति । स्वरसंचारे चायं माध्यन्दिनपाठस्य काशिकं (काश्यां मुद्रितं) पाठमनुसरति ।

इत्युपयुक्तानां कोशानां विवरणं समाप्तम् ॥

# वैदिकपदपाठानां तुलनात्मकमध्ययनम्

वैदिकवाङ्मये संहिताग्रन्थानामनन्तरं तत्पदग्रन्थानां विद्यते विशिष्टं स्थानमित्यत्र नास्ति कश्चिद विवादावसरः। इमे हि पदग्रन्थाः संहितापाठं विच्छिद्य पदस्वरूपप्रदर्शनेन, अवग्रहद्वारा प्रकृतिप्रत्ययविभागनिदर्शनेन पूर्वोत्तरपदविज्ञापनेन च मन्त्रार्थपरिज्ञाने महान्तमुपकारं विदधतीति सर्व एव वैदिका विद्वांसः स्वीकुर्वते। एतेन पदग्रन्थाः संहितानां संक्षिप्ततमा आद्या व्याख्याग्रन्था इत्यपि शक्यते निःसंशयं वक्तुम्।

तत्र प्रतिसंहितं पदप्रवचनप्रकारः प्रायेण भिद्यते। तत्तत्संहितानां पदप्रवचननियमास्तत्तत्प्रातिशाख्यग्रन्थेषु विस्तरेण प्रदर्शिताः सन्ति। तदनुसारं पदपाठानां तुलनात्मकमध्ययनं तात्कालिकानां विविधव्याकरणनियमानां परिज्ञाने महत् साहाय्यं विदधाति। बहुत्र च तादृशां संस्कृतभाषातो विलुप्तानां पदानां प्रकृत्यन्तराणां वा सद्भावं प्रदर्शयति, येषां कृते पाणिन्यादयो वैयाकरणा आदेशागमवर्णविकारान् उपदिशन्ति[1]।

सर्वेषु पदग्रन्थेषु सामपदपाठो महद् वैलक्षण्यं भजते। यत्रान्ये पदकारा ऐकमत्येन अविभागार्हं पदं मन्वाना अवग्रहं न प्रदर्शयन्ति, सामपदकारस्तु तत्रापि प्रायेणावग्रहं प्रदर्शयति। सामपदग्रन्थस्येदं वैशिष्ट्यमुपरिष्टाद् यथास्थानं निदर्शयिष्यते। इह तावत् सामान्येन पदग्रन्थानां प्रवचनप्रकारो यथायथं प्रविभज्य प्रदर्श्यते—

---

१. पाणिनीयव्याकरणे प्रकृत्यंशे निर्दिशिता लोपागमादेशादयो लुप्तानां प्रकृत्यन्तराणां ज्ञापका, इत्यस्मिन् विषये आस्माकीनः 'आदिभाषायां प्रयुज्यमानानामपाणिनीयप्रयोगाणां साधुत्वविवेचनम्' नामा निबन्धो द्रष्टव्यः। अयं वेदवाण्याश्चतुर्दशवर्षस्य प्रथमद्वितीयचतुर्थपञ्चषष्ठाङ्केषु प्रकाशितः।

## १—अवगृह्यमाणपदेषु प्रवचनप्रकारः

प्रथमं तावद् अवगृह्यमाणानां पदानां प्रवचनप्रकार उच्यते—

क—ऋगथर्वपदेषु सावग्रहं पदम् अवगृह्यैव सकृत् प्रदर्श्यते। तद्यथा—

**पुरःऽहितम्** । ऋ० १।१।१ ॥ **चित्रश्रवःऽतमः** । ऋ० १।१।५ ॥
**त्रिऽसप्ताः** । अ० १।१।१ ॥ **परिऽयन्ति** । अ० १।१।१ ॥

ख—शुक्लकृष्णयजुःपदपाठेषु अवगृह्यमाणं पदमितिना पूर्वं निर्दिश्य पश्चादवगृह्यते। तद्यथा—

[1]**श्रेष्ठतमायेतिश्रेष्ठ तमाय** । शु० य० १।१ ॥

**प्रजावतीरितिप्रजा वतीः** । शु० य० १।१ ॥

**श्रेष्ठतमायेतिश्रेष्ठ तमाय** । तै० सं० १।१ ॥

**प्रजावतीरितिप्रजा वतीः** । तै० सं० १।१ ॥

मैत्रायणीयपदग्रन्थेऽपि द्विरावृत्तिर्भवति, परन्तु तत्रैकः कोशोऽवग्रहोत्तरभागस्थस्वरनिर्देशे शुक्लयजुषः पदपाठमनुसरति, अपरश्च तैत्तिरीयपदपाठम्। तद्यथा—

[2]**श्रेष्ठतमायेतिश्रेष्ठ तमाय । श्रेष्ठतमायेतिश्रेष्ठ तमाय** ।
मै० १।१।१ ॥

ग—सामपदग्रन्थेऽप्यवग्रहनिदर्शनाय द्विरावृत्तिः क्रियते, परन्तु तत्रावगृह्यमाणेन मन्त्रपदेन सहेतिपदं न पठ्यते। तद्यथा—

**हव्यदातये हव्य दातये** । सा० पू० १।१।१ ॥

१. माध्यन्दिनपदपाठे संहितेव व्यञ्जनानां द्विर्वचनरूपः यो यथायथं पाठ उपलभ्यते, तदपमृज्येह प्रदर्शनं लाघवाय ज्ञेयम्।

२. मैत्रायणीयस्वराङ्कनप्रकार ऋगथर्वयजुषां स्वराङ्कनप्रकाराद् भिद्यते। इह तु मैत्रायणीयपदनिदर्शनाय ऋग्यजुरथर्वसु सामान्येनादृतः स्वराङ्कनप्रकारः स्वीकृतो विस्पष्टार्थम्।

विश्ववेदसम् विश्व वेदसम् । स० पू० १।१।१ ॥

अत्रावग्रहकाले पूर्वभागान्ते वर्तमान उदात्तो विरामे वर्तमानोदात्त इव '२' द्व्यङ्केन[1] निर्दिश्यते, उत्तरभागश्च तैत्तिरीयपदवत् स्वतन्त्रपद इव पूर्वभागान्ते वर्तमानादुदात्तात् स्वरिताद्वा यथायोगं स्वरितत्वमैकश्रुत्यं वा न लभते ।

घ—इवपदप्रयोगे केचन पदकारा इवेन समासमाश्रित्यावग्रहं प्रदर्शयन्ति, अपरे 'इव' शब्दं स्वतन्त्रं पदं मन्यन्ते । तद्यथा—

**इवपदेन समासस्तावत्—**

पिताऽइव । ऋ० १।१।९; अथर्व० २।१३।१ ॥

पितेवेतिपिता इव । शु० य० ३।२४ ॥

पितेवेतिपिता इव, पितेवेतिपिता इव । मै० १।५ ॥

इह मैत्रायणीयपाठे पूर्ववदेव कोशभेदेनावग्रहोत्तरभागे द्विविधः स्वरसंचारो ज्ञेयः ।

**इवपदस्य स्वातन्त्र्यम्—**

पिता । इव । तै० सं० १।५।६ ॥

राजा । इव । तै० सं० १।२।१४ ॥

चर्म । इव । सा० पू० २।६।८ ॥

महिषी । इव । सा० पू० १।६।६ ॥

अत्रेदमपि ज्ञेयम्—सूत्रकारः पाणिनिरिवेन समासं नेच्छति, वार्तिककारस्तु '**इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च**' (वा० २।२।१८) इत्यनेन समासं विदधाति ।

---

१. द्र० अस्मदीया वैदिकस्वरमीमांसा । पृष्ठ २०३, सूत्र १६; पृष्ठ १५६, सूत्र ५३ ।

## २–प्रगृह्यत्वनिदर्शनप्रकारः

प्रगृह्यत्वनिदर्शनाय यद्यपि सर्वेषु पदग्रन्थेष्वितिना निर्देशः सामान्यरूपेणोपलभ्यते, तथापि प्रगृह्यत्वनिदर्शनप्रकारः पदग्रन्थेषु बहुधा भिद्यते—

क—ऋक्सामाथर्वतैत्तिरीयमैत्रायणपदपाठेषु यत्र केवला प्रगृह्य-संज्ञैव निदर्शनीया भवति, तत्र केवलमितिपदं परं प्रयुज्यते। तद्यथा—

**वायो इति** । ऋ० १।२।३; अ० ६।६८।१ ॥

**त्वे इति** । सा० पू० १।१।३ ॥ **अस्मे इति** । सा०पू० २।१।३ ॥

**विष्णो इति** । तै० १।१।३; मै० १।१।३ ॥

अत्रेदमपि ध्येयम्—तैत्तिरीयपदपाठे ओकारान्तं सम्बुद्ध्यन्तं पदं प्रगृह्यत्वमप्रगृह्यत्वं चोभयं लभते, तस्य व्याख्यानमनुपदं (ग-सन्दर्भे) द्रष्टव्यम्।

ख—शुक्लयजुषः पदपाठे प्रगृह्यत्वनिदर्शनाय मन्त्रपदमितिना निदर्श्य पुनरपि पठ्यते। तद्यथा—

**विष्णो इति विष्णो** । य० १।४॥

अयं प्रकारः प्रातिशाख्यकारैरुपस्थितपदेन स्मर्यते (द्र० का० प्रा० ४।९०)। पाणिनीयेऽपि '**अप्लुतवदुपस्थिते**' (अ० ६।१।१२५) इत्यस्मिन् सूत्रे तथैव व्यवहारो दृश्यते।

ग—तैत्तिरीये पदपाठे सम्बुद्ध्यन्तमोकारान्तं पदं प्रगृह्यत्व-मप्रगृह्यत्वं चोभयं लभते। तत्रेयं व्यवस्था—

यत्र मन्त्रपाठे सम्बुद्ध्यन्ताद् ओकारान्तात् पदात् परं व्यञ्जना-द्युत्तरपदं भवति, तत्र सम्बुद्धिनिमित्तकोऽयमोकार इति प्रदर्शनाय निरवग्रहं सावग्रहं चोभयरूपं पदमितिना संयोज्य प्रगृह्यत्वरूपेण प्रदर्श्यते। तद्यथा—

**निरवग्रहं पदम्—**

**विष्णो हव्यम्—विष्णो इति** । तै० १।१।३ ॥

**मोवग्रहं पदम्—**

शतक्रतो या—शतक्रतो इतिशत क्रतो ।

तै० १।६।१२ (१) ॥

यत्र तु मन्त्रपाठे सम्बुद्धिनिमित्तक ओकार उत्तरपदादिस्वरेण सन्धि लभते तत्र निरवग्रहं पदं विनेतिना पठ्यते, सावग्रहं च पदमितिना सन्धि लभते । तद्यथा—

**निरवग्रहं पदम्—**

विष्णवुत—विष्णो । तै० १।२।१३ ॥

**सावग्रहं पदम्—**

शतक्रतवुद्वंशम्—शतक्रतविर्तिशत-क्रतो ।

तै० १।६।१२ (३) ॥

कृशानवेते—कृशानवितिकृश-अनो । तै० १।२।७ ॥

घ—सामपदकारस्तु सम्बुद्ध्योकारान्तस्य पदस्य सर्वथा प्रगृह्यत्वं नेच्छति । तेन तत्रेतिकारो न प्रयुज्यते । तद्यथा—

विभावसो विभा वसो । सा० पू० १।६।६; ३।२।१० ॥

पुरूवसो पुरु वसो । सा० पू० ३।६।८ ॥

ङ—यत्र पदे प्रगृह्यत्वनिदर्शनेन सहावग्रहनिर्देशोऽपि कर्तव्यो भवति, तत्रेतिना प्रगृह्यत्वं निदर्श्य तत्पदं पुनरावर्त्यावग्रहः प्रदर्श्यते । तद्यथा—

द्रवत्पाणी इति द्रवत्ऽपाणी । ऋ० १।१।३ ॥

छन्दःपक्षे इति छन्दःऽपक्षे । अथर्व १।१।३ ॥

शतक्रतो इति शत-क्रतो[1] । तै० १।६।१२ (१) ॥

---

१. एतस्मिन् विषये पूर्वत्र (ङ-संदर्भे) विशेषेणोक्तं तदिहाप्यनुसन्धेयम् ।

**च**—साम्नः पदग्रन्थे तु यत्र प्रगृह्यत्वावग्रहत्वयोरेकस्मिन्नेव पदे निर्देश इष्यते, तत्र मन्त्रपदं यथावत् पठित्वा पुनरावृत्तौ पूर्वमवगृह्य चेतिना प्रगृह्यत्वं प्रदर्श्यते । तद्यथा—

१ २र   १ २र ३   १ २र
**विषुरूपे विषु रूपे इति** । सा० पू० १।८।३ ॥

१ २र   २ ३   १ २र
**अह्नी अ ह्नी इति** । सा० पू० १।८।३ ॥

अत्रेदमप्यवधेयम्—अन्ये पदकाराः '**अह्नी**' इत्येतत् पदं नावगृह्णन्ति । पदावग्रहविषये सामपदग्रन्थोऽन्यपदग्रन्थेभ्योऽत्यन्तं वैलक्षण्यं भजत इत्युक्तं पुरस्तात् । तस्य च निदर्शनमग्रे यथास्थानं करिष्यते ।

## ३—उपसर्ग-निर्देश-प्रकारः

संहितापाठे उपसर्गो द्विधा प्रयुज्यते—स्वतन्त्रपदत्वेन क्रियया समस्य च । तत्र यः समस्य प्रयुज्यते, तत्र तन्निर्देशे यथापदपाठं तत्तन्निर्देशप्रकार उपयुज्यते । यस्तु स्वतन्त्रपदत्वेन प्रयुज्यते, स ऋगथर्वसामशुक्लयजुषां पदपाठेष्वन्यस्वतन्त्रपदमिव पठ्यते, परन्तु तैत्तिरीयपदग्रन्थे स इतिना निर्दिश्यते । यत्र च तत्रैव द्वयोरुपसर्गयोः स्वतन्त्रपदत्वेन सहपाठ उपलभ्यते, तत्र पर इतिना संयुज्यते न पूर्वः । तद्यथा—

**एकोपसर्गस्य**—

**प्रेति** । तै० १।१।१ ॥ **अन्विति** । तै० १।२।३ ॥

**द्वयोरुपसर्गयोः**—

**संप्रयच्छति—सम् । प्रेति । यच्छति** । तै० ६।३।२ ॥

**अनुप्रेहि—अनु । प्रेति । इहि** । तै० १।१।१० ॥

मैत्रायणीयपदपाठस्यैकस्मिन् कोशे उपसर्गनिर्देशस्तैत्तिरीयपदग्रन्थस्येवेतिना निर्दिश्यतेऽपरस्मिन्नन्यपदग्रन्थवत् विनैवेतिना ।[1]

---

१. मैत्रायणीयपदकोशेष्वेके शुक्लयजुषः पदग्रन्थमनुसरन्ति, अपरे तैत्तिरीयपदपाठमित्युक्तं पुरस्तात् (पृष्ठ १२) ।

## ४—अवगृह्यमाणपदेषु स्वराङ्कनप्रकारः

अवगृह्यमाणपदेषु स्वराङ्कनविषयेऽपि पदग्रन्थेषु बहु वैमत्यमुपलभ्यते । तद्यथा—

क—ऋगथर्वशुक्लयजुषां पदपाठेष्ववगृह्यमाणपदस्योत्तरभागः पूर्वभागस्थं स्वरमनुरुध्य संहितावत् स्वरं लभते, अर्थात् पूर्वभागस्थमुदात्तं स्वरितं वाश्रित्य उत्तरभागस्थमनुदात्तं यथाक्रमं स्वरितत्वमैकश्रुत्यं च लभते । यथा—

**उदात्तात्स्वरितत्वम्—**

घृतऽप्रतीकः । ऋ० ३।१।१८ ॥ अथर्व० २।१३।१ ॥

प्रजावतीरितिप्रजा वतीः । शु० य० १।१ ॥

**स्वरितादैकश्रुत्यम्—**

अग्निऽस्वात्ताः । ऋ० १०।१५।११ ॥ अथर्व १८।३।४४ ॥

श्रेष्ठतमायेतिश्रेष्ठ तमाय । शु० य० १।१ ॥

इदमप्यवधेयम्—उक्तपदपाठेषु यत्र प्रगृह्यत्वावग्रहत्वादिनिर्देशाय इतिपदं पदग्रन्थेषु प्रयुज्यते तत्र यदि मन्त्रपदं सर्वानुदात्तं भवन्ति तत्र पूर्वोत्तरावुभावपि भागौ इतिपदस्य तकारोत्तरवर्तिनं स्वरितमिकारमाश्रित्यैकश्रुत्यं प्राप्नुतः । तद्यथा—

चित्रभानो इति चित्र भानो ।

ऋ० १।३।४ ॥ अ० २०।८४।३ ॥ शु० य० २०।८७ ॥

शतक्रतोऽइतिशत क्रतो । शु० य० ३।४६ (पदग्रन्थे[१] ३।४८)

ख—साम्नः पदग्रन्थे काण्वे तैत्तिरीये चावग्रहस्थलेषूत्तरभागस्य स्वतन्त्रपदत्वमाश्रित्य पूर्वभागनिमित्ता स्वरितत्वैकश्रुत्योः प्रवृत्तिरुतरभागे नोपलभ्यते । तद्यथा—

---

१. माध्यन्दिनपदपाठे पुनरुक्तानां पदानां लोपाद् यत्र मन्त्रपदकण्डिकासंख्यासु मिथो भेदो जायते तत्र उभयोः कण्डिकासंख्याऽत्र निर्दिष्टा ।

बृहदनीकः बृहत् अनीकः । सा० पू० १।६।१० ॥

वाजकर्मभिः वाज कर्मभिः । सा० पू० २।२।२ ॥

प्रजावतीरितिप्रजा वतीः । का० १।१; तै० १।१।१ ॥

श्रेष्ठतमायेतिश्रेष्ठ तमाय । का० १।१; तै० १।१।१ ॥

एतादृशेषु स्थलेषु मैत्रायणीयपदपाठस्यैकः कोशस्तैत्तिरीय-पदक्रममवरुणद्धि, अपरः शुक्लयजुष इत्युक्तं प्राक् ।

ग—अवगृह्यमाणपदेषु यत्रोत्तरभाग आद्युदात्तो भवति पूर्व-भागश्च सर्वानुदात्तस्तत्र शुक्लयजुषः पदपाठे संहितावत् स्वर-विधानमाश्रित्य पूर्वभागान्ते वर्त्तमानस्यानुदात्तस्य उत्तरभागादौ वर्तमानमुदात्तमाश्रित्य स्वरितत्वं (अष्टा० ८।४।६७) ऐकश्रुत्यं (अष्टा० १।२।४०) च न भवति, अर्थादनुदात्त एवावतिष्ठते । तैत्तिरीयपदपाठे तूत्तरभागस्य स्वतन्त्रपदत्वस्याऽऽश्रयणात् पूर्वभाग-स्यानुदात्तस्य स्वरितत्वमैकश्रुत्यं चोपलभ्यते । तद्यथा—

अनुष्टुप् । अनुस्तुबित्यनु स्तुप् ।

शु० यजु० ८।४७ (पदग्रन्थे ८।४१) ।

अनुष्टुबित्यनु स्तुप् । तै० १।८।१३ ॥

इह तैत्तिरीयपदग्रन्थे उत्तरभागस्य स्वतन्त्रपदत्वाश्रयणात् 'स्तु' इत्युदात्तपरेऽपि 'नु' इत्यनुदात्तस्यैकश्रुत्यं भवति, अर्थात् '**उदात्त-स्वरितपरस्य सन्नतरः**' (अष्टा० १।२।४०) इति नियमो न प्रवर्तते ।

घ—माध्यन्दिनपदपाठेषु यत्रावग्रहाद् उत्तरभागे उत्तम[1] उपो-त्तमो वोदात्तो भवति, तस्माच्च पूर्वं द्वौ वा त्रयो वाऽनुदात्ता भवन्ति, तादृशस्थलेषु एकस्मिन् कोशे[2] उदात्तपूर्वम् अनुदात्तं विहायाऽपरो-ऽपरौ वानुदात्तौ पूर्वभागस्थादुदात्तादैकश्रुत्यं लभेते । अपरेषु कोशेषु

---

१. त्रिप्रभृतीनामन्त्य उत्तम इत्युच्यते, तत्पूर्वश्चोपोत्तमः, द्र० काशिका ४।१।७८ ॥

२. अयं पाठः काशीमुद्रिते पदपाठे दृश्यते ।

तैत्तिरीयपदग्रन्थ इवोत्तरभागस्य स्वातन्त्र्यविवक्षया अनुदात्तत्व-मेवोपलभ्यते । तद्यथा--

**प्रथमपक्षे—**

विजानतऽइतिवि जानतः । मा० य० ४०।७ ॥

विचचक्षिरऽइतिवि चचक्षिरे । मा० य० ४०।१० ॥

परिवत्सरायेतिपरि वत्सराय ।

मा० य० ३०।१५ (पदपाठे ३०।१३) ॥

अत्र प्रथमोदाहरणे 'जा' इत्येकः, द्वितीयोदाहरणे '**चच**' इति द्वौ, तृतीयोदाहरणे '**व**' इत्येकोऽनुदात्त ऐकश्रुत्यं भजते ।

**अपरपक्षे—**

विजानातऽइतिवि जानतः । मा० य० ४०।७ ॥

विचचक्षिरऽइतिवि चचक्षिरे । मा० य० ४०।१० ॥

परिवत्सरायेतिपरि वत्सराय ।

मा० य० ३०।१५ (पदपाठे ३०।१३) ॥

अस्मिन् पाठे तैत्तिरीयपदग्रन्थ इवानुदात्ता एवावतिष्ठन्ते ।

अयं च स्वरभेदो माध्यन्दिनकोशेषु नियतरूपेणोपलभ्यते । विशेषविचारस्तु '**माध्यन्दिनपदपाठस्य वैशिष्टचम्**' इत्यस्मिन् प्रकरणे द्रष्टव्यः ।

ङ—काण्वपदपाठस्यैकः कोशोऽस्माभिः कलकत्तानगरस्थे रायलएशियाटिकसोसाइटीनाम्नि ग्रन्थालये दृष्टः । तस्मिन् कोशे आवेष्टने क्रियमाणे इतिशब्दस्यान्त्यात् स्वरितादिकारात् पराणि अवगृह्यमाणपदस्य पूर्वभागस्थान्यप्यनुदात्तानि ऐकश्रुत्यं न लभन्ते । तद्यथा—

सजातवनीतिसजात ऽ वनिं । १।६।३ ॥

कुमारीपुत्रमितिकुमारी ऽ पुत्रम् । ३४।१।६ ॥

धनुःकारमितिधनुः ऽ कारम् । ३४।१।७ ॥

**च**—काण्वपदपाठस्यैकस्मिन् कोशे उदात्तानुदात्तस्वरितानां त्रयाणामपि स्वराणां चिह्नान्युपलभ्यन्ते । अवग्रहोत्तरभागे च स तैत्तिरीयक्रममवरुणद्धि । तद्यथा—

**प्रजावतीरितिप्रजा वतीः** । १।१।२ ॥[1]

अत्राक्षरस्याधस्तान्निर्दिष्टं ^ चिह्नमनुदात्तं द्योतयति, उपरि-भागे वर्तमानं ˘ चिह्नम् उदात्तम्, एवमुपरिवर्तमानं ऽ चिह्नं स्वरितं च ।

मैत्रायणीयसंहितायाम् ऋग्वेदस्य कश्मीरपाठे चोदात्तस्वर-निर्देशायाक्षरस्युपरिभागे ⊥ इत्येवमूर्ध्वरेखा निर्दिश्यते (अन्यत्रेदं चिह्नं स्वरितार्थं व्यवह्रियते) ।

## ५—अवग्रहे विसंवादः

अवग्रहविषयेऽपि पदपाठेषु बहुत्र विसंवाद उपलभ्यते—

**क**—सन्ति कानिचिदेतादृंशि पदानि यान् केचन पदकारा अवगृह्णन्ति, अपरे नावगृह्णन्ति । तद्यथा—

**अधीवासमित्यधि वासम्** । तै० ४।६।९ ॥

**अधीवासम् । अधिवासमित्यधि वासम्** ।

शु० य० २५।३९ (पदपाठ २५।३७), [2]मै० ३।१६।१ ॥

ऋग्वेदे काण्वे च पदपाठे 'अधीवासम्' नावगृह्यते । द० ऋ० १।१४०।९; काण्व० २७।१४।१ ॥

**ख**—कतिपयान्येतादृशान्यपि पदानि सन्ति यत्रावग्रहं कुर्वन्तः केचन पदकारा पूर्वभागे विद्यमानं दीर्घत्वं छान्दसमितिमन्यमाना ह्रसयन्ति, अपरे तानि प्रकृतिदीर्घाणीति मत्वा न ह्रसयन्ति । तद्यथा—

---

१. द्र० वैदिकवाङ्मय का इतिहास 'वेदों के भाष्यकार' पृष्ठ १५७ ।

२. मैत्रायणीयपदग्रन्थस्योदाहरणान्यस्माभिः मैत्रायणीसंहितायाः 'लिपजिग' संस्करणे यत्र तत्र निर्दिष्टपदपाठेभ्यः संगृहीतानि ।

अशीतम । अशितमेत्यशि तम । मा० २।२० ॥

प्लीहाकर्णः । प्लीहुकर्णऽइतिप्लीहु कर्णः । मा० २४।४ ॥

शुण्ठाकर्णः । शुण्ठकर्णऽइतिशुण्ठ कर्णः । मा० २४।४ ॥

काण्वानां मते एषु पदेषु—

अशीतमेत्यशी तम । २५।१ ॥

प्लीहाकर्णऽइतिप्लीहा कर्णः । २६।१७ ॥

शुण्ठाकर्णऽइतिशुण्ठा कर्णः । २६।१७ ॥

इत्येवं दीर्घत्वमेव पूर्वपदस्येष्टम्, न ह्रस्वत्वम् । तदुक्तम्—

**अशीतमः—काण्वानामिदं प्रकृतिदीर्घम्, पदपाठेऽपि ह्रस्वाभावात्** । द्र० का० प्राति० ३।१२६ सूत्रेऽनन्तव्याख्यानम् ।

**'प्लीहाकर्णशुण्ठाकर्णौ प्रकृतिदीर्घौ'** इति कात्यायनप्रातिशाख्यवचनं व्याचक्षाणोऽनन्तभट्ट आह—**तेन काण्वव्यतिरिक्तानां केषाञ्चित् पदकाले ह्रस्वपाठो भवति—**

इदमप्यत्रावधेयम्, प्रातिशाख्यव्याख्याताऽनन्तभट्टः काण्वाशाखाध्यायी वर्तते इति ।

**ग**—कानिचित् पदान्येतादृशान्यपि विद्यन्ते यत्र वैयाकरणैरात्वादेशो विधीयते (द्र० अष्टा० ६।३।४५-४८), तान्यपि केचन पदकाराः प्रकृतिदीर्घाणीति मन्वानास्तथैवावग्रहयन्ति । तद्यथा—

महाव्रीहीणामितिमहा व्रीहिणाम् । तै० १।८।१२ ॥

अष्टाचत्वारिंशतः । अष्टाचत्वारिंशत इत्यष्टा चत्वारिंशतः ।
मै० २।२।६ ॥

**घ**—इत्थमेव तैत्तिरीयास्तत्राप्यवग्रहं निदर्शयन्ति यत्र वैयाकरणाः **'देवताद्वन्द्वे च'** (अष्टा० ६।३।२५) इति नियमेन पूर्वपदस्यानङादेशं विदधति । तद्यथा—

अग्नाविष्णू इत्यग्ना विष्णू । तै० १।१।१२ ॥

इन्द्रावरुणावितीन्द्रा वरुणौ । तै० २।३।१३ ॥

इन्द्राबृहस्पती इतीन्द्रा बृहस्पती । तै० ३।३।११ ॥

अन्ये पदकारास्तु द्वन्द्वसमासेऽवग्रहमेव न प्रदर्शयन्ति । तदेतद् अग्रे वक्ष्यते ।

## ६—सांहितिकदीर्घत्वषत्वणत्वविषये

पदकारा यत्र सांहितिकं दीर्घत्वं षत्वं णत्वं वा मन्यन्ते तत्र पदनिदर्शने विवदन्ते—

क—शुक्लयजुःपदपाठे मैत्रायणीये च प्रथम यथारूपं छान्दसं पदं निर्दिश्य, सांहितिकं कार्यमपमृज्येतिनाऽऽवेष्टयन्ति । तद्यथा—

**दीर्घत्वस्य—**

मामहानः । ममहानऽइतिममहानः ।

शु० य० १७।५५ (पदपाठे १७।५१), मै० २।१०।५ ॥

**षत्वस्य—**

त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । शु० य० १०।११ ॥

मध्यमेष्ठेयाय । मध्यमेस्थेयायेतिमध्यमे स्थेयाय ।

मै० २।१२।५ ॥

**णत्वस्य—**

प्रणिनाय । प्रनिनायेतिप्र निनाय ।

शु० य० ५।४३ (पदपाठे ५।४१)

तैत्तिरीयसंहितापदपाठे यथारूपं छान्दसं पदमेवेतिना निदर्श्य षत्वणत्वविरहितं रूपमावर्त्यते । तद्यथा—

अनुष्टुबित्यनु स्तुप् । तै० १।८।१३ ॥

प्रणिनायेतिप्र निनाय । तै० १।३।५ ॥

'मामहानः इत्यादिषु यत्रान्ये पदकाराश्छान्दसं दीर्घत्वं मन्यन्ते, तत्र तैत्तिरीयपदकारः स्वाभाविकं दीर्घत्वं मत्वा न ह्रसयति । तद्यथा—

**मामहानः** । तै० ४।६।३ ॥

ग—ऋग्वेदाथर्ववेदयोरेतादृशेषु स्थलेषु पदकारा सांहितिकं कार्यमपमृज्य सकृदेव लौकिकं रूपमासाद्य पठन्ति । तद्यथा—

**दीर्घत्वस्य—**

**ममहानम्** । ऋ० १।११७।१७ ॥

**षत्वस्य—**

**त्रिऽस्तुप्** । ऋ० १०।१४।१६ ॥ अ० ८।६।२० ॥

**णत्वस्य—**

**प्रऽनियार्य** । ऋ० ३।८।११ ॥

**प्रऽनीयते** । अ० ६।२३।२ ॥

घ—सन्ति वेदे केचन लेट्लकारस्य वैयाकरणदृशा (अष्टा० ३।४।९४) अडाडागमयुक्तानि पदानि, तत्र आडागयुक्तेषु पदेषु छान्दसदीर्घत्वं मत्वा मैत्रायणीये पदग्रन्थे ह्रस्वत्वं प्रदर्श्यते । तद्यथा—

**यजासि । यजसीतियजसि** । मै० २।७।१ ॥

अपरेषु पदपाठेषु 'यजासि' इत्येवोच्यते ।

ङ—'**दाधार**' इत्येतत् पदमेतादृग् वर्तते यत्र पाणिनीयमतेन (६।१।७) 'मामहानः तूतुजानः' इव अभ्यासस्य दीर्घत्वं विधीयते, परन्तु पदकाराः पदकाले नेदं ह्रसयन्ति ।

## ७—द्वन्द्वसमासेऽवग्रहे मतभेदः

यत्र यत्र वैदिकपदेषु द्वन्द्वसमासो भवति, पदकाले तेषामवग्रह-विषयेऽपि विसंवाद उपलभ्यते । तद्यथा—

क—ऋगथर्वशुक्लयजुषां पदकारा द्वन्द्वसमासेऽवग्रहं न प्रदर्शयन्ति। तद्यथा—

अग्नाविष्णू इति। अथर्व ७।३०।१ ॥

इन्द्राबृहस्पती इति। ऋ० ४।४६।५ ॥

इन्द्रावरुणौ। ऋ० ६।६८।१ ॥

शुक्लयजुषः पदपाठे यत्र द्वन्द्वसमासे प्रगृह्यत्वं भवति तत्रावग्रहाभावेऽपीतिनाऽऽवेष्टयन्ति। तद्यथा—

इन्द्राबृहस्पतीऽइतीन्द्राबृहस्पती। मा० २५।६ ॥

ख—तैत्तिरीयपदपाठे तु द्वन्द्वसमासेऽप्यवग्रहः प्रदर्श्यते। तद्यथा—

अग्नाविष्णू इत्यग्ना विष्णू। तै० १।१।१२ ॥

इन्द्राविष्णू इतीन्द्रा विष्णू। तै० ३।२।११ ॥

इन्द्राबृहस्पती इतीन्द्रा बृहस्पती। तै० ३।३।११ ॥

## ८—नञ्समासेऽवग्रहविषये वैमत्यम्

क—ऋगथर्वशुक्लकृष्णयजुषां सर्वेऽपि पदकारा नञ्समासेऽवग्रहं न प्रदर्शयन्ति।

ख—सामपदकारो नञ्समासेऽप्यवहमिच्छति। तद्यथा—

१ २र २ ३
अरातेः अ रातेः। सा० पू० १।१।६ ॥

३ १ २ ३ १ २र
अमित्रम् अ मित्रम्। सा० पू० १।२।१ ॥

३ १ २ ३ १ २र
अमृतम् अ मृतम्। सा० पू० १।४।१ ॥

## ९—साम्नः पदपाठस्य अवग्रहे वैशिष्ट्यम्

साम्नः पदपाठोऽवग्रहविषयेऽन्यपदपाठेभ्योऽत्यन्तं विसंवदति।

तत्र तादृशानामपि पदानामवग्रहो दृश्यते, यान्यन्ये सर्वे पदकारा ऐकमत्येन विभागानर्हाणीति स्वीकुर्वते । तद्यथा—

| मन्त्रपदम् | पदपाठः |
|---|---|
| ३ २ | ३ २ |
| [1]मित्रम् | मि त्रम् । १।९ ॥[2] |
| ३ २ | ३ २ |
| अद्य | अ द्य । ९।६ ॥ |
| ३ २ | ३ २ |
| सख्ये | स ख्ये । ९।४ ॥ |
| ३ १ र | ३ २ ३ |
| चन्द्रमसः | चन्द्र मसः । २१।३ ॥ |
| ३ २ | ३ ३ २ |
| समुद्रम् | सम् उद्रम् । २७।४ ॥ |
| [3]स्वस्तये | सु अस्तये । ३६।४ ॥ |
| उस्रियाः | उ स्रियाः । ८५।१० ॥ |
| पुत्रस्य | पुत् त्रस्य । १८८।२ ॥ |

**इदं चात्रावधेयम्**—सामपदकारोऽत्रावग्रहप्रदर्शनेन यमर्थविशेषं द्योतयति स नैरुक्तपदनिर्वचनेनापि पुष्यति । एतदर्थविज्ञापनाय पुरस्तान्निर्दिष्टानां पदानां यथाक्रमं यास्कीयं निर्वचनमुद्ध्रियते—

मित्र—**प्रमीतेस्त्रायतेः** । १०।२१ ॥

अद्य—**अस्मिन् द्यवि** । १।६ ॥

सख्य—**समानख्यानाः** ।७।३० ॥

चन्द्रमस्—**चन्द्रो माता**...। ११।१५ ॥

समुद्र—**सम् उद्द्रवन्त्यस्मादापः**... । २।१० ॥

स्वस्ति—**सु अस्तीति** । ३।२१ ॥

---

१. इमान्युदाह्रियमाणानि पदानि, अग्रे च निर्दिश्यमानस्तुलनात्मको निरुक्तपाठः पण्डितभगवद्दत्तकृताद् 'वैदिक वाङ्मय का इतिहास' ग्रन्थात् संगृहीतः (द्र० वेदों के भाष्यकार, भाग पृष्ठ १५४-१५५) ।

२. अत्र प्रथमा संख्या कलकत्तामुद्रितस्य सामपदपाठस्य पृष्ठसंख्यां द्योतयति, अपरा तत्र वर्तमानां मन्त्रसंख्याम् ।

३. मुद्रणकाले समग्रस्य सामपदग्रन्थस्यास्मत्समीपेऽविद्यमानत्वात् स्वर-रहितान्येव त्रीणि पदानि प्रदर्श्यन्ते ।

**उस्त्रिया—उत्स्राविणोऽस्यां भोगाः । ४।१६ ॥**

**पुत्र—पुन्नरकं ततस्त्रायते । २।२१ ॥**

### १०—पदकाले पुनरुक्तांशानां लोपालोपौ

संहितापाठे यानि पदानि तस्मिन्नेव मन्त्रे मन्त्रान्तरे वा पुनः पठ्यन्ते सम्पूर्णो वा मन्त्रः पुनः पठ्यते, तेषां पदकाले पुनः पाठविषयेऽप्युपलभ्यते विसंवादः । केषुचित् पदग्रन्थेषु पुनरुक्ता भागा मन्त्रा वा पुनर्न पठ्यन्ते, अपरेषु तादृशामपि भवति पाठः । एतदेव लक्ष्यीकृत्योक्तं (कात्या० प्रति० ४।१७७, १८१ टीका) केनचिदाचार्येण—

**पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः ।**
**अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति ॥**

माध्यन्दिनानामपि पुनरुक्तानि पदानि लुप्यन्ते[1], काण्वैः सह क्वचिद् विसंवादोऽपि दृश्यते, अत एवोक्तम्—**काण्वस्यार्थवशादिति ।**

येषु पदपाठेषु पुनरुक्तांशानां लोप इष्यते तेष्वपि न सर्वेषामेव पुनरुक्तानां पदानां लोपो भवति, तत्रापि प्रातिशाख्यकारैर्विशेषविधानमुक्तम् । तद्विधानमपि परस्परं विसंवदते ।

एवं वैदिकपदग्रन्थानां तुलनात्मकाध्ययनेन प्रतीयते यदेषां पदकाराः स्वस्वकाले प्रसिद्धान् व्याकरणग्रन्थान् आश्रित्य स्वस्वपदपाठनियमान् निश्चितवन्तः । एषु पदकारेषु गार्ग्य-शाकल्य-शौनकास्त्वसंशयं व्याकरणप्रवक्तारोऽप्यासन् । तस्मादेतैस्तु स्वीयव्याकरणनियमानुसारमेव पदविभागः कृतः स्याद् इति संभाव्यते । पाणिनीयव्याकरणानुसारं क्वचिदवग्रहविषये विसंवादोऽप्युपलभ्यते । तदभिप्रेत्य तत्रभवता महाभाष्यकृता उक्तम्—

**नहि लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् ।**

महाभाष्य ३।१।१०९; ६।१।२०७; ८।२।१६ ॥

एतेन पाणिनीयलक्षणानुसारं मन्त्रणामन्यथाऽपि पदविभागः कर्तुं शक्य इति ज्ञाप्यते ।

इत्थं वैदिकपदपाठनां तुलनात्मकमध्ययनं प्रस्तुत्य माध्यन्दिनपदपाठस्य परिचयः प्रदीयते ।



---

१. अस्मदीयेऽतिप्राचीने कसंज्ञके कोशे पुनरुक्तानि पदानि मन्त्रानुसारं यथायथं पठ्यन्ते । पुनरुक्तानां मन्त्राणामपि पदपाठो यथास्थानं दृश्यते ।

# माध्यन्दिन-पदपाठस्य परिचयः

पदग्रन्थानां प्रयोजनम् अस्माभिः संक्षेपेण पदपाठानां तुलनात्मकेऽध्ययने पुरस्तादुक्तम्। पुराकाले वेदानां यावत्यः शाखा आसन् तेषां सर्वेषामेव पदपाठा आसन्निति शक्यं प्राचीनेतिहासाद् अभ्यूहितुम्। परन्तु यथा सम्प्रति वेदानां ११३१ चन्द्ररामभूब्रह्ममितासु शाखासु उपद्वादशा एव शाखा उपलभ्यन्ते तथा पदग्रन्थास्तु ततोऽप्यल्पसंख्यका एव प्राप्यन्ते। ते चेमे--

१ - **ऋक्पदपाठः**
२—**माध्यन्दिनपदपाठः**
३—**काण्वपदपाठः**
४—**तैत्तिरीयपदपाठः**
५—**मैत्रायणीयपदपाठः**
६—**सामपदपाठः**
७—**अथर्वपदपाठः**

एषु पदग्रन्थेषु—

**ऋक्पदपाठः**—ऋग्वेदस्य पदकारः **तत्रभवान् शाकल्य** इत्यत्र नास्ति कस्यापि विप्रतिपत्तिः। निरुक्तकारो यास्कोऽप्याह—

**वा इति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यद् असुसमाप्तश्चार्थः।** ६।२८॥

कात्यायनप्रातिशाख्यव्याख्यातृभिः संक्रम (=पुनरुक्तपदलोप) प्रकरणे (४।१७७, १८१) कस्यचित् प्राचः श्लोक एवं पठ्यते—

**पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः।**
**अलोप इति गार्ग्यस्य काण्वस्यार्थवशादिति॥**

अस्मिन्नपि श्लोके पदकारः कश्चित् शाकलः[1] (=शाकल्यः) स्मर्यते।

---

१. क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तत इति न्यायेन यञः स्थानेऽण् अपि भवति। यथा **प्रदीयतां दाशरथाय मैथिलिः** (रामा० युद्ध० १४।३) इत्यत्राण्।

पुराणेष्वपि शाखा प्रकरणे शाकल्यः **'पदवित्तमः'** इति विशेषणेन असकृत् स्मर्यते ।

**सामपदपाठः**—सामवेदस्य पदपाठो **गार्ग्य**-प्रोक्त इति सम्प्रदायविद आचक्षते । यास्कीये निरुक्ते **'मेहना'** पदनिर्वचनप्रकरणे पठितस्य **'यन्म इह नास्तीति'** (४।४) वचनस्य व्याख्याने स्कन्दस्वामिना निरुक्तव्याख्यायां **'सामपदग्रन्थो गार्ग्यकृतः'** इति व्यक्तीकृतम् ।

'पूर्वनिर्दिष्टे श्लोकेऽपि **'अलोप इति गार्ग्यस्य'** इति वचनात् सामपदपाठस्य गार्ग्यकृतत्वमेव समर्थ्यते ।

गार्ग्य आचार्यो नैरुक्तानामन्यतम इति यास्कीयनिरुक्तग्रन्थाद् असकृद् व्यज्यते । पदपाठानां तुलनात्मकेऽध्ययने सामपदपाठस्य यास्कीयनिर्वचनेन साकं या समानता प्रदर्शिता (पूर्वपृष्ठ २५) तेनाप्येतन्मतं पुष्यति यन्नैरुक्तो गार्ग्य एव सामपदग्रन्थस्य प्रवक्तेति। पाणिनीयाष्टके गार्ग्यस्यासकृत्स्मरणादयं व्याकरणप्रवक्ताऽपि ज्ञेयः ।

**तैत्तिरीयपदग्रन्थः**—तैत्तिरीयः पदपाठ **आत्रेय**-कृत इति सम्प्रदायविदः प्रतिजानते । तैत्तिरीयकाण्डानुक्रमण्यां तु पदकार आत्रेय इति स्पष्टमुच्यते । तथाहि—

**यस्याः पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः** । इति ।

आपस्तम्बादिगृह्येष्वपि तर्पणप्रकरणे **'आत्रेयः पदकारः'** इत्येव स्मर्यते ।

**काण्वपदपाठः**—काण्वसंहितायाः पदपाठस्य कः प्रवक्ता इत्यत्र न किंचित् स्पष्टं प्रमाणमुपलभ्यते । पुनरपि पूर्वोद्धृते (पृष्ठ २६, २७) **'पुनरुक्तानि लुप्यन्ते'** इति श्लोके यथा गार्ग्यशाकल्ययोः पदकारत्वं व्यज्यते तथा **'कण्वस्यार्थवशात्'** इति वचनेन काण्वपदपाठस्य काण्वप्रोक्तत्वमपि शक्यमभ्यूहितुम् ।

**अथर्वमैत्रायणीय**—संहितयोः पदपाठस्य प्रवचनं काभ्यां कृतमिति न केनापि प्रमाणेन ज्ञायते ।

## माध्यन्दिनपदपाठस्य प्रवक्ता

माध्यन्दिनपदपाठस्य कः प्रवक्ता इति न साम्प्रदायिका वैदिका विदन्ति । आधुनिकाः शोधप्रिया अपि विद्वांसोऽस्मिन् विषये

मौनमेवावलम्बन्ते । कलकत्तानगरस्थे एशियाटिकसोसाइटीपुस्तकालये विद्यत एको वाजसनेयपदपाठस्यैतादृशो हस्तलेखो यत्र ग्रन्थान्ते **'शौनककृते पदे'** इति लेखनं दृश्यते । यद्यपि शोधप्रिया विद्वांसो बहोः कालाद् एतेन हस्तलेखेन परिचितास्सन्ति, तथापि ते तत्र न श्रद्दधति, कोशस्यार्वाक्कालिकत्वाद् अपरस्मिश्च कस्मिंश्चित् कोशे तादृशपाठस्यादर्शनात् ।

परमिदमस्माकमत्यन्तं सौभाग्यं यदेकोऽपरोऽप्येतादृशः कोशः संप्राप्तो यस्मिँन् अन्तिमेषु दशस्वध्यायेषु **'शाकल्यकृते पदे'** इति पाठो दशकृत्वः पठ्यते । अयं च कोशः सर्वेष्वपि विज्ञातेषुः कोशेषु प्राचीनतमः । अस्य लेखनकालः पूर्वार्धस्योत्तरार्धस्य चान्ते **१४७१ वैक्रमाब्दः १३३६ शाकाब्दश्च** निर्दिष्टो वर्तते । अयं परमदुर्लभः कोशोऽस्माभिः अजमेरमण्डलान्तर्वर्ति-केकड़ीनगर-वास्तव्यस्य परम सुहृदः **पण्डितमदनमोहनव्यासशर्मणः** सकाशाल्लब्धः । सम्प्रत्ययमस्मत्संग्रहे सुरक्षितो वर्तते (एतस्य कोशस्यान्यद्वैशिष्टयमुत्तरत्र **'माध्यन्दिनपदग्रन्थस्य चतुर्विधः पाठः'** इत्यस्मिन् प्रकरणे वक्ष्यते) ।

एतस्य प्राचीनतमस्य कोशस्य समुपलब्ध्या माध्यन्दिनपदपाठोऽपि शाकल्यप्रोक्त एवेति निश्चये न प्रमाणान्तरस्यापेक्षा जायते । यदि कश्चिद् ब्रूयात्—ऋक्पदप्रवक्तुः शाकल्यस्य शुक्लयजुषः साकं न संबन्धः सम्भवतीति । तन्न, दृश्यते हि आर्थवणशौनकशाखायाः प्रवक्तुः शौनकस्य ऋगनुक्रमणीनां बृहद्देवताग्रन्थस्य च प्रवक्तृत्वम्, शुक्लयजुषः पुरुषाध्यायस्य च व्याख्यातृत्वम्[1] । एवमेव वाजसनेयचरणस्य कात्यायनशाखायाः प्रातिशाख्यस्य श्रौतसूत्रस्य च प्रवक्तुः कात्यायनस्य ऋक्सर्वानुक्रमण्याः प्रवक्तृत्वम् । सत्येवं शाकल्यस्य वाजसनेयपदपाठप्रवक्तृत्वं को नाम वारयितुं प्रभवेत् । वयं तु न तत्र कांचन विप्रतिपत्तिं पश्यामः ।

एवं संक्षेपेण पदप्रवक्तृणां विषय उक्त्वा माध्यन्दिनपदपाठस्य प्रक्रिया किञ्चित् प्रदर्श्यते—

---

१. द्रष्टव्यम् पुरुषाध्यायस्य (शु० यजुः ३१) उव्वटव्याख्याया आरम्भे । अस्यवामीय सूक्तस्य (ऋक् १।१६४) आतमानन्दीयव्याख्यारम्भेऽप्ययमर्थः सूच्यते ।

# माध्यन्दिन-पदपाठस्य प्रक्रिया

वैदिकपदपाठानां पदविभागे प्रगृह्यत्वावग्रहत्वादिप्रदर्शने स्वर-संचारे च यः प्रक्रियाभेदः स समासेन यथायथं पूर्वं प्रदर्शितः[१]। माध्यन्दिनपदपाठ-प्रवचने यदन्यपदपाठेभ्यो वैलक्षण्यं तद् यद्यपि पुरस्तात् यथास्थानं निर्दिशितम्, तथापि सुग्रहायेह संक्षेपेण पुनः प्रदर्श्यते—

१—पदविभागे यत्र केवलं पदस्वरूपमेव प्रदर्शनीयं भवति तत्र मन्त्रपाठे संहितापाठानुरोधेन जायमानं संहिताकार्यं स्वरसंचारं चापहाय यथायथं पदं स्वस्वरसंयुक्तं प्रदर्श्यते। तद्यथा—

**मन्त्रपाठः—**

इषेत्वोर्जेत्वावायवस्थ। १।१ ॥

**पदपाठः—**

इषे। त्वा। ऊर्जे। त्वा। वायवः। स्थ। १।१ ॥

२—यत्पदं व्याकरणानुसारं प्रगृह्यसंज्ञक भवति तत्पदकाले यथायथं पठित्वा इतिकरणेन तस्य प्रगृह्यत्वं प्रदर्श्य पुनरावर्त्यते। तद्यथा—

अस्मेऽइत्यस्मे। ४।२२, २६ ॥

विष्णोऽइतिविष्णो। १।४ ॥

३—यत्र पदेऽवग्रहः[२] प्रदर्शनीयो भवति, तत्र मन्त्रपदं स्वरूपतः पठित्वा इतिनाऽऽवेष्टयाऽवग्रहः प्रदर्श्यते। तद्यथा—

१. द्रष्टव्यम् पूर्वत्र 'वैदिकपदपाठानां तुलनात्मकमध्ययनम्' प्रकरणे (पृष्ठ ११-२६)।

२. यस्मिन् पदेऽवान्तर्वर्तिनीं विभक्तिमाश्रित्यायजादिसर्वनामस्थानेषु सुप्सु (=विभक्तिषु तद्धितप्रत्ययेषु) क्वचि च पूर्वस्य यावद्भागस्य पदसंज्ञा भवति तावद्भागं पृथक्कृत्य प्रदर्शनमवग्रह उच्यते। तत्रोभयोर्भागयोरुच्चारणे मात्राकालपरिमितं व्यवधानं क्रियते। अवग्रहस्य विशेषनियमास्तत्तत्संहितायाः प्रातिशाख्याद् विज्ञेयाः।

श्रेष्ठंतमायेतिश्रेष्ठं तमाय । १।१ ॥

प्रजावंतीरितिंप्रजा वंतीः । १।१ ॥

४—यत्र प्रगृह्यत्वम् अवग्रहत्वं चोभयं प्रदर्शनीयं भवति, तत्र प्रथमं मन्त्रपदोत्तरमितिपदप्रयोगेण प्रगृह्यत्वं प्रदर्श्य पुनरावर्त्यावग्रहः प्रदर्श्यते । तद्यथा—

बृहद्भानोऽइतिबृहत् भानो ।

१२।१०६ [1] (पदपाठे १२।९७) ॥

शतक्रतोऽइतिंशत क्रतो । ३।४६ (पदपाठे ३।४८) ॥

५—यत्रावगृह्यभागे मन्त्रपदे पदकारश्छान्दसं दीर्घत्वं सांहितिकं षत्वं सत्वं णत्वं वा मनुते, तत्र स प्रथमं मन्त्रपदं यथायथं पठति, तदनु च दीर्घत्वादिकार्यविरहितं पदं पठित्वा इतिनाऽऽवेष्टयावग्रहं प्रदर्शयति । तद्यथा—

दीर्घत्वस्य—

अशीतम । अशितमेत्यशि तम । २।२० ॥

षत्वस्य—

त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । १०।११ ॥

सत्वस्य—

वयस्कृतम् । वयःकृतमितिवयः कृतम् । ३।१८ ॥

णत्वस्य—

प्रणिनाय । प्रनिनायेतिप्र निनाय ।

५।४३ (पदपाठे ५।४१) ॥

---

१. इह मन्त्रसंख्या एव प्राधान्येन निर्दिष्टा, यत्र पदग्रन्थे पुनरुक्तानां पदानां मन्त्राणां वा लोपात् कण्डिकासंख्या भिद्यते, तत्र पदकण्डिकासंख्याऽपि निर्दिश्यते ।

६—यत्रानवगृह्यमाणेऽपि पदे पूर्ववत् पदकारश्छान्दसं दीर्घत्वं सांहितिकं वा षत्वादिकार्यं स्वीकरोति तत्रापि स प्रथमं यथायथं मन्त्रपदं स्वतन्त्रतया पठति, तदनु च दीर्घत्वादिविरहितं पदं पठित्वेतिनाऽऽवेष्टयति । तद्यथा—

**दीर्घत्वस्य**—

**शमीष्व । शमिष्वेतिशमिष्व । १।१५ ॥**

**षत्वस्य**—

**सुषुवुः । सुसुवुरितिसुसुवुः ।**

२०।६३ (पदपाठे २०।३६) ॥

**णत्वस्य**—

**त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशाविति त्रिनवत्रयस्त्रिंशौ ।**

१०।१४ ॥

एवं पदकाले स्वरसंचारेऽपि—

७—सामान्येन पदपाठे पदानि स्वमूलभूतं स्वरं प्रापय्य पठ्यन्ते । तद्यथा—

**इषे । त्वा । ऊर्जे । त्वा । वायवः । स्थ ।**

८—यत्र मन्त्रपदमितिपदेन निर्दिश्य पुनः पठ्यते, तत्र त्रीण्यपि पदानि परस्परं संहितावत् स्वरं सन्धिकार्यं च लभन्ते । तद्यथा—

**विष्णोऽइति विष्णो । १।४ ॥**

**असमेऽइत्यसमे । ४।२२, २६ ॥**

९—यत्र मन्त्रपदेऽवग्रहः प्रदर्शनीयो भवति तत्रावग्रहोत्तरभागोऽपि संहितावत् स्वरं लभते । तद्यथा—

**श्रेष्ठतमायेतिश्रेष्ठ तमाय । १।१ ॥**

**प्रजावतीरितिप्रजा वतीः । १।१ ॥**

१०—यत्र त्ववगृह्यमाणपदस्योत्तरभागे उत्तम[1] उपोत्तमो वोदात्तो वा स्वरितो वा भवति, तस्माच्च पूर्वं यत्र द्वौ वा त्रयो वा अनुदात्ता भवन्ति, तत्र तेऽनुदात्तत्वमेव भजन्ते, अर्थात् पूर्वभागस्थमुदात्तं स्वरितं वाऽऽश्रित्य स्वरितत्वमैकश्रुत्यं च न लभन्ते । तद्यथा—

विजानतऽइतिवि जानतः । ४०।७ ॥

विचचक्षिरऽइतिवि चचक्षिरे । ४०।१० ॥

परिवत्सरायेतिपरि वत्सराय ।

३०।१५ (पदपाठे ३०।१३) ॥

आहुनन्न्यायेत्या हुनन्याय । १६।३५ ॥

अपरस्मिन्नैकस्मिन् कोशे तु उदात्तपरं स्वरितपरं वाऽनुदात्तं[2] विहायावशिष्टानामनुदात्तानामैकश्रुत्यं दृश्यते । तद्यथा—

विजानतऽइतिवि जानतः । ४०।७ ॥

विचचक्षिरऽइतिवि चचक्षिरे । ४०।१० ॥

परिवत्सरायेतिपरि वत्सराय ।

३०।१५ (पदपाठे ३०।१३)

आहुनन्न्यायेत्या हनन्याय । १६।३५ ॥

अयमुभयथापि स्वरसंचारनियमो वाजसनेयप्रातिशाख्ये (१।१४८,१४९) मतान्तरेण विहितो दृश्यते ।

---

१. त्रिप्रभृतीनामन्त्यमुत्तमम्, उत्तमस्य समीपम् (अन्त्यात्पूर्वभावी) उपोत्तमम् । एते उभे अपि संज्ञे व्याकरणनिकाये प्रसिद्धे । द्र० अष्टा० ४।१।७८ सूत्रस्य भाष्यं काशिकादयो वृत्तिग्रन्थाश्च ।

२. उदात्तस्वरितपरोऽनुदात्तोऽनुदात्तत्वमेव भजते नैकश्रुत्यं स्वरितत्वं च लभते । तदुक्तम्—उदात्तस्वरितपरस्य सन्नतरः (अष्टा० १।२।४०), नोदात्तस्वरितोदयम्० (८।४।६६) इति च ।

### माध्यन्दिनसंहितायां तदीये पदपाठे च

# यकारवकारयोर्विशिष्टा लेखन-पद्धतिः

माध्यन्दिनसंहितायामस्त्यन्यसंहिताभ्य उच्चारणे वैशिष्ट्यम् । तद् द्विविधम्—वर्णविषयकं स्वरविषयकं च । तद्द्विविधस्याप्युच्चारणवैशिष्ट्यस्यानुरूपमस्याः संहिताया लेखनेऽपि वर्णानां स्वरविशेषाणां चाङ्कनप्रकारो भिद्यतेऽन्याभ्यः । अयमेव लेखनप्रकारो माध्यन्दिनपदपाठेऽपि स्वल्पभेदेन व्यवह्रियते । अत इह प्रथमं संहितायां वर्णोच्चारणवैशिष्ट्यार्थं यस्तदीयो लेखनप्रकारः स निर्दिश्यते—

१—अस्याः संहिताया यः पाठः साम्प्रतिकैरुत्तरदेशीयैरधीयते, तत्र रेफहकारोत्तरवर्तिनां व्यञ्जनानाम्, अनच्पराणामच उत्तराणां यरां, यणः पराणां मयां, मयः पराणां वा यणाम्, शरः पराणां खयाम्, खयः पराणां वा शराम्, अन्येषां च वर्णानां यथालक्षणं द्वित्वं विलिख्यते; तदर्थं च कात्यायनीयं प्रातिशाख्यमेवैकं शरणम् । इयं व्यञ्जनानां द्वित्वविशिष्टलेखनपद्धतिर्माध्यन्दिनसंहितायाः पाठेऽपि यथायथमुपलभ्यते । तद्यथा—

सविताप्प्रार्प्पयतुश्श्रेष्ठतमायकर्म्मणऽआप्प्यायद्ध्वमग्घ्न्याऽइन्द्रायभागम्प्प्रजावतीरनमीवाऽअयक्क्ष्मा ······ बह्वीर्य्यजमानस्य ··· । १।१ ॥

साविश्श्वायु ··· सोमेनातनच्मिविष्ण्णोहव्व्यꣳरक्क्ष । १।४ ॥

२—माध्यन्दिनसंहितापाठेऽनुस्वारस्य रेफोष्मवर्जं सर्वत्रैव परसवर्णत्वं नित्यं भवति । रेफोष्मसु अनुस्वार एवावतिष्ठते, 'रेफोष्मणां सवर्णा न सन्ति'[1] इति वचनात् । अनुस्वारमपि माध्यन्दिना ह्रस्वदीर्घभेदेन द्विप्रकारकमाचक्षते । तयोर्निदेशपद्धतिरपि बहुधा भिद्यते । सम्प्रति दीर्घोऽनुस्वारः ꣳ चिह्नेनाङ्क्यते, ह्रस्वश्च ꣳ चिह्नेन ।

---

१. आपिशली पाणिनीया च शिक्षा, द्र० षष्ठ-प्रकरणम् ।

ह्रस्वसंज्ञकात् स्वरात् परोऽनुस्वारो दीर्घ उच्चार्यते लिख्यते च, एवं दीर्घसंज्ञकात् स्वरात् परो ह्रस्वः ।

अनन्तभट्टस्तु प्रतिज्ञापरिशिष्टस्य (३।२) व्याख्यानेऽनुस्वारस्य ह्रस्वदीर्घगुरुभेदेन त्रिविधत्वमुक्त्वा एकस्योच्चारणं लेखनं च नष्टमित्याह[1] ।

अस्मन्मते तु ह्रस्वदीर्घभेदेन द्विविधस्यानुस्वारस्य यत् साम्प्रतिक 'ग्वम्' 'गुं' वोच्चारणं तच्छास्त्रविरुद्धम् । तस्यानुस्वारत्वादनुस्वाररूपेणैवोच्चारणं कर्तव्यम्, नान्यथा ।

३—माध्यन्दिना यकारवकारौ गुरुलघुलघुतरभेदेन त्रिविधाविति मन्यन्ते । तेषां च याज्ञवल्क्यशिक्षायां लघुमाध्यन्दिनशिक्षायां च यः प्रविभाग उक्तः, स इत्थं समासतो ज्ञेयः—

क—गुरु-यकारः—पादादिः, पदादिः, रेफहयऋवर्णैश्च सयुक्तः पदमध्यगः, आम्रेडने पूर्वपदादिश्च यो यकारः स गुरुः स्मर्यते (अयं गुरुर्यकारः सम्प्रति य, य़, उदरगतविन्दुयुतो यकार इत्येवं त्रिभिः प्रकारैर्लिख्यते । तत्र 'य' इत्ययं प्रकारः प्रायेणाश्रीयते) । तद्यथा—

**पादादिः—**

**यज्ञेन[2] यज्ञमयजन्त । ३१।१६ ॥**

**पदादिः—**

**यज्ञमयजन्त । ३१।१६ ॥**

**रेफेण संयुक्तः—**

**सूर्य्यः । ३।९ ॥**

**हकारेण संयुक्तः—**

**गेह्याय । १६।४४ ॥**

---

१. प्रतिज्ञापरिशिष्टे (३।२) अनुस्वारस्य रेफोष्मपरस्य त्रिविधत्वमुक्तम् । ह्रस्वात् परो दीर्घः, दीर्घात् परो ह्रस्वः, गुरौ परे गुरुः । अत्र तृतीयस्य चिह्नं परिभ्रष्टम् । द्र० अनन्त-टीका ३।२ ॥

२. इह पदादित्वादेव गुरुत्वे सिद्धे पादादिवचनं किमर्थमित्यनुसन्धेयम् ।

**यकारेण संयुक्तः—**

धाष्व्यारूपम् । १९।२४ ॥

**ऋकारेण संयुक्तः—**

सामान्यृग्भिः । २०।१२ ॥

**आम्रेडने पूर्वस्य—**

यत्रयत्र । २९।४३ ॥

इह परस्यापि पदादित्वात् प्राप्तं गुरुत्वं प्रतिषेद्धुं पूर्वस्य पुनर्गुरुत्वमुच्यते ।

**ख—लघु-यकारः**—पदमध्यगः केवलः, रेफादीन् पूर्वनिर्दिष्टान् चतुरो वर्णान् विहायान्यवर्णैश्च संयुक्तः, पञ्चमाक्षरात् परः पदादिः, उपसर्गाच्च परः पादमध्यगः पदादिश्च यकारो लघुः स्मर्यते (अयं सामान्यरूपेण लिख्यते) । तद्यथा—

**पदमध्यगः केवलः—**

देवयजनम् । ४।१ ॥

**रेफादिभिन्नवर्णैः संयुक्तः—**

आप्यायध्वम् । १।१ ॥

**पञ्चमात् परः पदादिः—**

रेवान्यो० । ३।२६ ॥

**उपसर्गात् परः पादमध्यगः पदादिः—**

व्यियत् । २४।३४ ॥ अनुयं । ३३।८० ॥

इह पादमध्यग इति विशेषणाद् उपसर्गात् परः पादादिर्यकारो गुरुरेव । तद्यथा—

अनु योजा । ३।५२ ॥ उपयज्ञं च । ८।३५ ॥

अनयोरुदाहृणयोरुपसर्गः पूर्वपादान्तः, यकारश्चोत्तरपादादिर्ज्ञेयः ।

**आम्रेडन उत्तरस्य—**

**यत्रयत्र । २९।४३ ॥**

अयमत्र विशेषः—सनवर्णाभ्यां परः '**सयोजते** (१५।३३) **सुयुधऽइ०** (१७।३५) **नयन्तु** (३७।७)'। इति प्रयोगविशेषेष्वेव श्रूयमाणो यकारो लघुः स्मर्यते, एभ्योऽन्यत्र गुरुरेव । तद्यथा—

**सयन्ता । ६।२९ ॥ मनोनयेषु । ७।१७ ॥**

**ग —लघुतरो यकारः**—पदान्ते 'अय्-आय्'रूपः सन्धिजो यकारो लघुतरः स्मर्यते । परन्तु माध्यन्दिनसंहितायामयं न श्रूयते, लोप एवास्यामनन्ति । पाणिनीया अपि पदान्तगौ सन्धिजौ यकारवकारौ लघुप्रयत्नतराविति प्रतिजानते । तथा ह्याहुः—**व्योर्लघुप्रयत्नतरः शाकटायनस्यैव** (अष्टा० ८।३।१८) इति ।

**३**—माध्यन्दिना वकारमपि गुरुलघुलघुतरप्रयत्नभेदेन त्रिविधं स्मरन्ति । तद्यथा—

**क—गुरुवकारः**—पदादौ यो वकारः स गुरुः स्मर्यते । तस्य गुरुत्वस्य द्योतनाय स द्विलिख्यते । तद्यथा—

**व्वायवस्थ । १।१ ॥**

**ख—लघुवकारः**—पदमध्यगस्य, पदादेश्च युष्मदादेशस्य, वा वै इत्यनयोर्निरर्थकयोर्निपातयोः, विकल्पार्थस्य वा पदस्य, उपसर्गाच्च परस्य वकारस्य लघुत्वं स्मर्यते । तद्यथा—

**पदमध्यगः—**

**प्रजावतीः १।१ ॥**

**युष्मदादेशः—**

**देवो वः । १।१ ॥ या वाङ्कशा । ७।११ ॥**

**वा वै निपातौ—**

**वातो वा । ९।७ ॥ न वा ऽ उ २३।१६ ॥(इह वै निप**

**वा विकल्पार्थः—**

मित्रावरुणनेत्रा वा मरुन्नेत्रा वा । ९।३६ ॥

**ग—लघुतरो वकारः—**यः पदान्तीयः 'अव्-आव्'रूपः सन्धिजो वकारः स लघुतरः स्मृतः । तद्यथा—

वायवृतस्पते । २७।३४ ॥

इह ऋकारपूर्वो वकारो लघुतरः । अयं पाणिनीयैरपि लघुप्रयत्नतर इत्येवं स्मर्यते (द्र० अ० ८।३।१८) ।

## पदपाठे यकारवकारयोर्लेखनपद्धतिः

माध्यन्दिनसंहितायां व्यञ्जनानां द्विर्लेखनरूपा यकारवकारयोश्च गुरुत्वादिद्योतनाय च या विशिष्टा लेखनपद्धतिरवलोक्यते सा प्रायेण तत्पदपाठेऽपि उत्तरदेशीयैर्व्यवह्रियते । परन्तु यकारवकारयोर्गुरुत्वादिविषयेऽस्ति कश्चन भेदः । तद्यथा—

**क—गुरुयकारः—**-माध्यन्दिनपदपाठेऽधोलिखितेषु प्रसङ्गेषु यकारो गुरुः स्मर्यते—

**पदादौ—**

यज्ञेन । यज्ञम् । ३१।१६ ॥

**रेफेण संयुक्तः—**

सूर्य्यः । ३।९ ॥

**हकारेण संयुक्तः—**

गेह्याय । १६।४४ ॥

**यकारेण संयुक्तः—**

धाय्यारूपमितिधाय्या रूपम् । १९।२४(पदपाठे १९।२२)

**अवग्रहे परभागादिः—**

देवयजनमितिदेव यजनम् । ४।१ ॥

आम्रेडिते तूभयत्र (पदादाववग्रहे च) यथानियमम्—

य्त्रयत्रेतियत्र यत्र । २९।४३ ॥

विशेषः—इतिनाऽऽवेष्टने क्रियमाणे इतिपदात् परो यकारः पदादिः सन्नपि गुरुर्न स्मर्यते । तद्यथा—

यत्रयत्रेतियत्र यत्र । २९।४३ ॥

य्यज्ञपतिरितियज्ञ पतिः । १।२ ॥

ककोशस्था विशिष्टा लेखनपद्धतिः—आस्माकीनेऽतिप्राचीने (वि० सं० १४७१) पदग्रन्थे यत्र-यत्र यकारो गुरुरिष्यते तत्र-तत्र वकारवद् यकारोऽपि द्विलिख्यते । तद्यथा—

य्यज्ञेन, सूर्य्यः, गेहय्याय, धाय्यारूपमितिधाय्या रूपम् ।

ककोशेऽन्यद् वैशिष्ट्यम्—अन्यकोशेषु आवेष्टने क्रियमाणे इतिपदात् परो यकारो लघुः स्मर्यते, परन्त्वस्मिन् कोशे पदादित्वात् तस्य संहितावद् गुरुत्वमाश्रित्य द्विलिख्यते । तद्यथा—

य्यत्रयत्रेतिय्यत्र यत्र । २९।४३ ॥

य्यज्ञपतिरितिय्यज्ञ पतिः । १।२ ॥

ख--लघुयकारः—गुरुयकारनिर्देशादन्यत्र पदमध्यगो यकारो लघुः स्मर्यते । तद्यथा—

देवयजनमितिदेव यजनम् । ४।१ ॥

ककोशे तु न केवलं य-र-हवर्णैरेवासंयुक्तोऽपि तु व्यञ्जनान्तरमात्रेणासंपृक्तः पदमध्यगो यकारो लघुः स्मर्यते ।

एवमावेष्टने क्रियमाणे इतिपदात् परः पदादिरपि यकारो लघुरेव स्मर्यते । तद्यथा—

यज्ञपतिरितियज्ञ पतिः । १।२ ॥

कसंज्ञके प्राचीनतमे कोशे तु इतिपदात् परोऽपि यकारो गुरुः स्मर्यते । तेन स द्विलिख्यत इत्युक्तं पुरस्तात्[1] ।

---

१. य्यत्रयत्रेतिय्यत्र यत्र (२९।४३) य्यज्ञपतिरितिय्यज्ञ पतिः (१।२)॥

**लघुयकारस्य विशिष्टः संकेतः**—आस्माकीने ककोशे यकारस्य लघुत्वं द्योतनाय यकारस्य मध्येऽधस्ताच्च बिन्दुर्निक्षिप्यते । तद्यथा—

**देवयजनमितिदेव य़जनम्[1] । ४।१ ॥**

क्वचित् मध्येऽधस्ताद्वैक एव बिन्दुर्दृश्यते । मुद्रणाक्षरेषु मध्येऽधस्ताच्च बिन्दोर्निक्षेपो न संभवतीति कृत्वा केवलमधस्तादेव निर्दिष्टः । तद्यथा—

**देवय़जनमितिदेव य़जनम् । ४।१ ॥**

**ग—लघुतरो यकारः**—संहितापाठ इव पदपाठेऽपि लघुतरस्य यकारस्य लोप एव भवति । तद्यथा—

**वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । १।१३ ॥**

तस्मान्नायं पदपाठे श्रूयते ।

**क—गुरुवकारः**—माध्यन्दिनपदपाठे निम्ननिर्दिष्टो वकारो गुरुः श्रूयते—

पदादिः--पदपाठे सर्वोऽपि पदादिर्वकारो गुरुर्भवति । तद्यथा—

**व्वायवः । व्विष्णोः । व्वः । व्वाम् ।**

**विशेषः**—संहितापाठे वः वाम् इत्यनयोर्युष्मदादेशयोः, **वा वै** इत्यनर्थकयोर्निपातयोः; **वा** इतिविकल्पार्थस्य च वकारस्य लघुत्वमुक्तम्, परन्तु कसंज्ञकं प्राचीनं कोशं विहायान्येषु पदकोशेषु एषामपि गुरुत्वमाश्रित्य द्विर्लेखनं भवति, तथा चैवोदाहृतम् । ककोशे त्वेतेषां संहितावदेव लघुत्वमाश्रित्य सकृदेव वकारलेखनं दृश्यते। एवमेव वृत्रादिपदेषु ऋकारे परतः श्रूयमाणो वकारोऽपि ककोशे लघुरेव स्मयते ।

अवग्रह उत्तरभागादिः—अवग्रहे यत्रोत्तरभागस्यादौ वकारः श्रूयते स गुरुर्भवति, तस्माद् द्विश्च लिख्यते । तद्यथा—

**देववीतयऽइतिदेव व्वीतये । १।१५ ॥**

---

१. कहस्तलेखे 'य्य' इत्येवं लेखनं लिपिकारप्रमादजम् ।

विशेषः—कसंज्ञके प्राचीने पदकोशे त्ववग्रहे परभागादिर्वकारोऽपि लघुरेव स्मर्यते, सकृच्च लिख्यते । तद्यथा—

देववीतयऽइतिदेव वीतये । १।१९ ॥

यत्र वकारादिपदस्य इतिनाऽऽवेष्टनं क्रियते तत्र कसंज्ञके कोशे यकारवद् वकारस्यापि गुरुत्वमाश्रीयते, तस्माद् द्विश्च लिख्यते । तद्यथा—

व्विष्णोऽइतिव्विष्णो । १।४ ॥

व्व्रतपतऽइतिव्व्रत पते । १।५ ॥

अन्यपदकोशेषु इतिपदात् परो पदादिर्वकारोऽपि लघुत्वात् सकृदेव लिख्यते ।

**ख—लघुवकारः**—पदग्रन्थे पदमध्यग इतिकरणाच्च परो वकारो लघुः स्मर्यते । तद्यथा—

**पदमध्यगः**—

देवयजनमितिदेव यजनम् । ४।१ ॥

**इतिकरणात् परः**—

व्विष्णोऽइतिविष्णो । १।४ ॥

व्व्रतपतऽइतिव्रत पते । १।५ ॥

**विशेषः**—कसंज्ञके कोशे इतिपदात् परस्यावेष्टयमानस्य पदादेर्वकारस्य गुरुत्वमेव स्मर्यते द्विश्च लिख्यते, अवग्रह उत्तरभागादिश्च लघुः स्मर्यते सकृच्च लिख्यत इत्युभयं पुरस्तादुक्तम् ।

**ग—लघुतरो वकारः**—पदपाठेऽपि पदान्तीयः सन्धिजो वकारो लघुतर एव स्मर्यते । तद्यथा—

त्रिनवत्रयस्त्रिंशाविितित्रिनवत्रयस्त्रिंशौ । १०।१४ ॥

एष यकारवकारयोरुच्चारणनिमित्तो लेखनपद्धतौ यो भेदः स सामान्येन निर्दिष्टः, विशेषस्तु यथासम्प्रदायपाठमूहनीयः ।



# माध्यन्दिन-पदपाठस्य चतुर्विधः पाठः

माध्यन्दिनपदपाठस्य येषां हस्तलिखितानां मुद्रितानां च कोशानां साहाय्येन मयेदं संस्करणं व्यधायि, तेषां पारस्परिकतुलनया यो निष्कर्षो मया समुपलब्धस्तदनुसारं माध्यन्दिनपदपाठस्य चतुर्विधः पाठो वर्तते । स चैवम्—

१—**प्रथमः पाठः**—स वर्तते, यमुत्तरभारतीया वैदिकाः पठन्ति । अस्मिन् पाठे संयुक्तानां व्यञ्जनानां यथालक्षणं द्विर्वचनमुपलभ्यते । अस्य पाठस्य प्रातिनिध्यं वाराणसीस्थे सरस्वतीभवनपुस्तकालये विद्यमानौ ङ्चसंज्ञकौ (ग्रन्थसंख्या ००१०५२-५३) कोशौ पूनानगरस्थो धसंज्ञकः (क्रमसंख्या ३५३) कोशश्च पूर्णरूपेण कुर्वन्ति । काश्यां मुद्रितो ग्रन्थोऽपि स्वल्पतमभेदेनामुमेव पाठमनुसरति (अत्र यो भेदः सोऽनुपदं द्रष्टव्यः) ।

अयं पाठोऽस्माभिः प्रधानरूपेण प्रथमं स्थूलाक्षरैर्निर्दिष्टः ।

२—**द्वितीयः पाठः**—स विद्यते, यः प्रथमं पाठमनुसरन्नपि विशिष्टेषु स्थलेषु स्वरविधाने स्वराङ्कने वा कञ्चिद् भिन्नं प्रकारमनुसरति । तद्यथा—

अस्मिन् पाठेऽवगृह्यमाणे पदे यत्रोत्तरभाग उत्तम उपोत्तमो[1] वोदात्तो वा स्वरितो वा भवति, ततश्च पूर्वं द्वौ वा त्रयो वाऽनुदात्ता भवन्ति, तत्रोदात्तात् स्वरिताद्वाऽव्यवहितं पूर्वमनुदात्तं विहायाऽन्येऽनुदात्ता इतिपदस्यान्त्यं स्वरितमाश्रित्य तथैवैकश्रुत्यं लभन्ते, यथा पूर्वभागस्था अनुदात्ताः । तद्यथा—

**सुवँविदानाऽइतिसम् व्विदानाः । १२।७९ ॥**

**देवकिल्बिषादितिदेव किल्बिषात् । १२।८१ ॥**

---

१. त्रिप्रभृतीनामन्त्य उत्तमः, तत्समीपस्थः (अन्त्यात् पूर्वः) उपोत्तमः (द्र० काशिका ४।१।७८) ॥

व्वैश्श्वकर्म्मणमितिवैश्श्व कर्म्मणम् । १३।५० ॥

आहनन्न्यायेत्त्या हनन्न्याय । १६।३५ ॥

अयं स्वराङ्कनप्रकारः काशीमुद्रिते पदपाठे प्रायेण दृश्यते। यत्र क्वचिद् अस्मिन् ग्रन्थे प्रथमपाठानुसारी स्वराङ्कनमुपलभ्यते, स प्रमादपाठ इत्यस्माकं मतम्। तद्यथा—

सुपिप्पलाऽइतिसु पिप्पलाः । ११।४५ ॥

कुतः प्रमादपाठ इति चेद्, अग्रे अस्यैव पदस्य द्वितीयपाठानुसारमेव स्वरसंचारदर्शनात्। तद्यथा--

सुपिप्पलाऽइतिसु पिप्पलाः । १२।६० ॥

एतादृशेषु विशिष्टेषु स्थलेषु प्रथमे पाठे इतिपदस्यान्त्यं स्वरितमाश्रित्य पूर्वभागस्था अनुदात्तास्त्वैकश्रुत्यं लभन्ते नापरभागस्थाः, तथा सति तत्रैवं स्वरविन्यासः क्रियते—

सवँविदानाऽइतिसम् व्विदानाः । १२।७९ ॥

देवकिल्ल्विषादितिदेव किल्ल्विषात् । १२।८१ ॥

व्वैश्श्वकर्म्मणमितिवैश्श्व कर्म्मणम् । १३।५० ॥

आहनन्न्यायेत्त्या हनन्न्याय । १६।३५ ॥

**विशेषः**—अनुपदं वक्ष्यमाणयोस्तृतीयचतुर्थपाठयोरप्येतादृशेषु विशिष्टेषु स्थलेषु प्रथमपाठानुसार्येव स्वरसंचार उपलभ्यते। स्वामिदयानन्दभाष्येऽप्ययमेव पाठः प्रायेण वर्तते (द्र० 'ठ' संज्ञकः कोशः)। तस्यैव ग्रन्थस्य 'ड' संज्ञके कोशे तु सम्पादकेन द्वितीयपाठानुसारी (पाणिनीयव्याकरणसिद्धः) पाठः कृत इति ज्ञेयम्। कात्यायनप्रातिशाख्ये १।१४८, १४९ सूत्रयोरुभयथाऽपि स्वरसंचार उपदिश्यते। वैदिकग्रन्थेष्वेतादृशेषु स्थलेषु यथापाठं व्यवस्थाऽऽश्रीयते। तेन प्रातिशाख्यानुसारं स्वरसंचारविषयको द्विविधोऽपि पाठो नियतव्यवस्थया प्रामाणिक इति शक्यते विज्ञातुम्।

द्वितीयपाठस्य स्वराङ्कनप्रकारभेदः सर्वत्र यथास्थानं टिप्पण्यामुट्टङ्कितः ।

**३—तृतीयः पाठः**—सोऽस्ति, यत्र केवलं रेफोत्तरवर्तिनां संयुक्तानां व्यञ्जनानामेव द्विर्लेखनमुपलभ्यते, नान्येषाम् । अस्मिन् पाठे 'गच्छ'[1] आदिषु पदेषु छकारात् पूर्वं पठ्यमानश्चकारोऽपि **न दृश्यते** ।

अयं पाठः प्राधान्येन **खजकोशयोः मुम्बय्यां मुद्रिते** च ग्रन्थे उपलभ्यते । प्राचीनतमः **'क' कोशो**ऽपि व्यञ्जनानां द्वित्वाद्वित्व-विषय इममेव पाठमनुसरति । अयं तृतीयः पाठः स्वरसंचारविषये प्रथमं पाठमेवावरुणद्धि ।

अस्मिन् पाठे संयुक्तव्यञ्जनानां द्वित्वाद्वित्वविषयको यावत्सु पदेषु भेदस्तावतां पदानां पाठो मुख्यपाठानन्तरं सूक्ष्माक्षरेषु निर्दिष्टः ।

**विशेषः**—एषु त्रिष्वपि पाठेषु पुनरुक्तानि पदानि मन्त्राश्च यथालक्षणं लुप्यन्ते । तल्लोपात् पदपाठस्य या कण्डिकासंख्या सा संहिताया मन्त्रकण्डिकासंख्यया सह प्रायेण भिद्यते ।

**४—चतुर्थः पाठः**—स ज्ञेयो, य आस्माकीने प्राचीनतमे **कसंज्ञके** कोश उपलभ्यते । अयं पाठो यद्यपि संयुक्तव्यञ्जनानां द्वित्वाद्वित्व-विषये स्वरसंचारे च **तृतीयमेव पाठमनुसरति**, तथाप्यत्र सन्ति केचन विशिष्टा भेदा, येऽस्य स्वतन्त्रं पाठं व्यवस्थापयन्ति । तद्यथा—

**क**—अस्मिन् पाठे **वाम् वः वा वै** आदीनां पदादिर्वकारः संहितापाठ इव लघुः स्मर्यते । अत एवात्र एषां वकार एक एव लिख्यते । सर्वेष्वन्यकोशेषु एषां पदानामपि वकारो गुरुः स्मर्यते द्विश्च लिख्यते 'व्व' इति ।

एवमेव ऋकारोत्तरः पदादिवकारोऽप्यस्मिन् पाठे संहितावत् **'वृ'** इत्येवं ह्रस्व एव श्रूयते । अन्यत्र तु **'व्वृ'** इत्येवं गुरुराश्रीयते ।

---

१. मुम्बईमुद्रिते बहुत्र रेफोत्तरवर्तिनो व्यञ्जनस्य द्विर्वचनाभावः, छकारस्य च सचकारः 'च्छ' इत्येवं पाठ उपलभ्यते । अस्य कोशस्य 'च्छ' इत्येवं रूपः पाठो दशमाध्यायपर्यन्तं निदर्शनार्थं टिप्पण्यां निर्दिष्टः । **घसंज्ञके** कोशे व्यञ्जनानां यथायथं द्विर्वचनपाठेऽपि छकारश्चकाररहित एव प्रायेण दृश्यते । पाणिनीयव्याकरणानुसारं यत्र तुगागमस्य नित्यत्वमुक्तं, तत्रापि वैदिकपाठे व्यवस्थया विकल्प उपलभ्यते ।

संहितायां वाम् वै वः वा वृ एषां वकारस्य लघुत्वं याज्ञवल्क्यशिक्षाया-मभिहितम् ।

ख—अस्मिन् पाठे आवेष्टनकाले इतिकारात् परः पदादिर्वकारो गुरुः स्मर्यते द्विश्च लिख्यते । तद्यथा—

व्विष्णोऽइतिव्विष्णो । १।४ ॥

व्विश्वायुरितिव्विश्व आयुः । १।४ ॥

अन्यपदकोशेषु इतिकारात् परः पदादिर्वकारो लघुः स्मर्यते सकृच्च लिख्यते । तद्यथा—

व्विष्ष्णोऽइतिविष्णो । १।४ ॥

व्विश्श्वायुरितिविश्श्व आयुः । १।४ ॥

ग—अस्मिन् पदपाठेऽवग्रहात् पर उत्तरभागादिर्वकारो लघुः स्मर्यते सकृच्च लिख्यते । तद्यथा—

देववीतयऽइतिदेव वीतये । १।१७ ॥

ब्रह्मवनीतिब्रह्म वनि । १।१८ ॥

अपरेषु कोशेष्ववग्रहात् परो वकारो गुरुः स्मर्यते द्विश्च लिख्यते । तद्यथा—

देववीतयऽइतिदेव व्वीतये । १।१७ ॥

ब्रह्मवनीतिब्रह्म व्वनि । १।१८ ॥

घ—अस्मिन् पदपाठ आवेष्टने इतिकरणात् परो यकारो गुरुः स्मर्यते द्विश्च लिख्यते । तद्यथा—

य्यज्ञपतिरितिय्यज्ञ पतिः । १।२ ॥

अन्येषु पदकोशेषु इतिकारात् परो यकारो लघुः स्मर्यते सामान्यरूपेण च लिख्यते । तद्यथा—

यज्ञपतिरितियज्ञ पतिः । १।२ ॥

**विशेषः**—अस्मिन् कोशे गुरुर्यकारोऽपि गुरुवकारस्येव द्विर्लिख्यते । अन्यकोशेषु तु प्रायेण 'य़' इत्येवं निर्दिश्यते ।

ङ--अस्मिन् पदकोशेऽवग्रहादुत्तरो यकारो लघुः स्मर्यते । तद्यथा—

**देवयुवमितिदेव युवम् । १।१२ ॥**

अन्येषु कोशेषु अवग्रहात् परो यकारो गुरुः स्मर्यते 'य़' इत्येवं च लिख्यते । तद्यथा—

**देवयुवमितिदेव य़ुवम् । १।१२ ॥**

**विशेषः**—अस्मिन् कोशे यकारवकारयोर्गुरुत्वलघुत्वयोः स्वतन्त्रायां व्यवस्थायां सत्यपि बहुत्र प्रथमद्वितीयतृतीयपाठवद् वैपरीत्येनापि लेखनं दृश्यते । स लेखककृतः प्रमादपाठो ज्ञेयः । एतादृशेषु स्थलेषु शुद्धः पाठष्टिप्पण्यां प्रदर्शितः ।

**च**—अस्मिन् पदपाठे व्यञ्जनान्तरेणासंपृक्तो लघुयकारो मध्येऽधस्ताच्चोभयत्र बिन्दुना सह निर्दिश्यते, क्वचिदेकेनापि बिन्दुना । तद्यथा—

**देवयज्यायाऽइतिदेव यज्यायै । १।१३ ॥**

अत्र इतिपदात् पूर्वौ य़ या, परौ च य़ यै इत्यत्र यकारः ।

**टिप्पणी**—मध्यवर्तिनो बिन्दोर्मुद्रणे निर्देशो न संभवति, तादृशमुद्राक्षरस्याभावात् । अतोऽस्माभिरिह मध्यबिन्दुर्न निर्दिष्टः, अधस्तादेक एव बिन्दुः 'य़' इत्येवं निर्दिष्टः । अपि च 'य़' इत्यस्मिन् मुद्राक्षरे उकारमात्रायाः संबन्धः शक्यो नाभूदिति कृत्वा तादृशेषु स्थलेषु उकारमात्राया अधस्तात् 'य़ु' इत्येवं बिन्दुना निर्देशो विहितः ।

**छ**—अस्मिन्नपि पाठे 'गच्छ' आदिषु तृतीयपाठ इव छकारात् पूर्वं श्रूयमाणश्चकारो न दृश्यते ।

**ज**—अस्मिन् पदपाठे सकारात् पूर्ववर्ती वर्गीयः प्रथमो वर्णः प्रायेण द्वितीय उपलभ्यते । तद्यथा—

**ऋख्सामाभ्याम् । ४।१ ॥ ऋख्सामयोः । ४।९ ॥**

एवमेवान्यत्रापि **ऋक्साम**-शब्दे खकारो दृश्यते[1] । तथा—

**अर्व्वथ्स्वित्यर्व्वत् सु । हृथ्स्वितिहृत् सु । ४।३१ ॥**

**पृथ्स्वितिपृत् सु ।** ६।२६ (पदपाठे ६।२७) ॥

**मथ्स्व ।** ८।५ (पदपाठे ८।४) ॥

**पथ्स्वितिपत् सु । ९।८ ॥**

**पश्चाथ्सदऽइतिपश्चात् सदः । ९।३५ ॥**

इत्येवमादिषु प्रथमवर्णस्य स्थाने द्वितीयवर्णापत्तिर्दृश्यते । न केवलं पदपाठ एवापि त्वस्मिन् पदकोशे मन्त्रप्रतीकनिर्देशेऽपि द्वितीय-वर्णापत्तिरुपलभ्यते । तद्यथा—

**तथ्सवितुः । तत् ! सवितुः ।** ३।३५ मन्त्रपदे ॥

**विशेषः**—अस्मिन् पदकोशे **वत्स-उत्स-अप्स-गृत्स-अप्सरा** इत्यादिषु द्वितीयवर्णापत्तिर्न दृश्यते ।

ककोशं विहायान्यकोशेषु द्वितीयवर्णापत्तिर्नदृश्यते, परन्तु मुम्बईमुद्रिते 'ट' संज्ञके कोशे क्वचित् द्विवर्चनेन सह द्वितीयवर्णा-पत्तिरुपलभ्यते । तद्यथा—

**उत्थमौ । १३।३१ ॥** **उत्थसम् । १३।४४ ॥**

**अप्फसः । १४।४ ॥** **द्रप्फसः । १४।९ ॥**

मुम्बईमुद्रिते क्वचिदेव द्वितीयवर्णापत्तेर्दर्शनात् मुद्रणप्रमादः स इत्यस्माकं मतम् ।

वर्गीयप्रथमवर्णस्थाने तद्वर्गीयद्वितीयवर्णलेखनपद्धतिस्तैत्तिरी-याणां संहितादिषूपलभ्यते । वार्त्तिककारः कात्यायनोऽपि पौष्कर-सादेराचार्यस्य मते **'चयो द्वितीयाः शरि पौष्करसादेः'** (८।४।४८) इति वार्तिकेन प्रथमानां द्वितीयत्वमादिशति ।

---

१. यथा—१३।५६ (पदपाठे १३।५१), १८।४३ (पदपाठे १८।४१) ।

ऋ—अस्मिन् पदपाठे क्वचिद् अन्यकोशेभ्यः पाठभेदा अप्युपलभ्यन्ते, ते प्रायेण लेखकप्रमादजाः, परन्तु क्वचित् तादृशा अपि पाठभेदाः सन्ति, ये पाठभेदत्वेनैव स्वीकर्तु मर्हाः । तद्यथा—

(i) ऊर्णम्म्रदसमित्यूर्णम् अदसम् । २।२, ६ ॥

ऊर्णम्म्रदाऽइत्यूर्णम् म्रदाः । २१।३३ (पत्रा ४, क) ॥

अन्येषु पदकोशेषु तु 'ऊर्णम्म्रदाऽइत्यूर्णं म्रदाः' इत्येवमवगृह्यते । कपाठानुसारी पदविभागो मैत्रायणीसंहितायाः 'लिपजिग'-संस्करणे प्रथमभागे एकादशे (११) पृष्ठे टिप्पण्यां 'ऊर्णम्रदा इत्यूर्णं म्रदाः' इत्येवं निर्दिष्ट उपलभ्यते ।

ककोशेऽपि द्वयोः स्थानयोः (४।१०; २१।५७ पत्रा ६, क) 'ऊर्णम्म्रदाऽइत्यूर्ण म्रदाः' इत्येव पाठो दृश्यते, स च प्रमादपाठः स्यात् ।

(ii) पितरो यथाभागमा वृषायिषत । २।३१ ॥ इत्यत्र—

आ । वृषायिषत ।

इति पदच्छेदो दृश्यते । अन्यपदकोशेषु तु—

आ । अवृषायिषत । इति दृश्यते ।

(iii) शुक्लयजुषि १७।३ मन्त्रे श्रूयते—

घृतश्चुतो मधुश्चुतः ।

पदग्रन्थेष्वस्य पाठ एवमुपलभ्यते—

घृतश्चुतऽइतिघृत श्चुतः । मधुश्चुतऽइतिमधु श्चुतः ।

परन्त्वस्मिन् ककोशे—

घृतश्च्युतऽइतिघृत श्च्युतः । मधुश्च्युतऽइतिमधु श्च्युतः ।

मधुश्चुतः पदं यजुषि २१।४२ मन्त्रेऽपि श्रूयते । तत्रापि कपाठे सयकारः 'मधुश्च्युतः' इत्येव पाठो दृश्यते ।

इदं चावधेयम्—यजुषः १७।३ मन्त्रस्य मुम्बईमुद्रिते उव्वट-महीधरभाष्यग्रन्थे स्वामिदयानन्दभाष्ये च सयकारवान् **'घृतश्च्युतो मधुश्च्युतः'** पाठो दृश्यते, तथैव च व्याख्यायते। परन्तु २१।४२ मन्त्रस्थे **'मधुश्चुतः'** पदे यकार एषु भाष्यग्रन्थेषु नोपलभ्यते।

अयं पाठो लेखकप्रमाज इति न शक्यते वक्तुम्, द्वयोः स्थानयोः समानरूपेण पाठात्। नैतावदेव, मैत्रायणीपदग्रन्थेऽपि **'मधुश्च्युत इतिमधुः च्युतः'** इति सयकारपाठ उपलभ्यते[1]। सकारस्तत्र पूर्वस्यांश इति तु विशेषः[2]।

(iv) माध्यन्दिनसंहितायां १२।४ मन्त्रे तदीये पदपाठे च **'वामदेव्यम्'** इति पदमन्तोदात्तं श्रूयते। परन्तु ककोशे **'वामदेव्यम्'** इति पदमन्तस्वरितं पठ्यते। तद्यथा—

**वामदेव्यमितिवाम देव्यम्।**

अन्तस्वरितत्वं च वामदेव्यस्य नान्यत्रोपलब्धे वैदिकवाङ्मये-ऽस्माभिरुपलब्धः। भगवान् पाणिनिस्तु—**वामदेवाड्ड्यड्ड्यौ** (अष्टा० ४।२।८) इति सूत्रेण **ड्यत्-ड्यौ** द्वौ प्रत्ययौ विदधाति। तत्र ड्यप्रत्यये प्रत्ययस्वरेणान्तोदात्तो वामदेव्यशब्दो निष्पद्यते, ड्यति तु **तित्स्वरितम्** (अष्टा० ६।१।१७९) इत्यनुशासनाद् अन्तस्वरितः, यथा चात्र कपाठ उपलभ्यते।

एतादृशाः पाठविशेषा अस्य ककोशस्य माध्यन्दिनसंहितायाः कस्याश्चिदवान्तरशाखायाः पदपाठत्वं द्योतयन्ति।

(v) माध्यन्दिन-पदपाठे यत्र यत्र **'ॐऽइत्यूँ'** पाठो दृश्यते तत्रास्मिन् कोशे **'उंऽइत्युम्'** इत्येवं पाठ उपलभ्यते।

महाभाष्ये **उञ ऊँ** (१।१।१८) सूत्रभाष्ये योगविभागेन **'ॐ इति' 'उ इति'** च द्वौ प्रयोगौ प्रदर्शितौ। तैत्तिरीयसंहितायां मन्त्र-पाठे यत्र यत्र **'उ'** पदं भूयते, तत्र तत्र पदपाठे **'उ'** इत्येव प्रयुज्यते। तत्र इतिना प्रगृह्यत्वमपि न प्रदर्श्यते।

---

१. द्रष्टव्यम्—अस्मिन्नेव संस्करणे १७।३ मन्त्रस्य पदपाठस्य टिप्पण्याम्।

२. [illegible]तीयम्—सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः (वा० ३।१।११), दधिस्यति, मधुस्यति।

अ—अस्मिन् कोशेऽन्तिमे दशके प्रत्यध्यायमन्ते '**शाकल्यकृते पदेन**' इत्येवं पाठो दृश्यते ।

कलकत्तानगरस्य 'रायलएशियाटिक-सोसाइटी' इत्याख्यस्य पुस्तकालयेऽप्यस्ति १६६० संख्याक उत्तरार्धस्यैकः कोशो, यस्य चत्वारिंशत्तमेऽध्याये '**शाकल्यकृते पदे**' इत्येवं पाठ उपलभ्यते ।

अनयोर्द्वयोर्हस्तलेखयोस्तत्राप्यास्माकीनस्यातिप्राचीनस्य हस्तलेखस्य प्रामाण्येन वाजसनेयसंहितायाः पदपाठोऽपि शाकल्यप्रोक्त इति शक्यते वक्तुम् ।

**ट**—अस्मिन् पदपाठे पुनरुक्तानां पदानां मन्त्रांशानां मन्त्राणां च संक्रमो (=लोपो) न दृश्यते[1], ते यथास्थानं पठ्यन्ते । अतोऽस्मिन् ग्रन्थे मन्त्रकण्डिकासंख्यया साकं पदकण्डिकासंख्यायाः क्वचिदपि भेदो नोपलभ्यते (अन्यकोशेषु पुनरुक्तानां लोपात् संख्याभेदो जायते) । यत्र क्वचित् पुनरुक्तानां मन्त्राणां पाठो नापि दृश्यते, तत्रापि प्रतीकमात्रं निर्दिश्य स्थानं रिक्तं परित्यज्यते पाठलेखनाय ।

## गलितागलितपाठयोः को मुख्यः पाठः

कपाठवर्जमन्येषु सर्वेषु कोशेषु पुनरुक्तानां पदानां मन्त्रांशानां मन्त्राणां च संक्रमो दृश्यते । वाजसनेयप्रातिशाख्येऽपि संक्रमविधानं दृश्यते । ततो जायते विचारणा यत् कपाठस्य किं मूलमिति ?

एतस्मिन् विषये पदपाठस्य **संक्रमरूपः पाठ एव मूलभूत** इत्यस्माकं मतम् । तत्रैते हेतवः—

**क**—वाजसनेयप्रातिशाख्ये संक्रमपाठविषयकाणां नियमानामुपलम्भात् ज्ञायते यत्तन्मते संक्रमरूप एव पाठो, न तु सकलपाठ इति ।

**ख**—क-हस्तलेखे यत्र यत्र अन्यकोशे लुप्तानां पदानां मन्त्रांशानां मन्त्राणां वा पदानि लिख्यन्ते, तत्र प्रायेण पदस्वरोऽशुद्धो निर्दिश्यते । क्वचिच्च संहितास्वर एव पदस्वरस्थाने निर्दिश्यते । तद्यथा—

**पा॑त । स्व॒स्तिभि॒रिति॑ । सदा॑ । नः॒ । २७।२८ ॥**

---

१. केवलमेकस्मिन् स्थाने प्रथमाध्यायस्यैकविंशतितमस्य मन्त्रस्य पदपाठे 'अर्धं गलितम्' इति निर्देश उपलभ्यते ।

अत्र पदस्वरानुसारम्—

पात । स्वस्तिभिः । सदा । नः ॥

इत्येवं पाठेन भाव्यम् । इमानि पदान्यन्यकोशेषु न पठ्यन्ते पुनरुक्तत्वात् ।

ग—अन्यत्र गलितानां पदानामिह पाठे बहुत्र अवग्रहेऽप्यशुद्धयो दृश्यन्ते ।

घ—बहुत्र गलितमन्त्रपदेषु क-कोशे मन्त्रस्य प्रतीकमात्रं दृश्यते, पाठपूर्त्यर्थं च स्थानं रिक्तमुलभ्यते ।

एभिर्हेतुभिः संक्रमपाठस्यैव मुख्यत्वं द्योत्यते । लेखकेन कदाचित् ककोशस्याऽऽधारभूते कोशे लुप्तानां पदानां पूर्त्यर्थः प्रयत्नः कृतः स्यात् । तत्पूर्तिकाले पूर्वपठितस्य पदपाठस्य यथायथमस्मरणात् स्वरावग्रहयोरशुद्धयः संजाताः स्युरिति संभाव्यते ।

विशेषः--अत्र मुद्रणे ककोशस्य तावानेव पाठः प्रदर्शितः, यो मुख्यपाठात् द्विरावृत्यभावरूपात् पाठाच्च कथंचिदपि भिद्यते । अत्र कपाठे पदमध्यस्य लघुयकारस्य निदर्शनाय यो विशेषः बिन्दुनिक्षेपरूपः प्रयासो दृश्यते, सोऽप्यत्र यथास्थानं निर्दशितः ।

इत्थमस्मिन् प्रकरणे माध्यन्दिन-पदपाठस्य चतुर्विधः पाठः' इति यथामति सम्यक् प्रतिपादितम् । आशासे वैदिका विद्वांसोऽस्मिन् विषये विचार्य तथ्यमुपस्थापयिष्यन्ति ।

●

# ॐ ओम् ॐ

# अथ माध्यन्दिन-संहितायाः पदपाठः

## प्रथमोऽध्यायः

[उदीच्य-पाठः]

ओ३म् । इषे । त्वा । ऊर्ज्जे । त्वा । वायवः । स्थ । देवः । वः । सविता । प्र । अर्प्पयतु । श्रेष्ठतमायेतिश्रेष्ठ तमाय । कर्म्मणे । आ । प्यायद्ध्वम् । अग्घ्न्याः । इन्द्राय । भागम् । प्रजावतीरितिप्रजा वतीः । अनमीवाः । अयक्क्ष्माः । मा । वः । स्तेनः । ईशत । मा । अघशꣳस-ऽइत्त्यघ शꣳसः । ध्रुवाः । अस्म्मिन् । गोपताविति गो पतौ । स्यात । बह्वीः । यजमानस्य । पशून् । पाहि ॥१॥

---

[दाक्षिणात्यपाठस्य विशिष्टांशाः]

श्रेष्ठतमायेतिश्रेष्ठ तमाय । प्यायध्वम् । अघ्न्याः । प्रजावतीरितिप्रजा वतीः । अयक्ष्माः । अघशꣳसऽइत्यघ शꣳसः । अस्मिन् । बह्वीः ॥१॥

---

[कहस्तलेखस्य विशिष्टाः पाठाः][1]

वाय्यवः । वः । अर्प्पय्यतु । श्रेष्ठतमाय्येतिश्रेष्ठ तमाय्य । प्याय्यध्वम् । इन्द्राय्य । प्रजावतीरितिप्रजा वतीः । अय्यक्ष्माः । वः । य्यजमानस्य ॥१॥

---

१. विशेषः—इतोऽग्रे दाक्षिणात्यपाठस्य कपाठस्य च पार्थक्यं रेखया प्रदर्शयिष्यते । सर्वत्रोपरितनो दाक्षिणात्यपाठोऽधस्तनश्च कपाठो विज्ञेयः ।

वसोः । पवित्रम् । असि । द्यौः । पृथिवी । मातरिश्वनः । घर्म्मः । विश्वधाऽइतिविश्व धाः ॥ परमेण । धाम्ना । दृꣳहस्व । मा । ह्वाः । मा । ते । यज्ञपतिरितियज्ञ पतिः । ह्वार्षीत् ॥२॥

शतधारमितिशत धारम् । सहस्रधारमितिसहस्र धारम् ॥ देवः । त्वा । सविता । पुनातु । वसोः । पवित्रेण । शतधारेणेतिशत धारेण । सुप्वेतिसु प्वा । काम् । अधुक्षः ॥३॥

सा । विश्वायुरितिविश्व आयुः । विश्वकर्म्मेतिविश्व कर्म्मा । विश्वधायाऽइतिविश्व धायाः ॥ इन्द्रस्य । त्वा । भागम् । सोमेन । आ । तनच्मि । विष्णोऽइतिविष्णो । हव्यम् । रक्ष ॥४॥

अग्ने । व्रतपतऽइतिव्रत पते । व्रतम् । चरिष्यामि । तत् । शकेयम् । तत् । मे । राध्यताम् ॥ इदम् । अहम् । अनृतात् । सत्यम् । उप । एमि ॥५॥

---

पवित्रम् । मातरिश्वनः । विश्वधाऽइतिविश्व धाः । धाम्ना । यज्ञपतिरितियज्ञ पतिः ॥२॥

पवित्रेण । सुप्वेतिसु प्वा । अधुक्षः ॥३॥

विश्वायुरितिविश्व आयुः । विश्वकर्म्मेतिविश्व कर्म्मा । विश्वधायाऽइतिविश्व धायाः । तनच्मि । विष्णोऽइतिविष्णो । हव्यम् । रक्ष ॥४॥

अग्ने । चरिष्यामि । राध्यताम् । सत्यम् ॥५॥

---

विश्वधाऽइतिविश्व धाः । यज्ञपतिरितियज्ञ पतिः ॥२॥

विश्वायुरितिविश्व आयुः । विश्वकर्म्मेतिविश्व कर्म्मा । विश्वधायाऽइतिविश्व धायाः । विष्णोऽइतिविष्णो ॥४॥

व्रतपतऽइतिव्रत पते । शकेयम् ॥५॥

कः । त्वा । युनक्ति । सः । कस्मै । तस्मै ॥
कर्मणे । वाम् । वेषाय । वाम् ॥६॥

प्रत्युष्टमितिप्रति उष्टम् । रक्षः । प्रत्युष्टाऽइतिप्रति
उष्टाः । अरातयः । निष्टप्तम् । निस्तप्तमितिनिः तप्तम् ।
रक्षः । निष्टप्ताः । निस्तप्ताऽइतिनिः तप्ताः । अरातयः ॥
उरु । अन्तरिक्षम् । अनु । एमि ॥७॥

धूः । असि । धूर्व । धूर्वन्तम् । धूर्व । तम् । यः ।
अस्मान् । धूर्वति । तम् । धूर्व । यम् । वयम् । धूर्वामः ॥
देवानाम् । असि । वह्नितममितिवह्नि तमम् । सस्नितम-
मितिसस्नि तमम् । पप्रितममितिपप्रि तमम् । जुष्टतम-
मितिजुष्ट तमम् । देवहूतममितिदेव हूतमम् ॥८॥

अह्रुतम् । असि । हविर्धानमितिहविः धानम् ॥
विष्णुः । त्वा । क्रमताम् । उरु । वाताय । अपहतमित्यप
हतम् । रक्षः । यच्छन्ताम् । पञ्च ॥९॥

---

युनक्ति । कस्मै । तस्मै ॥६॥

प्रत्युष्टमितिप्रति उष्टम् । रक्षः । प्रत्युष्टाऽइतिप्रति उष्टाः । निष्टप्तम् ।
निस्तप्तमितिनिः तप्तम् । रक्षः । निष्टप्ताः । निस्तप्ताऽइतिनिः तप्ताः ।
अन्तरिक्षम् ॥७॥

अस्मान् । वह्नितममितिवह्नि तमम् । सस्नितममितिसस्नि तमम् ।
पप्रितममितिपप्रि तमम् । जुष्टतममितिजुष्ट तमम् ॥८॥

विष्णुः । अपहतमित्यप हतम् । रक्षः । यच्छन्ताम् ॥९॥

---

युनक्ति । वाम् । वेषाय । वाम् ॥६॥ अरातयः । अरातयः ॥७॥
यः । यम् । वयम् । वह्नितममितिवह्नि तमम् ॥८॥
वाताय । यच्छन्ताम् ॥९॥

देवस्य । त्वा । सवितुः । प्रसवऽइतिप्र सवे । अश्विनोः । बाहुभ्यामितिबाहु भ्याम् । पूष्णः । हस्ताभ्याम् । अग्नये । जुष्टम् । गृह्णामि । अग्नीषोमाभ्याम् । जुष्टम् । गृह्णामि ॥१०॥

भूताय । त्वा । न । अरातये । स्वः । अभिविख्येषमित्यभि विख्येषम् । दृंहन्ताम् । दुर्याः । पृथिव्याम् । उरु । अन्तरिक्षम् । अनु । एमि । पृथिव्याः । त्वा । नाभौ । सादयामि । अदित्याः । उपस्थऽइत्युप स्थे । अग्ने । हव्यम् । रक्ष ॥११॥

पवित्रेऽइतिपवित्रे । स्थः । वैष्णव्यौ । सवितुः । वः । प्रसवऽइतिप्र सवे । उत् । पुनामि । अच्छिद्रेण । पवित्रेण । सूर्यस्य । रश्मिभिरितिरश्मि भिः । देवीः । आपः । अग्रेगुवऽइत्यग्रे गुवः । अग्रेपुवऽइत्यग्रे पुवः । अग्रे । इमम् । अद्य । यज्ञम् । नयत । अग्रे । यज्ञ-

प्रसवऽइतिप्र सवे । अश्विनोः । बाहुभ्यामितिबाहु भ्याम् । पूष्णः । हस्ताभ्याम् । अग्नये । जुष्टम् । गृह्णामि । अग्नीषोमाभ्याम् । जुष्टम् । गृह्णामि ॥१०॥

अभिविख्येषमित्यभि विख्येषम् । पृथिव्याम् । अन्तरिक्षम् । पृथिव्याः । अदित्याः । उपस्थऽइत्युप स्थे । अग्ने । हव्यम् । रक्ष ॥११॥

पवित्रेऽइतिपवित्रे । वैष्णव्यौ । प्रसवऽइतिप्र सवे । अच्छिद्रेण । पवित्रेण । रश्मिभिरितिरश्मि भिः । अग्रेगुवऽइत्यग्रे गुवः । अग्रेपुवऽइत्यग्रे पुवः । अग्रे ।

---

अग्नये ॥१०॥

भूताय । अरातये । अभिविख्येषमित्यभि विख्येषम् । दुर्याः । सादयामि ॥११॥

वः । सूर्यस्य । यज्ञम् । नयत । यज्ञपतिमितियज्ञ पतिम् ।

पतिमितियज्ञ पतिम् । सुधातुमितिसु धातुम् । यज्ञ-पतिमितियज्ञ पतिम् । देवयुवमितिदेव युवम् ॥१२॥

युष्माः । इन्द्रः । अवृणीत । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । यूयम् । इन्द्रम् । अवृणीध्वम् । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । प्रोक्षिताऽइतिप्र उक्षिताः । स्थ । अग्नये । त्वा । जुष्टम् । प्र । उक्षामि । अग्नीषोमाभ्याम् । दैव्याय । कर्म्मणे । शुन्धध्वम् । देवयज्ज्यायाऽइतिदेव यज्ज्यायै । यत् । वः । अशुद्धाः । पराजघ्नुरितिपरा जघ्नुः । इदम् । वः । तत् । शुन्धामि ॥१३॥

शर्म्म । असि । अवधूतमित्यव धूतम् । रक्षः । अव-धूताऽइत्यव धूताः । अरातयः । अदित्याः । त्वक् । असि । प्रति । त्वा । अदितिः । वेत्तु । अद्रिः । असि ।

---

अद्य । यज्ञम् । अग्रे । यज्ञपतिमितियज्ञ पतिम् । यज्ञपतिमितियज्ञ पतिम् ॥१२॥

युष्माः । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । अवृणीध्वम् । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । प्रोक्षिताऽइतिप्र उक्षिताः । अग्नये । जुष्टम् । उक्षामि । अग्नीषोमाभ्याम् । दैव्याय । शुन्धध्वम् । देवयज्यायाऽइतिदेव यज्यायै । अशुद्धाः । पराजघ्नुरितिपरा जघ्नुः ॥१३॥

अवधूतमित्यव धूतम् । रक्षः । अवधूताऽइत्यव धूताः । अदित्याः ।

---

य्यज्ञपतिमितियज्ञ पतिम् । देवयुवमितिदेव युवम् ॥१२॥

य्युष्माः । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । य्यूयम् । वृत्रतूर्य्यऽइतिवृत्र तूर्य्ये । अग्नय्ये । दैव्याय्य । देवयज्यायाऽइतिदेव य्यज्यायै । य्यत् । वः । वः ॥१३॥

अरातय्यः ॥१४॥

वानस्पत्यः । ग्रावा । असि । पृथुबुध्नऽइतिपृथु बुध्नः । प्रति । त्वा । अदित्याः । त्वक् । वेत्तु ॥१४॥

अग्नेः । तनूः । असि । वाचः । विसर्जनमितिवि सर्जनम् । देववीतयऽइतिदेव वीतये । त्वा । गृह्णामि । बृहद्-ग्रावेतिबृहत् ग्रावा । असि । वानस्पत्यः । सः । इदम् । देवेभ्यः । हविः । शमीष्व । शमिष्वेतिशमिष्व । सुशमीतिसु शमी । शमीष्व । शमिष्वेतिशमिष्व ॥ हविष्कृत् । हविःकृदितिहविः कृत् । आ । इहि ॥१५॥

कुक्कुटः । असि । मधुजिह्वऽइतिमधु जिह्वः । इषम् । ऊर्जम् । आ । वद । त्वया । वयम् । सङ्घातꣳसङ्घातमिति-सङ्घातम् सङ्घातम् । जेष्म । वर्षवृद्धमितिवर्ष वृद्धम् । असि । प्रति । त्वा । वर्षवृद्धमितिवर्ष वृद्धम् । वेत्तु । परापूतमितिपरा पूतम् । रक्षः । परापूताऽइतिपरा पूताः । अरातयः । अपहतमित्यप हतम् । रक्षः । वायुः । वः । वि । विनक्तु । देवः । वः । सविता । हिरण्यपाणि-

---

अद्रिः । वानस्पत्यः । पृथुबुध्नऽइतिपृथु बुध्नः । अदित्याः ॥१४॥

अग्नेः । गृह्णामि । बृहद्ग्रावेतिबृहत ग्रावा । वानस्पत्यः । देवेभ्यः । शमीष्व । शमिष्वेतिशमिष्व । शमीष्व । शमिष्वेतिशमिष्व ॥१५॥

मधुजिह्वऽइतिमधु जिह्वः । जेष्म । वर्षवृद्धमितिवर्ष वृद्धम् । वर्षवृद्ध-मितिवर्ष वृद्धम् । रक्षः । अपहतमित्यप हतम् । रक्षः । विनक्तु । हिरण्य-

---

विसर्जनमितिवि सर्जनम् । देववीतयऽइतिदेव वीतये ॥१५॥

त्वया । वयम् । वर्षवृद्धमितिवर्ष वृद्धम् । वर्षवृद्धमितिवर्ष वृद्धम् । अरातयः । वायुः । वः । वः ॥१६॥

रितिहिरण्य पाणिं । प्रति । गृभ्णातु । अच्छिद्रेण । पाणिना ॥१६॥

धृष्टिः । असि । अप । अग्ने । अग्निम् । आमादमित्याम अदम् । जहि । निः । क्रव्यादमितिक्रव्य अदम् । सेध । आ । देवयजमितिदेव यजम् । वह ॥ ध्रुवम् । असि । पृथिवीम् । दृꣳह । ब्रह्मवनीतिब्रह्म वनि । त्वा । क्षत्रवनीतिक्षत्र वनि । सजातवनीतिसजात वनि । उप । दधामि । भ्रातृव्यस्य । वधाय ॥१७॥

अग्ने । ब्रह्म । गृभ्णीष्व । धरुणम् । अन्तरिक्षम् ॥ धर्त्रम् । दिवम् ॥ विश्वाभ्यः । त्वा । आशाभ्यः । उप । दधामि । चितः । स्थ । ऊर्ध्वचितइत्यूर्ध्व चितः । भृगूणाम् । अङ्गिरसाम् । तपसा । तप्यध्वम् ॥१८॥

धिषणा । असि । पर्वती । प्रति । त्वा । अदित्याः । त्वक् । वेत्तु । दिवः । स्कम्भनीः । असि । धिषणा । असि । पार्वतेयी । प्रति । त्वा । पर्वती । वेत्तु ॥१९॥

पाणिरितिहिरण्य पाणिं । गृभ्णातु । अच्छिद्रेण ॥१६॥

धृष्टिः । अग्ने । अग्निम् । आमादमित्याम अदम् । क्रव्यादमितिक्रव्य अदम् । ब्रह्मवनीतिब्रह्म वनि । क्षत्रवनीतिक्षत्र वनि । भ्रातृव्यस्य ॥१७॥

अग्ने । ब्रह्म । गृभ्णीष्व । अन्तरिक्षम् । विश्वाभ्यः । आशाभ्यः । ऊर्ध्वचितइत्यूर्ध्व चितः । तप्यध्वम् ॥१८॥

अदित्याः । स्कम्भनीः ॥१९॥

देवयजमितिदेव यजम् । ब्रह्मवनीतिब्रह्म वनि । क्षत्रवनीतिक्षत्र वनि । सजातवनीतिसजात वनि । वधाय ॥१७॥

पार्वतेयी ॥१९॥

धान्यम् । असि । धिनुहि । देवान् । प्राणाय । त्वा । उदानायेत्त्युत् आनाय । व्यानायेतिवि आनाय । दीर्घाम् । अनु । प्रसितिमितिप्र सितिम् । आयुषे । धाम् । चक्कक्षुषे । त्वा । महीनाम् । पयः । असि ॥२०॥

सम् । वपामि । आपः । ओषधीभिः । ओषधयः । रसेन । रेवतीः । जगतीभिः । पृच्च्यन्ताम् । मधुमतीरितिमधु मतीः । मधुमतीभिरितिमधु मतीभिः । पृच्च्यन्ताम् ॥२१॥

जनयत्त्यै । त्वा । सम् । यौमि । इदम् । अग्नेः । इदम् । अग्नीषोमयोः । इषे । त्वा । घर्म्मः । असि । विश्श्वायुरितिविश्श्व आयुः । उरुप्प्रथाऽइत्त्युरु प्रथाः । उरु । प्रथस्व । उरु । ते । यज्ञपतिरितियज्ज्ञ पतिः । प्रथताम् । अग्निः । ते । त्वचम् । मा । हिंसीत् । देवः । त्वा । सविता । श्रपयतु । वर्षिष्ठे । अधि । नाके ॥२२॥

---

धान्यम् । उदानायेत्युत आनाय । दीर्घाम् । प्रसितिमितिप्र सितिम् । चक्षुषे ॥२०॥

पृच्यन्ताम् । पृच्यन्ताम् ॥२१॥

जनयत्यै । अग्नेः । अग्नीषोमयोः । विश्वायुरितिविश्व आयुः । उरुप्रथाऽइत्युरु प्रथाः । यज्ञपतिरितियज्ञ पतिः । अग्निः । वर्षिष्ठे ॥२२॥

---

प्राणाय । उदानायेत्युत आनाय । व्यानायेतिवि[1] आनाय । आयुषे । पयः ॥२०॥

ओषधयः ॥२१॥

जनयत्यै । य्यौमि । अग्नीषोमय्योः । विश्वाय्युरितिविश्व आयुः । य्यज्ञपतिरितिय्यज्ञ पतिः । श्रपय्यतु ॥२२॥

---

१. ककोशशैल्यनुसारमिह 'व्व्यानायेतिव्वि आनाय्य' इति पाठेन भाव्यम् ।

मा । भेः । मा । सम् । व्रिक्क्थाः । अतमेरुः । यज्ञः । अतमेरुः । यजमानस्य । प्रजेतिप्र जा । भूयात् । त्रिताय । त्वा । द्विताय । एकताय ॥२३॥

आ । दुदे । अध्वरकृतमित्यध्वर कृतम् । देवेभ्यः । इन्द्रस्य । बाहुः । असि । दक्षिणः । सहस्रभृष्टिरितिसहस्र भृष्टिः । शततेजाऽइतिशत तेजाः । वायुः । असि । तिग्मतेजाऽइतितिग्म तेजाः । द्विषतः । वधः ॥२४॥

पृथिवि । देवयजनीतिदेव यजनि । ओषध्याः । ते । मूलम् । मा । हिंसिषम् । व्रजम् । गच्छ । गोष्ठानम् । गोस्थानमितिगो स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितरितिसवितः । परमस्याम् । पृथिव्याम् । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा । मौक् ॥२५॥

---

व्रिक्थाः । यज्ञः । प्रजेतिप्र जा ॥२३॥

अध्वरकृतमित्यध्वर कृतम् । देवेभ्यः । दक्षिणः । सहस्रभृष्टिरिति-सहस्र भृष्टिः । तिग्मतेजाऽइतितिग्म तेजाः ॥२४॥

ओषध्याः । गछ । गोष्ठानम् । गोस्थानमितिगो स्थानम् । पृथिव्याम् । अस्मान् । द्वेष्टि । द्विष्मः ॥२५॥

---

य्यज्ञः । य्यजमानस्य । भूय्यात् । त्रिताय्य । द्विताय्य । एकताय्य ॥२३॥

व्वायुः ॥२४॥

देवय्यजनीतिदेव य्यजनि । य्यः । य्यम् । व्वय्यम् ॥२५॥

अप॑ । अरु॑रुम् । पृथि॒व्यै । देवयज॑नादिति॑देव॒ यज॑नात् । वध्यासम् ॥ अर॑रो॒ऽइत्त्यर॑रो । दिव॑म् । मा । पप्त॒ꣳ । द्रप्स॒ः । ते । द्याम् । मा । स्क॒न् ॥२६॥

गा॒यत्त्रे॑ण । त्वा॒ । छन्द॑सा । परि॑ । गृ॒ह्णा॒मि॒ ॥ त्रैष्टु॑भेन । त्रैस्तु॑भे॒नेति॒त्त्रैस्तु॑भेन । जाग॑तेन । सुक्क्ष्मा । च॒ । असि॑ । शि॒वा । च॒ । अ॒सि॒ । स्यो॒ना । सु॒षदा॑ । सुसदेति॑सु सदा॑ । ऊर्ज॑स्वती । पय॑स्वती ॥२७॥

पुरा । क्रूरस्य॑ । वि॒सृप॒ऽइति॑वि॒ सृप॑ः । वि॒रप्प्शि॒न्निति॑वि रप्प्शिन् । उदा॒दायेत्त्यु॑त् आदाय॑ । पृथि॒वीम् । जी॒वदा॑नु॒मिति॑जी॒व दा॑नुम् ॥ याम् । ऐर॑यन् । चन्द्र॒म॑सि । स्व॒धाभि॑ः । ताम् । ऊँ॒ऽइत्त्यूँ॒ । धीरा॑सꣳ । अ॒नु॒दि॒श्येत्त्य॑नु दिश्य॑ । य॒ज॒न्ते॒ ॥ प्रोक्क्ष॑णी॒रिति॑प्प्र॒ उक्क्ष॑णीꣳ । आ । सा॒दय॒ । द्वि॒ष॒त॒ः । व॒ध॒ः । अ॒सि॒ ॥२८॥

---

पृ॒थि॒व्यै । व॒ध्या॒स॒म् । अर॑रो॒ऽइत्यर॑रो । प॒प्त॒ꣳ । द्र॒प्स॒ः ॥२६॥

गा॒यत्रे॑ण । गृ॒ह्णा॒मि॒ । त्रैष्टु॑भेन । त्रैस्तु॑भे॒नेति॒त्रैस्तु॑भेन । सु॒क्ष्मा ॥२७॥

वि॒रप्शि॒न्निति॑वि रप्शिन् । उदा॒दायेत्यु॑त् आदाय॑ । ऊँ॒ऽइत्यूँ॒ । अ॒नु॒दि॒श्येत्य॑नु दिश्य॑ । प्रोक्ष॑णी॒रिति॑प्र उक्ष॑णीꣳ ॥२८॥

---

दे॒व॒य॒ज॑ना॒दिति॑दे॒व [1]य्यज॑नात् ॥२६॥

गा॒य्य॒त्रे॑ण । पय्य॑स्वती ॥२७॥

वि॒सृप॒ऽइति॑वि॒ सृप॑ः । वि॒रप्शि॒न्निति॑वि रप्शिन् । उदा॒दाय्येत्यु॑त् आदाय्य॑ । य्याम् । ऐर॑य्यन् । ऊँ इत्युम्[2] । य्य॒ज॒न्ते॒ । सा॒दय्य॒ ॥२८॥

---

१. ककोशशैल्यनुसारमवग्रहादौ द्वित्वं न भवति, तेन 'य्यजनात्' इति युक्तः पाठो ज्ञेयः ।

२. 'ऊँऽइत्यूँ' इति शुद्धः पाठो ज्ञेयः ।

अनिंशितऽइत्त्यनिं शितꣳ । असि । सपत्त्नक्क्षिदितिं-सपत्त्न क्षित् । व्वाजिनम् । त्वा । व्वाजेद्ध्यायाऽइतिंवाज इद्ध्यायै । सम् । मार्ज्जिम ॥ अनिंशितेत्त्यनिं शिता । असि । सपत्त्नक्क्षिदितिंसपत्त्न क्षित् । व्वाजिनीम् । त्वा । व्वाजेद्ध्याया-ऽइतिंवाज इद्ध्यायै । सम् । मार्ज्जिम ॥२९॥

अदित्त्यै । रास्न्ना । असि । व्विष्ण्णोःꣳ । व्वेष्प्पः । असि । ऊर्ज्जे । त्वा । अदब्ब्धेन । त्वा । चक्क्षुषा । अव । पश्श्यामि ॥ अग्ग्नेः । जिह्वा । असि । सुहूरितिंसु हूः । देवेब्भ्यः । धाम्म्नेधाम्म्नऽइतिधाम्म्ने धाम्म्ने । मे । भव । यजुंषेयजुषऽइतियजुंषे यजुषे ॥३०॥

---

अनिंशितऽइत्यनिं शितꣳ । सपत्नक्षिदितिंसपत्न क्षित् । व्वाजेध्याया-ऽइतिंवाज इध्यायै । अनिंशितेत्यनिं शिता । सपत्नक्षिदितिंसपत्न क्षित् । व्वाजेध्यायाऽइतिंवाज इध्यायै ॥२९॥

अदित्यै । रास्ना । व्विष्णोꣳ । व्वेष्पः । अदब्धेन । चक्षुषा । पश्यामि । अग्नेः । जिह्वा । देवेभ्यः । धाम्नेधाम्नऽइतिधाम्ने धाम्ने ॥३०॥

---

व्वाजेध्याय्याऽइतिंवाज[1] इध्याय्यै । मार्य्मि[2] । व्वाजेध्याय्याऽइतिंवाज[1] इध्याय्यै । मार्य्मि[2] ॥२९॥

[3]व्वेष्यः । य्यजुंषेय्यजुषऽइतिय्यजुंषे [4]य्यजुषे ॥३०॥

---

१. ककोशशैल्यनुसारमिह 'व्वाज' इति युक्तः पाठो ज्ञेयः ।

२. यकारस्य जकारोच्चारणजोऽपपाठः । 'मार्ज्जिम' इत्येव शुद्धः पाठो ज्ञेयः ।

३. इह 'वेष्पः' इत्यपि पठितुं शक्यः । यतो हि बहुत्र ककोशे यकार-सदृशः पकारो लिख्यते । द्रष्टव्यं प्रथमपरिशिष्टान्ते 'वेष्पः—निवेष्पम्—निवेष्प्याय' पदानां विवेचनम् ।

४. ककोशशैल्यनुसारमवग्रहादौ द्वित्वं न भवति तेन 'य्यजुषे' इति युक्तः पाठो ज्ञेयः ।

सवितुः । त्वा ॥ तेजः । असि । शुक्रम् । अमृतम् । धाम । नाम । प्रियम् । देवानाम् । अनाधृष्टम् । देवयजनमितिदेव यजनम् । असि ॥३१॥

॥ इति वाजसनेयिसंहितापदे प्रथमोऽध्यायः ॥

---

शुक्रम् । अनाधृष्टम् ॥३१॥

---

प्रियम् । देवयजनमितिदेव [1]य्यजनम् ॥३१॥

॥ इति श्रीवाजसनेयिसंहितायां पदपाठेन प्रथमोऽध्यायः ॥

---

१. ककोशशैल्यनुसारमिह 'य्यजनम्' इति युक्तः पाठो ज्ञेयः ।

# द्वितीयोऽध्यायः

कृष्णंः । अ॒सि॒ । आ॒ख॒रेष्ठः । आ॒ख॒रेस्त्थऽइत्त्याखरे॒ स्थः । अ॒ग्नये॑ । त्वा॒ । जुष्टम् । प्र । उक्क्षा॒मि॒ । वे॒दिः । अ॒सि॒ । ब॒र्हिषे॑ । त्वा॒ । जुष्टाम् । प्र । उक्क्षा॒मि॒ । ब॒र्हिः । अ॒सि॒ । स्रुग्ग्भ्यऽइति॒स्रुक् भ्यः । त्वा॒ । जुष्टम् । प्र । उक्क्षा॒मि॒ ॥१॥

अदि॑त्यै । ङ्युन्द॑न॒मिति॑वि उन्द॑नम् । अ॒सि॒ । वि॒ष्णोः । स्तुपः । अ॒सि॒ । ऊर्ण॑म्म्रद॒समित्त्यूर्ण॑ म्रदसम् । त्वा॒ । स्तृ॒णा॒मि॒ । स्वा॒स॒स्त्था॒मिति॑सु [1]आ॒स॒स्त्थाम् । दे॒वेभ्य॑ः ।

---

कृष्णंः । आ॒ख॒रेष्ठः । आ॒ख॒रे॒स्थऽइत्याखरे॒ स्थः । अ॒ग्नये॑ । जुष्टम् । उ॒क्षा॒मि॒ । जुष्टाम् । उ॒क्षा॒मि॒ । स्रुग्भ्यऽइति॒स्रुक् भ्यः । जुष्टम् । उ॒क्षा॒मि॒ ॥१०॥

अदि॑त्यै । वि॒ष्णोः । ऊर्ण॑म्म्रद॒समित्यूर्ण॑[2] म्रदसम् । स्वा॒स॒स्थामिति॑सु

---

अ॒ग्नये॑ ॥१॥

व्युन्द॑न॒मिति॑वि उन्द॑नम् । ऊर्ण॑म्म्रद॒समित्यूर्ण॑म्[2] म्रदसम् ।

---

१. 'स्वा॒स॒स्त्था॒मिति॑सु आ॒स॒स्त्थाम्' इति काश्या मुद्रिते पाठः । विशेषस्त्वत्र **चतुर्विधपाठनिरूपणावसरे** उक्तः, स तत्रैव द्रष्टव्यः । इतोऽग्रे केवलम् अवग्रहादुत्तरभाग एव प्रदर्शयिष्यते, यत्र स्वरभेदो दृश्यते ।

२. स्वामिदयानन्दस्वीकृतात् पदपाठादन्यत्र यत्र व्यञ्जनद्विर्वचनं नोपलभ्यते तत्रापि सर्वेषु अस्मदुपलब्धेषु कोशेषु **म्म्र** इत्येव पाठ उपलभ्यते । ककोशे त्ववग्रहे स्वष्टमेव **ऊर्णम् म्रदसम्** इत्येवमवगृह्यते । अत्र ४।१० मन्त्रस्थः ककोशपाठोऽपि द्रष्टव्यः ।

भुवंपतयऽइतिभुवं पतये । स्वाहा । भुवनपतयऽइतिभुवन पतये । भूतानाम् । पतये ॥२॥

गन्धर्वः । त्वा । विश्वावसुः । विश्वावसुरितिविश्व वसुः । परि । दधातु । विश्वस्य । अरिष्टयै । यजमानस्य । परिधिरितिपरि धिः । असि । अग्निः । इडः । ईडितः ॥ इन्द्रस्य । बाहुः । असि । दक्षिणः ॥ मित्रावरुणौ । त्वा । उत्तरतः । परि । धत्ताम् । ध्रुवेण । धर्म्मणा ॥३॥

वीतिहोत्रमितिवीति होत्रम् । त्वा । कवे । द्युमन्तमितिद्यु मन्तम् । सम् । इधीमहि ॥ अग्ने । बृहन्तम् । अध्वरे ॥४॥

---

आसस्थाम् । देवेभ्यः ॥२॥

विश्वावसुः । विश्वावसुरितिविश्व वसुः । विश्वस्य । अरिष्टयै । अग्निः । दक्षिणः । मित्रावरुणौ ॥३॥

वीतिहोत्रमितिवीति होत्रम् । द्युमन्तमितिद्यु मन्तम् । अग्ने । अध्वरे ॥४॥

---

भुवंपतयऽइतिभुवं पतये । भुवनपतयऽइतिभुवन पतये । [1]भूतानांपतयऽइतिभूतानाम् पतये ॥२॥

विश्ववसुरितिविश्व वसुः । यजमानस्य ॥३॥

वीतिहोत्रमितिवीति होत्रम् ॥४॥

---

१. अयं पाठोऽशुद्धः प्रतिभाति, 'भूतानाम्पतये' इत्यत्र द्वयुदात्तस्वदर्शनात् पदद्वयमेव साधु । तेनात्रापि 'भूतानाम् । पतये' इत्येवं शुद्धः पाठो ज्ञेयः ।

समिदितिसम् इत् । असि । सूर्य्यः । त्वा । पुरस्तात् । पातु । कस्याः । चित् । अभिशस्त्याऽइत्त्यभि शस्त्यै ॥ सवितुः । बाहूऽइतिबाहू । स्थः । ऊर्ण्णम्म्रदसमित्त्यूर्ण्णी म्रदसम् । त्वा । स्तृणामि । स्वासस्त्थमितिसु 'आसस्त्थम् । देवेभ्यः । आ । त्वा । वसवः । रुद्राः । आदित्त्याः । सदन्तु ॥५॥

घृताची । असि । जुहूः । नाम्म्ना । सा । इदम् । प्रियेण । धाम्म्ना । प्रियम् । सदः । आ । सीद । उपभृदित्त्युप भृत् ध्रुवा ॥ ध्रुवा । असदन् । ऋतस्य । योनौ । ता । विष्ण्णोऽइतिविष्ण्णो । पाहि । पाहि । यज्ज्ञम् । पाहि । यज्ज्ञपतिमितियज्ज्ञ पतिम् । पाहि । माम् । यज्ज्ञन्युमितियज्ज्ञ न्यम् ॥६॥

---

पुरस्तात् । अभिशस्त्याऽइत्यभि शस्त्यै । ऊर्ण्णम्म्रदसमित्यूर्ण्णी[२] म्रदसम् । स्वासस्थमितिसु आसस्थम् । देवेभ्यः । रुद्राः । आदित्याः ॥५॥

नाम्ना । धाम्ना । उपभृदित्युप भृत् । विष्णोऽइतिविष्णो । यज्ञम् । यज्ञपतिमितियज्ञ पतिम् । यज्ञन्युमितियज्ञ न्यम् ॥६॥

---

सूर्य्यः । ऊर्ण्णम्म्रदसमित्यूर्ण्णम्[२] म्रदसम् ॥५॥

प्रियेण । प्रियम् । य्योनौ । विष्णोऽइतिविष्णो । य्यज्ञम् । य्यज्ञपतिमितिय्यज्ञ पतिम् । य्यज्ञन्युमितिय्यज्ञ न्यम् ॥६॥

---

१. 'स्वासस्थमितिसु आसस्थम्' इति काशिकोऽपपाठः । 'आसस्थम्' इत्येवं शुद्धः पाठोऽत्र ज्ञेयः । द्रष्टव्याऽत्र पृष्ठ १३ टि० १ ।

२. द्रष्टव्याऽत्र पृष्ठ १३ टि० २ ।

अग्ने । वाजजिदितिवाज जित् । वाजम् । त्वा । सरिष्यन्तम् । वाजजितमितिवाज जितम् । सम् । मार्ज्मि । नमः । देवेभ्यः । स्वधा । पितृभ्यइतिपितृ भ्यः । सुयमेइतिसु यमे । मे । भूयास्तम् ॥७॥

अस्कन्नम् । अद्य । देवेभ्यः । आज्यम् । सम् । ध्रियासम् । अङ्घ्रिणा । विष्णोइतिविष्णो । मा । त्वा । अव । क्रमिषम् । वसुमतीमितिवसु मतीम् । अग्ने । ते । छायाम् । उप । स्थेषम् । विष्णोः । स्थानम् । असि । इतः । इन्द्रः । वीर्यम् । अकृणोत् । ऊर्ध्वः । अध्वरः । आ । अस्थात् ॥८॥

अग्ने । वेः । होत्रम् । वेः । दूत्यम् । अवताम् । त्वाम् । द्यावापृथिवीइतिद्यावापृथिवी । अव । त्वम् ।

---

अग्ने । सरिष्यन्तम् । देवेभ्यः । पितृभ्यइतिपितृ भ्यः । भूयास्तम् ॥७॥

अस्कन्नम् । अद्य । देवेभ्यः । आज्यम् । विष्णोइतिविष्णो । अग्ने । विष्णोः । ऊर्ध्वः । अध्वरः । अस्थात् ॥८॥

अग्ने । होत्रम् । दूत्यम् । द्यावापृथिवीइतिद्यावापृथिवी । द्यावापृथिवी-

---

वाजजिदितिवाज जित् । वाजजितमितिवाज जितम् । मार्ज्मि[1] । सुयमेइतिसु [2]यमे । भूयास्तम् ॥७॥

ध्रियासम् । विष्णोइतिविष्णो । वसुमतीमितिवसु मतीम् । छायाम् । वीर्यम् ॥८॥

अवताम्[3] । त्वाम्[3] ॥९॥

---

१. यकारस्य जकारोच्चारणजोऽपपाठः । 'मार्ज्मि' इति शुद्धः पाठो ज्ञेयः

२. ककोशशैल्यनुसारमिह 'यमे' इति शुद्धः पाठो द्रष्टव्यः ।

३. संहितायाम् 'अवत्वं' इति दर्शनादपपाठोऽयम् । तेन 'अव । त्वम्' इत्येवं शुद्धः पाठो ज्ञेयः ।

द्यावापृथिवीऽइतिद्यावापृथिवी । स्विष्टकृदितिस्विष्ट कृत् । देवेभ्यः । इन्द्रः । आज्येन । हविषा । भूत् । स्वाहा । सम् । ज्योतिषा । ज्योतिः ॥९॥

मयि । इदम् । इन्द्रः । इन्द्रियम् । दधातु । अस्मान् । रायः । मघवानऽइतिमघ वानः । सचन्ताम् ॥ अस्माकम् । सन्तु । आशिषऽइत्या शिषः । सत्याः । नः । सन्तु । आशिषऽइत्या शिषः । उपहूतेत्युप हूता । पृथिवी । माता । उप । माम् । पृथिवी । माता । ह्वयताम् । अग्निः । आग्नीध्रात् । स्वाहा ॥१०॥

उपहूतऽइत्युप हूतः । द्यौः । पिता । उप । माम् । द्यौः । पिता । ह्वयताम् । अग्निः । आग्नीध्रात् । स्वाहा ॥ प्रति । गृह्णामि । अग्नेः । त्वा । आस्येन । प्र । अश्नामि ॥११

एतम् । ते । देव । सवितः । यज्ञम् । प्र । आहुः । बृहस्पतये । ब्रह्मणे ॥ तेन । यज्ञम् । अव । तेन । यज्ञपतिमितियज्ञ पतिम् । तेन । माम् । अव ॥१२॥

---

ऽइतिद्यावापृथिवी । स्विष्टकृदितिस्विष्ट कृत् । देवेभ्यः । आज्येन ॥९॥

अस्मान् । अस्माकम् । आशिषऽइत्या शिषः । सत्याः । आशिषऽइत्या शिषः । उपहूतेत्युप हूता । अग्निः । आग्नीध्रात् ॥१०॥

उपहूतऽइत्युप हूतः । अग्निः । आग्नीध्रात् । गृह्णामि । अग्नेः । अश्नामि ॥११॥

यज्ञम् । बृहस्पतये । ब्रह्मणे । यज्ञम् । यज्ञपतिमितियज्ञ पतिम् ॥१२॥

---

मयि । इन्द्रियम् । रायः । मघवानऽइतिमघ वानः । ह्वयताम् ॥१०॥

ह्वयताम् ॥११॥

य्यज्ञम् । बृहस्पतये । य्यज्ञम् । य्यज्ञपतिमितिय्यज्ञ पतिम् ॥१२॥

मर्नः । जूतिः । जुषताम् । आज्ज्यस्य । बृहस्पतिः । यज्ञम् । इमम् । तनोतु । अरिष्टम् । यज्ञम् । सम् । इमम् । दधातु ॥ विश्वे । देवासः । इह । मादयन्ताम् । ओम् । प्र । तिष्ठ ॥१३॥

एषा । ते । अग्ने । समिदितिसम् इत् । तया । वर्द्धस्व । च । आ । च । प्यायस्व ॥ वर्द्धिषीमहि । च । वयम् । आ । च । प्यासिषीमहि ॥ सस्नुवाꣳसमितिसस्नुवाꣳसम् । वाजजितमितिवाज जितम् ॥१४॥

अग्नीषोमयोः । उज्जितिमित्युत् जितिम् । अनु । उत् । जेषम् । वाजस्य । मा । प्रसवेनेतिप्र सवेन । प्र । ऊहामि ॥ अग्नीषोमौ । तम् । अप । नुदताम् । वाजस्य । एनम् । प्रसवेनेतिप्र सवेन । अप । ऊहामि ॥ इन्द्राग्न्योः ॥ इन्द्राग्नीऽइतीन्द्राग्नी ॥१५॥

---

आज्यस्य । बृहस्पतिः । यज्ञम् । अरिष्टम् । यज्ञम् । विश्वे । ओ३म् । तिष्ठ ॥१३॥

अग्ने । वर्धस्व । वर्धिषीमहि ॥१४॥

अग्नीषोमयोः । उज्जितिमित्युत् जितिम् । प्रसवेनेतिप्र सवेन अग्नीषोमौ । प्रसवेनेतिप्र सवेन । इन्द्राग्न्योः । इन्द्राग्नीऽइतीन्द्राग्नी ॥१५॥

---

य्यज्ञम् । य्यज्ञम् । मादयन्ताम् ॥१३॥

तया । प्यायस्व । वयम् । सस्नुवाꣳसमितिसस्नु वाꣳसम् । वाजजितमितिवाज जितम् ॥१४॥

अग्नीषोमयोः ॥१५॥

वसुंभ्य॒ऽइतिवसु भ्यः॑ । त्वा । रुद्रेभ्यः॑ । आदि॒-त्येभ्यः॑ । सम् । जानाथाम् । द्यावापृथिवीऽइतिंद्यावा-पृथिवी । मित्रावरुणौ । त्वा । वृष्ट्या । अवताम् ॥ व्यन्तु । वयः॑ । अक्क्तम् । रिहाणाः॑ । मरुताम् । पृषतीः॑ । गच्छ । वशा । पृश्निः॑ । भूत्वा । दिवम् । गच्छ । ततः॑ । नः॑ । वृष्टिम् । आ । वह ॥ चक्क्षुष्पाः । चक्क्षुःपाऽइतिं-चक्क्षुः पाः । अग्ने । असि । चक्क्षुः॑ । मे । पाहि ॥१६॥

सम् । परिधिमितिंपरि धिम् । पर्य्यर्धत्थाऽइतिंपरि अर्धत्थाः॑ । अग्ने । देव । पणिभिरितिंपणि भिः॑ । गुह्यमानः॑ । तम् । ते । एतम् । अनु । जोषम् । भरामि । एषः । न । इत् । त्वत् । अपचेतयांताऽइत्यंप चेतयांतै । अग्नेः । प्रियम् । पाथः॑ । अपि । इतम् ॥१७॥

---

वसुंभ्य॒ऽइतिवसु भ्यः॑ । रुद्रेभ्यः॑ । आदित्येभ्यः॑ । द्यावापृथिवी-ऽइतिंद्यावापृथिवी । मित्रावरुणौ । वृष्ट्या । अक्तम् । गछ[1] । पृश्निः॑ । भूत्वा । गछ[1] । वृष्टिम् । चक्षुष्पाः । चक्षुःपाऽइतिचक्षुः पाः । अग्ने । चक्षुः॑ ॥१६॥

परुर्यधत्थाऽइतिंपरि अर्धत्थाः॑ । अग्ने । गुह्यमानः॑ । अपचेतयांता-ऽइत्यंप चेतयांतै । अग्नेः ॥१७॥

---

वसुंभ्य॒ऽइतिवसु भ्यः॑ । [2]वृष्ट्या । वयः॑ । [2]वृष्टिम् ॥१६॥

यम् । पर्य्यर्धत्थाऽइतिंपरि अर्धत्थाः॑ । गुह्यमानः॑ । अपचेतयांता-ऽइत्यंप चेतयांतै । प्रियम् ॥१७॥

---

१. मुम्बईमुद्रिते 'गच्छ' इति सचकारः पाठः ।

२. ककांशे ऋकारपरो वकारो न गुरुर्भवति ।

सꣳस्रवभागा॒ऽइति॑सꣳस्रव भा॒गाः॑ । स्थ॒ । इ॒षा । बृ॒हन्तः॑ । प्र॒स्त॒रे॒ष्ठाः । प्र॒स्त॒रे॒स्थाऽइति॑प्रस्तरे स्थाः । प॒रि॒धेया॒ऽइति॑परि धेयाः॑ । च॒ । दे॒वाः ॥ इ॒माम् । वाच॑म् अ॒भि । वि॒श्वे॑ । गृ॒णन्तः॑ । आ॒स॒द्येत्या॒ सद्य॑ । अ॒स्मिन् । ब॒र्हिषि॑ । मा॒द॒य॒ध्व॒म् । स्वाहा॑ । वाट् ॥१८॥

घृ॒ताची॒ऽइति॑घृ॒ताची॑ । स्थः॑ । धु॒र्य्यौ॑ । पा॒त॒म् । सु॒म्ने॒ऽइति॑सु॒म्ने । स्थः॑ । सु॒म्ने । मा॒ । ध॒त्त॒म् ॥ य॒ज्ञ॑ । नमः॑ । च॒ । ते॒ । उप॑ । च॒ । य॒ज्ञस्य॑ । शि॒वे । सम् । ति॒ष्ठ॒स्व॒ । स्वि॑ष्ट॒ऽइति॒सु इ॑ष्टे । मे॒ । सम् । ति॒ष्ठ॒स्व॒ ॥१९॥

अग्ने॑ । अ॒द॒ब्धा॒यो॒ऽइत्य॑दब्ध आयो । अ॒शी॒त॒म । अ॒शि॒त॒मेत्य॑शि तम । पा॒हि । मा॒ । दि॒द्योः । प्र॒सित्या॒ऽइति॒प्र सि॑त्यै । दु॒रि॑ष्ट्या॒ऽइति॑दुः इ॑ष्ट्यै । दु॒र॒द्म॒न्या॒ऽइति॑दुः[1] अ॒द्म॒न्यै॑ । अ॒वि॒षम् । नः॑ । पि॒तुम् । कृ॒णु॒ ॥

---

प्र॒स्त॒रे॒ष्ठाः । प्र॒स्त॒रे॒स्थाऽइति॑प्रस्तरे स्थाः । वि॒श्वे॑ । आ॒स॒द्येत्या॒ सद्य॑ । अ॒स्मिन् । मा॒द॒य॒ध्व॒म् ॥१८॥

सु॒म्ने॒ऽइति॑सु॒म्ने । सु॒म्ने । य॒ज्ञ॑ । य॒ज्ञस्य॑ । ति॒ष्ठ॒स्व॒ । स्वि॑ष्ट॒ऽइति॒सु इ॑ष्टे । ति॒ष्ठ॒स्व॒ ॥१९॥

अग्ने॑ । अ॒द॒ब्धा॒यो॒ऽइत्य॑दब्ध आयो । अ॒शि॒त॒मेत्य॑शि तम । दि॒द्योः । प्र॒सित्या॒ऽइति॒प्र सि॑त्यै । दु॒रि॑ष्ट्या॒ऽइति॑दुः इ॑ष्ट्यै । दु॒र॒द्म॒न्या॒ऽइति॑दुः अ॒द्म॒न्यै॑ ।

---

प॒रि॒धेय्या॒ऽइति॑परि धेय्याः॑ । मा॒द॒य्य॒ध्व॒म् ॥१८॥

धु॒र्य्यौ॑ । य्य॒ज्ञ॑ । य्य॒ज्ञस्य॑ ॥१९॥

अ॒द॒ब्धा॒य्यो॒ऽइत्य॑दब्ध आय्यो । य्योनौ॑ । अ॒ग्नय्ये॑ । [2]सं॒वे॒श॒प॑तय्य॒ऽइति॑

---

१. 'दु॒र॒द्द्म॒न्या॒ऽइति॑दुः अ॒द्द्म॒न्यै॑' इति काशिकः पाठः ।

२. अपपाठोऽयं लेखकप्रमादजः । 'स॒ꣳवे॒श॒प॑तय्य॒ऽइति॑सꣳवेश प॑तय्ये' इत्येवं शुद्धः पाठो ज्ञेयः ।

सुषदा । सुसदेतिसु सदा । योनौ । स्वाहा । वाट् । अग्नये । सँवेशपतयऽइतिसँवेश पतये । स्वाहा । सरस्वत्यै । यशो-भगिन्याऽइतियशः भगिन्यै । स्वाहा ॥२०॥

वेदः । असि । येन । त्वम् । देव । वेद । देवेभ्यः । वेदः । अभवः । तेन । महयम् । वेदः । भूयाः ॥ [1]देवाः । गातुविदऽइतिगातु विदः । गातुम् । वित्त्वा । गातुम् । इत ॥ मनसः । पते । इमम् । देव । यज्ञम् । स्वाहा । वाते । धाः ॥२१॥

सम् । बर्हिः । अङ्क्ताम् । हविषा । घृतेन । आदित्यैः । वसुभिरितिवसु भिः । मरुद्भिरितिमरुत् भिः ॥ इन्द्रः । विश्वदेवेभिरितिविश्व देवेभिः । अङ्क्ताम् । दिव्यम् । नभः । गच्छतु । यत् । स्वाहा ॥२२॥

---

अग्नये । सरस्वत्यै । यशोभगिन्याऽइतियशः भगिन्यै ॥२०॥

देवेभ्यः । महयम् । [1]देवाः । वित्वा । यज्ञम् ॥२१॥

आदित्यैः । मरुद्भिरितिमरुत् भिः । विश्वदेवेभिरितिविश्व देवेभिः । दिव्यम् । गछतु[2] ॥२२॥

---

संवेश पतये । य्यशोभगिण्याऽइतिय्यशः भगिण्यै[3] ॥२०॥

य्येन । मह्यम्[3] । भूयाः । [1]देवाः । गातुविदऽइतिगातु विदः । यज्ञम्[3] । यज्ञइतियज्ञम्[3] ॥२१॥

वसुभिरितिवसु भिः । विश्वदेवेभिरितिविश्व देवेभिः । य्यत ॥२२॥

१. अत्र दीर्घात् स्वरितात् परस्य विसर्गचिह्नस्य ÷, ः इत्येवं द्वैविध्यं दृश्यते ।

२. मुम्बईमुद्रिते 'गच्छतु' इति सचकारः पाठः ।

३. पत्रभागस्य नाशात् पुनर्लिखितोऽपपाठः ।

कः। त्वा। वि। मुञ्चति। सः। कस्म्मै। तस्म्मै॥ पोषाय। रक्क्षसाम्। भागः। असि॥२३॥

सम्। वर्च्चसा। पयसा। सम्। तनूभिः। अगन्न्महि। मनसा। सम्। शिवेन॥ त्वष्टा। सुदत्त्रऽइतिसु दत्त्रः। वि। दधातु। रायः। अनु। मार्ष्टु। तन्न्वः। यत्। विलिष्ट्टमितिवि लिष्ट्टम्॥२४॥

दिवि। विष्ण्णुः। वि। अक्क्रꣳस्त। जागतेन। छन्दसा। ततः। निर्ब्भक्क्तऽइतिनिः भक्क्तः। अन्तरिक्क्षे। त्रैष्ट्टुभेन। त्रैस्त्तुभेनेतित्त्रैस्त्तुभेन। पृथिव्व्याम्। गायत्त्रेण। अस्म्मात्। अन्नात्। अस्यै। प्रतिष्ट्ठायाꣳ[1]।

---

कस्मै। तस्मै। रक्षसाम्॥२३॥

अगन्महि। त्वष्टा। सुदत्रऽइतिसु दत्रः। मार्ष्टु। तन्वः। विलिष्टमितिवि लिष्टम्॥२४॥

विष्णुः। अक्रꣳस्त। निर्भक्तऽइतिनिः भक्तः। अन्तरिक्षे। त्रैष्टुभेन। त्रैस्तुभेनेतित्रैस्तुभेन। पृथिव्याम्। गायत्रेण। अस्मात्। प्रतिष्ठायाꣳ।

---

पोषाय॥२३॥

पयसा। रायः। यत्। विलिष्टमितिवि लिष्टम्[2]॥२४॥

गायत्रेण। [प्रतिष्ठायाꣳ। प्रतिस्थायाऽइतिप्र][3]ति स्थायाꣳ।

---

१. अत्र २३ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या।

२. पत्रभागस्य नाशात् पुनर्लिखितोऽपपाठः। 'विलिष्टमितिवि लिष्टम्' इति साधीमान् पाठः।

३. कोष्ठान्तर्गतः पाठः पत्रभागस्य नाशान्नष्टः।

प्रतिस्त्थायाऽइतिप्रति स्थायाᳪ[1] । अगन्म । स्वरितिस्वः । सम् । ज्योतिषा । अभूम ॥२५॥

स्वयम्भूरितिस्वयम् भूः । असि । श्रेष्ठः । रश्मिः । वर्चोदाऽइतिवर्चःᳪ दाः । असि । वर्चः । मे । देहि ॥ सूर्य्यस्य । आवृतमित्या वृतम् । अनु । आ । वर्त्ते ॥२६॥

अग्ने । गृहपतऽइतिगृह पते । सुगृहपतिरितिसु [2]गृहपतिः । त्वया । अग्ने । अहम् । गृहपतिनेतिगृह पतिना । भूयासम् । सुगृहपतिरितिसु [2]गृहपतिः । त्वम् । मया । अग्ने । गृहपतिनेतिगृह पतिना । भूयाᳪ ॥ अस्थूरि । नौ ।

प्रतिस्थायाऽइतिप्रति स्थायाᳪ । अगन्म ॥२५॥

श्रेष्ठः । रश्मिः । आवृतमित्या वृतम् ॥२६॥

अग्ने । अग्ने । अग्ने । अस्थूरि । गार्हपत्यानीतिगार्ह पत्यानि ।

[3]ज्योतिषा ॥२५॥

[स्वयम्भूरितिस्वयम् भूः ।][4]वर्चोदाऽइतिवर्चःᳪ दाः । [सूर्य्यस्य । आवृतमित्या वृतम् ][4] ॥२६॥

त्वया । भूयासम् । मया । भूयाᳪ[5] ......

१. 'प्रतिष्ठायै । प्रतिष्ठायाऽइति प्रतिऽस्थायै' इति स्वामिदयानन्दस्वीकृतः पाठः । उव्वटोऽप्यस्य मन्त्रस्य व्याख्याने 'अस्यै प्रतिष्ठायै । अस्या भूमेः प्रतिष्ठाया निर्भक्तः' इत्येवं व्याख्यन् चतुर्थ्यन्तमेव पद स्वीचकार । मन्त्रपाठे 'अस्यै' चतुर्थ्यन्तपाठात् 'प्रतिष्ठाया अगन्म' इत्यत्र चतुर्थ्यन्तः 'प्रतिष्ठायै' पदच्छेद एव साधीयान् प्रतिभाति । पदकाराभिप्रायस्त्वत्र मृग्यः ।

२. 'गृहपतिः' इति काशिकः पाठः ।

३. यकारस्य जकारोच्चारणजोऽपपाठः । 'ज्योतिषा' इति पाठेन भाव्यम् ।

४. पत्रभागस्य नाशान्नोपलभ्यतेऽयं पाठः ।

५. इहोत्तरपृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

गार्हपत्यानीतिगार्हं पत्यानि । सन्तु । शतम् । हिमाः ।
[1]अचारिषम् । तत् । अशकम् । तत् । मे । अराधि । इदम् ।
अहम् । यः । एव । अस्मि । सः । अस्मि ॥२७॥

अग्नये । कव्यवाहनायेतिकव्य वाहनाय । स्वाहा ।
सोमाय । पितृमतऽइतिपितृ मते । स्वाहा ॥ अपहताऽइत्यप
हताः । असुराः । रक्षांसि । वेदिषदः । वेदिसदऽइति-
वेदि सदः ॥२८॥

ये । रूपाणि । प्रतिमुञ्चमानाऽइतिप्रति मुञ्चमानाः ।
असुराः । सन्तः । स्वधया । चरन्ति ॥ परापुरऽइतिपरा

अस्मि । अस्मि ॥२७॥
अग्नये । कव्यवाहनायेतिकव्य वाहनाय । अपहताऽइत्यप हताः ।
रक्षांसि ॥२८॥
प्रतिमुञ्चमानाऽइतिप्रति मुञ्चमानाः । अग्निः । अस्मात् ॥२९॥

···[2]अचारिषम् । [3]अहम् य एवा अस्मि । [3]सः । अस्मि ॥२७॥
अग्नये । कव्यवाहनायेतिकव्य वाहनाय । सोमाय[3] । वेदिसद-
ऽइतिवेदि सदः ॥२८॥
ये । स्वधया । ये ॥२९॥

१. 'अचारिषम् । अस्मि ।' पर्यन्तो भागः संहितापाठानुसारम् अष्टाविंशतितमायाः कण्डिकायाः । अयं भागः ककोशवर्जमन्येषु लिखितेषु मुद्रितेषु च पुस्तकेषु सप्तविंशतितमायां कण्डिकायां प्रदर्श्यते । तेन पदपाठे संहितापाठापेक्षया एकस्याः कण्डिकासंख्याया न्यूनता समजनि । क-कोशे तु प्रायेणैतादृशेषु स्थलेषु संहितापाठानुसारमेव विभाग उपलभ्यते । अत एव ककोशे बहुत्र कण्डिकासंख्याया भेद उपलभ्यते । इह त्वस्माभिः ककोशपाठेऽपि सारल्याय सामान्यपदपाठनिर्दिष्टैव कण्डिकासंख्या निर्दिष्यते ।

२. अत्रस्था प्रथमा टिप्पणी द्रष्टव्या ।

३. पत्रभागस्य नाशात् पुनर्लिखितोऽस्वरोऽपपाठः स्पष्टः ।

व्वाच॑ऽ । पति॑म् । व्विश्श्वकर्म्माणमितिविश्श्व कर्म्माणम् । ऊतये॑ । मनोजुवमिति॑मनः॒ जुवम् । व्वाजे॑ । अद्य । हुवेम ॥ सः॑ । नः॒ । विश्श्वा॑नि । हव॑नानि । जोषत् । व्विश्श्वशम्भूरिति॑- विश्श्व शम्भूः॒ । अव॑से । साधुकर्म्मेति॑साधु कर्म्मा ॥ इन्द्रा॑य । त्वा । व्विश्श्वकर्म्मणऽइतिविश्श्व कर्म्मणे ॥३९॥

व्विश्श्व॑कर्म्मन्निति॒विश्श्व॑ कर्म्मन् । हविषा । वर्द्धनेन । त्रातार॑म् । इन्द्र॑म् । अकृणोः॒ । अवद्ध्यम् ॥ तस्म्मै॑ । व्विशः॑ । सम् । अनमन्त । पूर्व्वीः॑ । अयम् । उग्रः॑ । व्विहव्यऽइति॑वि हव्यः॑ ॥ यथा॑ । असत् ॥४०॥

अग्नये॑ । त्वा । गायत्रच्छन्दसमिति॑गायत्र छन्दसम् । गृह्णामि । इन्द्रा॑य । त्रिष्टुप्छन्दसम् । त्रिस्तुप्छन्द-

व्विश्वकर्म्माणमितिव्विश्व कर्म्माणम् । अद्य । व्विश्वानि । व्विश्वशम्भूरिति- व्विश्व शम्भूः । व्विश्वकर्म्मणऽइतिविश्व कर्म्मणे ॥३९॥

व्विश्वकर्म्मन्नितिविश्व कर्म्मन् । अवध्यम् । तस्मै । उग्रः । व्विहव्य- ऽइतिवि हव्यः ॥४०॥

अग्नये । गायत्रछन्दसमितिगायत्र छन्दसम् । गृह्णामि । त्रिष्टुप्-

व्विश्वकर्म्माणमितिव्विश्व कर्म्माणम् । ऊतये । व्विश्वशम्भूरितिव्विश्व शम्भूः । साधुकर्म्मेतिसाधु कर्म्मा । इन्द्राय । व्विश्वकर्म्मणऽइतिव्विश्व कर्म्मणे ॥३९॥

व्विश्वकर्म्मन्नितिव्विश्व कर्म्मन् । अयम् । [2]उग्रेः । व्विहव्यऽइतिव्वि हव्यः । [1]यथा ॥४०॥

अग्नये । गायत्रछन्दसमितिगायत्र छन्दसम् । इन्द्राय ॥४१॥

१. 'असत्' इति काशिकोऽपपाठः, यद्वृत्तस्योदात्तत्वविधानात् (द्र० अष्टा० ८।१।६६) ।

२. अपपाठोऽयम्, 'उग्रः' इत्येवं शुद्धः पाठो ज्ञेयः । अत्र ८।३२ कण्डिकाया 'अग्रे' पदस्य टिप्पणी द्रष्टव्या ।

समितित्रिस्तुप् छन्दसम् । विश्श्वेभ्यः । देवेभ्यः । जगच्छन्दसमितिजगत् छन्दसम् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । ते । अभिगरऽइत्यभि गरः ॥४१॥

वेशीनाम् । त्वा । पत्मन् । आ । धूनोमि । कुकूननानाम् । भन्दनानाम् । मदिन्तमानामितिमदिन् तमानाम् । मधुन्तमानामितिमधुन् तमानाम् । शुक्रम् । त्वा । शुक्रे । आ । धूनोमि । अह्नः । रूपे । सूर्य्यस्य । रश्मिषु ॥४२॥

ककुभम् । रूपम् । वृषभस्य । रोचते । बृहत् । शुक्रः । शुक्रस्य । पुरोगाऽइतिपुरः गाः । सोमः । सोमस्य । पुरोगाऽइतिपुरः गाः । त्वा । गृह्णामि ॥४३॥

उशिक् । इहि । वशी । इन्द्रस्य । अस्मत्सखेत्यस्मत् सखा । विश्श्वेषाम् । देवानाम् ॥४४॥

---

छन्दसम् । त्रिस्तुप्छन्दसमितित्रिस्तुप् छन्दसम् । विश्वेभ्यः । देवेभ्यः । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । अभिगरऽइत्यभि गरः ॥४१॥

पत्मन् । शुक्रम् । शुक्रे । अह्नः । रश्मिषु ॥४२॥

शुक्रः । शुक्रस्य । गृह्णामि ॥४३॥

अस्मत्सखेत्यस्मत् सखा ॥४४॥

---

सूर्यस्य ॥४२॥

[1]वशी ॥४४॥

---

१. अपपाठोऽयम्, 'वशी' इत्येवं शुद्धः पाठो ज्ञेयः ।

इह । रतिः । रमद्ध्वम् । धृतिः । स्वधृतिरितिस्व धृतिः । स्वाहा ॥ उपसृजन्नित्त्युप सृजन् । धरुणम् । मात्त्रे । धरुणः । मातरम् । धयन् ॥ रायः । पोषम् । अस्म्मासु । दीधरत् । स्वाहा ॥४५॥

सत्त्रस्य । ऋद्धिः । असि । अगन्म । ज्योतिः । अमृताः । अभूम ॥ दिवम् । पृथिव्याः । अधि । आ । अरुहाम । अविदाम । देवान् । स्वः । ज्योतिः ॥४६॥

युवम् । तम् । इन्द्रापर्वता । पुरोयुधेतिपुरः युधा । यः । नः । पृतन्न्यात् । अप । तन्तमितितम् तम् । इत् । हतम् । वज्रेण । तन्तमितितम् तम् । इत् । हतम् ॥ दूरे । चत्ताय । छन्त्सत् । गहनम् । यत् । इनक्क्षत् ॥ अस्म्माकम् । शत्रून् । परि । शूर । विश्श्वतः । दर्म्मा । दर्षीष्ट !

---

रमध्वम् । उपसृजन्नित्युप सृजन् । मात्रे । अस्मासु ॥४५॥

सत्रस्य । अगन्म । पृथिव्याः ॥४६॥

पृतन्यात् । इनक्षत् ॥ अस्माकम् । शत्रून् । विश्वतः । दर्षीष्ट ।

---

[1]उपसृजमित्त्युप सृजान् । [2]धरुणं । धय्नन् । राय्नः ॥४५॥

[3]अ । [3]विदाम ॥४६॥

य्युवम् । पुरोयुधेतिपुरः [4][युधा] । य्यः । चत्ताय्नं । य्यत् । सुवीरा-

---

१. अपपाठोऽयम्, 'उपसृजन्नित्युप सृजन्' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम्, 'धरुणः' इति शुद्धः पाठः ।

३. अपपाठोऽयम्, 'अविदाम' इत्येवं शुद्धः पाठो ज्ञेयः ।

४. कोष्ठान्तर्गतः पाठो लेखकप्रमादान्नष्टः ।

विश्वर्त॒ऽ ॥ स्याम॒ । सुवीरा॒ऽइतिसु वीरांः । वीरैः । सुपोषा॒ऽइतिसु पोषांः । पोषैः ॥४७॥

पर॒मेष्ठी । पर॒मेस्थीतिपरमे स्थी । अभिधीत॒ऽइत्यभि धीतः । प्रजापति॒रितिप्रजा पतिः । वाचि । व्याहृता॒यामितिवि आहृतायाम् । अन्धः । अच्छेत॒ऽइत्यच्छ इतः । सवि॒ता । सन्याम् । विश्वक॒र्म्मेतिवि॒श्व कर्म्मा । दी॒क्षायाम् । पूषा । सोम॒क्रयण्या॒मितिसोम॒ क्रयण्याम् ॥४८॥

इन्द्रः । च । म॒रुतः । च । क्र॒याय॑ । उ॒पोत्थित॒ऽइत्युप उत्थितः । असुरः । प॒ण्यमानः । मि॒त्रः । क्रीतः । विष्णुः । शि॒पिवि॒ष्टऽइतिशिपि विष्टः । ऊरौ । आसन्न॒ऽइत्या सन्नः । विष्णुः । न॒रन्धिषः ॥४९॥

---

विश्वर्तः ॥४७॥

पर॒मेष्ठी । पर॒मेस्थीतिपरमे स्थी । अभिधीत॒ऽइत्यभि धीतः । प्रजापति॒रितिप्रजा पतिः । अच्छेत॒ऽइत्यच्छ इतः । सन्याम् । विश्वक॒र्म्मेतिवि॒श्व कर्म्मा । दी॒क्षायाम् । सोम॒क्रयण्या॒मितिसोम॒ क्रयण्याम् ॥४८॥

उ॒पोत्थित॒ऽइत्युप उत्थितः । प॒ण्यमानः । मि॒त्रः । विष्णुः । शि॒पिवि॒ष्टऽइतिशिपि विष्टः । आसन्न॒ऽइत्या सन्नः । विष्णुः ॥४९॥

---

ऽइतिसु वीरांः ॥४७॥

व्याहृता॒य॒मितिवि[1] आहृताय॒म् । विश्वक॒र्म्मेतिविश्व कर्म्मा । दी॒क्षाय॒म् । सोम॒क्रय॒ण्या॒मितिसोम॒ क्रय॒ण्याम् ॥४८॥

क्र॒याय॑ । शि॒विवि॒ष्टऽइतिशिपि विष्टः । [2]उरौ ॥४९॥

---

१. ककोशशैल्यनुसारम् इह 'वि' इत्येवं पाठेन भाव्यम् ।

२. क्वचिदन्यत्रापि अयमेव पाठ उपलभ्यते ।

प्रोह्यमाणं । प्रोह्यमानऽइतिप्र उह्यमानं । सोमः । आगतऽइत्या गतं । वरुणं । आसन्द्यामित्त्या सन्द्याम् । आसन्नऽइत्त्या सन्नं । अग्निः । आग्नीध्रे । इन्द्रः । हविर्द्धानऽइतिहविः धाने । अथर्वा । उपावह्रियमाणऽइत्त्युप [1]अवह्रियमाणं ॥५०॥

विश्वे । देवाः । अंशुषु । न्युप्तऽइतिनि उप्तं । विष्णुः । आप्रीतपाऽइत्त्याप्रीत पाः । आप्प्याय्यमानऽइत्त्या प्याय्यमानं । यमः । सूयमानं । विष्णुः । सम्भ्रियमाणऽइतिसम् भ्रियमाणं । वायुः । पूयमानं । शुक्रः । पूतः । शुक्रः । क्षीरश्रीरितिक्षीर श्रीः । मन्थी । सक्तुश्रीरितिसक्तु श्रीः ॥५१॥

विश्वे । देवाः । चमसेषु । उन्नीतऽइत्युत् नीतं ।

---

प्रोह्यमाणं । प्रोह्यमानऽइतिप्र उह्यमानं । आगतऽइत्या गतं । आसन्द्यामित्या सन्द्याम् । आसन्नऽइत्या सन्नं । अग्निः । आग्नीध्रे । उपावह्रियमाणऽइत्युप अवह्रियमाणं ॥५०॥

विश्वे । न्युप्तऽइतिनि उप्तं । विष्णुः । आप्रीतपाऽइत्याप्रीत पाः । आप्यायमानऽइत्या प्यायमानं । विष्णुः । शुक्रः । शुक्रः । क्षीरश्रीरितिक्षीर श्रीः । सुक्तुश्रीरितिसक्तु श्रीः ॥५१॥

विश्वे । उन्नीतऽइत्युत् नीतं । उद्यतऽइत्युत् यतं । रुद्रः ।

---

प्रोह्यमाणं । उपावह्रियमाणऽइत्युप अवह्रियमाणं ॥५०॥

आप्यायमानऽइत्या प्यायमानं । यमः । सूयमानं । सम्भ्रियमाणऽइतिसम् भ्रियमाणं । वायुः । पूयमानं ॥५१॥

---

१. 'अवह्रियमाणं' इति काशिकः पाठः ।

असु॑ऽ॒ । होमा॑य । उद्य॑त॒ऽइत्युत् य॑तऽ॑ । रु॒द्रः । हूयमा॑नऽ॑ । वातः॑ । अ॒भ्याऽवृ॑त्त॒ऽइत्य॑भि आवृ॑त्तऽ॑ । नृ॒चक्ष॒ऽइति॑नृ॒ चक्ष॑ऽ॑ । प्रति॑ख्यात॒ऽइति॒प्रति॑ ख्यातऽ॑ । भ॒क्षः । भ॒क्ष्यमा॑णऽ॑ । पि॒तरः॑ । ना॒रा॒शꣳसः ॥५२॥

स॒न्नः । सिन्धु॑ः । अ॒व॒भृ॒थायेत्य॑व भृ॒थाय॑ । उद्य॑त॒ऽइत्युत् य॑तऽ॑ । स॒मु॒द्रः । अ॒भ्य॒व॒ह्रि॒यमा॑ण॒ऽइत्य॑भि अ॒व॒ह्रि॒यमा॑णऽ॑ । स॒लि॒लः । प्रप्लु॑त॒ऽइति॒प्र प्लु॑तऽ॑ । ययो॑ऽ॑ । ओज॑सा । स्क॒भि॒ता । रजा॑ꣳसि । वी॒र्ये॑भिऽ॑ । वी॒रत॒मेति॑वी॒र तमा । शवि॑ष्ठा । या । पत्ये॑त॒ऽइति॒पत्ये॑ते । अप्र॑ती॒तेत्यप्र॑ति इता । सहो॑भि॒रिति॒सहः॑ भिऽ॑ । वि॒ष्णू॒ऽइति॒वि॒ष्णू । अग॑न् । वरु॑णा । पू॒र्वहू॑ता॒विति॒पू॒र्व हू॑तौ ॥५३॥

---

अ॒भ्याऽवृ॑त्त॒ऽइत्य॑भि आवृ॑त्तऽ॑ । नृ॒चक्षा॒ऽइति॑नृ॒ चक्षा॑ऽ॑ । प्रति॑ख्यात॒ऽइति॒प्रति॑ ख्यातऽ॑ । भ॒क्षः । भ॒क्ष्यमा॑णऽ॑ ॥५२॥

अ॒व॒भृ॒थायेत्य॑व भृ॒थाय॑ । उद्य॑त॒ऽइत्युत् य॑तऽ॑ । स॒मु॒द्रः । अ॒भ्य॒व॒ह्रि॒यमा॑ण॒ऽइत्य॑भि अ॒व॒ह्रि॒यमा॑णऽ॑ । प्रप्लु॑त॒ऽइति॒प्र प्लु॑तऽ॑ । शवि॑ष्ठा । पत्ये॑त॒ऽइति॒पत्ये॑ते । अप्र॑ती॒तेत्यप्र॑ति इता । वि॒ष्णू॒ऽइति॒वि॒ष्णू ॥५३॥

---

होमा॒य॑ । उद्य॑त॒ऽइत्युत् [2]य्य॑तऽ॑ । हू॒य॒मा॑नऽ॑ ॥५२॥

स॒न्नः । अ॒व॒भृ॒थाय्येत्य॑व भृ॒थाय्य॑ । उद्य॑त॒ऽइत्युत् [2]य्य॑तऽ॑ । अ॒भ्य॒व॒ह्रि॒य्यमा॑ण॒ऽइत्य॑भि अ॒व॒ह्रि॒य्यमा॑णऽ॑ । य्यय्यो॑ऽ॑ । वी॒रत॒मेति॑वी॒र तमा । य्या ॥५३॥

---

१. 'अवह्रियमाणऽ' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारमिह 'य्य' इत्येवं शुद्धः पाठो ज्ञेयः ।

देवान् । दिवम् । अगन् । यज्ञः । ततः । मा । द्रविणम् । अष्टु । मनुष्यान् । अन्तरिक्षम् । पितॄन् । पृथिवीम् । यम् । कम् । च । लोकम् । अगन् । यज्ञः । ततः । मे । भद्रम् । अभूत् ॥५४॥

चतुस्त्रिꣳशदितिचतुः त्रिꣳशत् । तन्तवः । ये । वितत्निरऽइतिवि [1]तत्निरे । ये । इमम् । यज्ञम् । स्वधया । ददन्ते ॥ तेषाम् । छिन्नम् । सम् । ॐऽइत्यूँ । एतत् । दधामि । स्वाहा । घर्म्मः । अपि । एतु । देवान् ॥५५॥

यज्ञस्य । दोहः । विततऽइतिवि ततः । पुरुत्रेतिपुरु त्रा । सः । अष्टधा । दिवम् । अन्वाततानेत्यनु आततान ॥ सः । यज्ञ । धुक्ष्व । महि । मे । प्रजायामितिप्र

---

यज्ञः । अष्टु । मनुष्यान् । अन्तरिक्षम् । यज्ञः । भद्रम् ॥५४॥

चतुस्त्रिꣳशदितिचतुः त्रिꣳशत् । वितत्निरऽइतिवि तत्निरे । यज्ञम् । ॐऽइत्यूँ ॥५५॥

यज्ञस्य । पुरुत्रेतिपुरु त्रा । अष्टधा । अन्वाततानेत्यनु आततान । यज्ञ ।

---

य्यज्ञः । य्यम् । य्यज्ञः ॥५४॥

य्ये । व्वितत्निरऽइतिवि[2] तत्निरे । य्ये । य्यज्ञम् । स्वधया ।

[3]उंऽइत्युम् ॥५५॥

य्यज्ञस्य । व्विततऽइतिवि ततः । य्यज्ञ । प्रजाय्यामितिप्र जाय्याम् ।

---

१. 'तत्निरे' इति काशिकः पाठः ।

२. ककोशपाठशैल्यनुसारमिह 'व्वि' इति द्विवकारेण भाव्यम् ।

३. अपपाठोऽयम् ।

जायाम् । रायः । पोषम् । विश्वम् । आयुः । अशीय । स्वाहा ॥५६॥

आ । पवस्व । हिरण्यवदितिहिरण्य वत् । अश्व-वदित्यश्व वत् । सोम । वीरवदितिवीर वत् ॥ वाजम् । गोमन्तमितिगो मन्तम् । आ । भर । स्वाहा ॥५७॥

॥ इति वाजसनेयिसंहितापदेऽष्टमोऽध्यायः ॥

---

धुक्ष्व । प्रजायामितिप्र जायाम् । विश्वम् ॥५६॥

हिरण्यवदितिहिरण्य वत् । अश्ववदित्यश्व वत् ॥५७॥

---

रायः । आयुः । अशीय ॥५६॥

हिरण्यवदितिहिरण्य वत् । अश्ववदित्यश्व वत् । वीरवदितिवीर वत् ॥५७॥

॥ इति श्री वाजसनेयिसंहितापदेऽष्टमोऽध्यायः ॥

# नवमोऽध्यायः

देव॑ । स॒वि॒त॒रिति॑सवितः । प्र । सु॒व॒ । य॒ज्ञम् । प्र । सु॒व॒ । य॒ज्ञप॑ति॒मिति॑य॒ज्ञ प॑तिम् । भगा॑य ॥ दि॒व्यः । ग॒न्ध॒र्वः । के॒त॒पूरिति॑केत पूः । केत॑म् । नः॒ । पु॒ना॒तु॒ । वा॒चः । पतिः॑ । वाज॑म् । नः॒ । स्व॒द॒तु॒ । स्वाहा॑ ॥१॥

ध्रु॒व॒स॒द॒मिति॑ध्रुव सद॑म् । त्वा॒ । नृ॒षद॑म् । नृ॒स॒द॒मिति॑नृ सद॑म् । म॒नः॒स॒द॒मिति॑मनः सद॑म् । इन्द्रा॑य । त्वा॒ । जुष्ट॑म् । गृ॒ह्णा॒मि॒ । जुष्ट॑त॒म॒मिति॒जुष्ट॑ तमम् ॥ अ॒प्सु॒षद॑म् । अ॒प्सु॒स॒द॒मित्य॑प्सु सद॑म् । घृ॒त॒स॒द॒मिति॑घृत सद॑म् । व्यो॒म॒स॒द॒मिति॑व्योम सद॑म् ॥ पृ॒थि॒वि॒स॒द॒मिति॑पृथिवि सद॑म् । अ॒न्त॒रि॒क्ष॒स॒द॒मित्य॑न्तरिक्ष सद॑म् । दि॒वि॒स॒द॒मिति॑दिवि सद॑म् । दे॒व॒स॒द॒मिति॑देव सद॑म् । ना॒क॒स॒द॒मिति॑नाक सद॑म् ॥२॥

---

य॒ज्ञम् । य॒ज्ञप॑ति॒मिति॑य॒ज्ञ प॑तिम् । दि॒व्यः ॥१॥

ध्रु॒व॒स॒द॒मिति॑ध्रु॒व सद॑म् । जुष्ट॑म् । गृ॒ह्णा॒मि॒ । जुष्ट॑त॒म॒मिति॒जुष्ट॑ तमम् । अ॒प्सु॒षद॑म् । अ॒प्सु॒स॒द॒मित्य॑प्सु सद॑म् । अ॒न्त॒रि॒क्ष॒स॒द॒मित्य॑न्तरि॒क्ष सद॑म् ॥२॥

---

य्य॒ज्ञम् । य्य॒ज्ञप॑ति॒मिति॑य्य॒ज्ञ प॑तिम् । भगा॑य ॥१॥

इन्द्रा॑य । व्यो॒म॒स॒द॒मिति॑व्योम सद॑म् ॥२॥

अपाम् । रसम् । उद्द्वयसमित्युत् व्वयसम् । सूर्य्ये । सन्तम् । समाहितमितिसम् आहितम् ॥ अपाम् । रसस्य । यः । रसः । तम् । व्वः । गृह्णामि । उत्तममित्युत् तमम् ॥३॥

ग्रहाः । ऊर्ज्जाहुतयऽइत्यूर्ज्जा आहुतयः । इयन्तः । व्विप्राय । मतिम् ॥ तेषाम् । व्विशिप्प्रियाणामितिवि शिप्प्रियाणाम् । व्वः । अहम् । इषम् । ऊर्ज्जम् । सम् । अग्ग्रभम् ॥ सम्पृचावितिसम् पृचौ । स्थः । सम् । मा । भद्रेण । पृङ्क्तम् । व्विपृचावितिवि पृचौ । स्थः । व्वि । मा । पाप्मना । पृङ्क्तम् ॥४॥

इन्द्रस्य । व्वज्रः । असि । व्वाजसाऽइतिव्वाज साः । त्वया । अयम् । व्वाजम् । सेत् ॥ व्वाजस्य । नु । प्रसवऽइतिप्र

---

उद्द्वयसमित्युत् व्वयसम् । गृह्णामि । उत्तममित्युत् तमम् ॥३॥

विप्राय । विशिप्रियाणामितिवि शिप्रियाणाम् । अग्रभम् । भद्रेण । पृङ्क्तम् । पाप्मना । पृङ्क्तम् ॥४॥

वज्रः । प्रसवऽइतिप्र सवे । विश्वम् । आविवेशेत्या

---

उद्द्वय़समित्युत् वय़सम् । सूर्य्ये । य्यः । [1]व्वः ॥३॥

ऊर्ज्जाहुतय़ऽइत्यूर्ज्जा आहुतय़ः । व्विप्राय़ । [2]विशिप्रिय़ाणामितिवि[3] शिप्रिय़ाणाम् । व्वः[1] ॥४॥

व्वाजसाऽइतिव्वाज साः । त्वय़ा । अय़म् । [4]अनु । य्यस्याम् ।

---

१. ककोशशैल्यनुसारम् 'वः' इत्येवं पाठेन भाव्यम् ।

२. 'व्वि' इति शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमितिपदात् परं 'व्वि' इत्येवं द्विर्वकारेण भाव्यम् ।

४. 'नु' इति शुद्धः पाठः, मन्त्रे तथा दर्शनात् ।

सवे । मातरम् । महीम् । अदितिम् । नाम । वचसा । करामहे ॥ यस्याम् । इदम् । विश्वम् । भुवनम् । आविवेशेत्याऽविवेश । तस्याम् । नः । देवः । सविता । धर्म्म । साविषत् ॥५॥

अप्स्वित्यप्सु । अन्तः । अमृतम् । अप्स्वित्यप्सु । भेषजम् । अपाम् । उत । प्रशस्तिष्विति प्रशस्तिषु । अश्वाः । भवत । वाजिनः ॥ देवीः । आपः । यः । वः । ऊर्म्मिः । प्रतूर्त्तिरिति प्रतूर्त्तिः । ककुन्मानिति ककुत्मान् । वाजसाऽइति वाजसाः । तेन । अयम् । वाजम् । सेत् ॥६॥

वातः । वा । मनः । वा । गन्धर्वाः । सप्तविꣳशतिरिति सप्तविꣳशतिः ॥ ते । अग्रे । अश्वम् । अयुञ्जन् । ते । अस्मिन् । जवम् । आ । अदधुः ॥७॥

वातरꣳहाऽइति वातरꣳहाः । भव । वाजिन् । युज्यमानः । इन्द्रस्येवेतीन्द्रस्य इव । दक्षिणः । श्रिया ।

---

विवेश ॥५॥

अप्स्वित्यप् सु । अप्स्वित्यप् सु । प्रशस्तिष्विति प्र शस्तिषु । अश्वाः । प्रतूर्त्तिरिति प्र तूर्त्तिः । ककुन्मानिति ककुत् मान् ॥६॥

सप्तविꣳशतिरिति सप्त विꣳशतिः । अग्रे । अश्वम् । अस्मिन् ॥७॥

युज्यमानः । दक्षिणः । विश्ववेदसऽइति विश्व वेदसः । त्वष्टा ।

---

आविवेशेत्या विवेश ॥५॥

अप्स्वित्यप् सु । यः । वः । वाजसाऽइति वाज साः । अयम् ॥६॥

वा । वा । अयुञ्जन् ॥७॥

युज्यमानः । श्रिया । युञ्जन्तु । विश्ववेदसऽइति विश्व वेदसः ।

एधि । मुञ्चन्तु । त्वा । मरुतः । विश्ववेदसऽइतिविश्व वेदसः । आ । ते । त्वष्टा । पत्स्वितिपत् सु । जवम् दधातु ॥८॥

जवः । यः । ते । वाजिन् । निहितऽइतिनि हितः । गुहा । यः । श्येने । परीत्तः । अचरत् । च । वाते ॥ तेन । नः । वाजिन् । बलवानितिबल वान् । बलेन । वाजजिदितिवाज जित् । च । भव । समने । च । पारयिष्णुः ॥ वाजिनः । वाजजितऽइतिवाज जितः । वाजम् । सरिष्यन्तः । बृहस्पतेः । भागम् । अव । जिघ्रत ॥९॥

देवस्य । अहम् । सवितुः । सवे । सत्यसवसऽइतिसत्य सवसः । बृहस्पतेः । उत्तममित्युत् तमम् । नाकम् । रुहेयम् ॥ इन्द्रस्य । सत्यप्रसवसऽइतिसत्य प्रसवसः । अरुहम् ॥१०॥

---

पत्स्वितिपत् सु ॥८॥

जवः । पारयिष्णुः । सरिष्यन्तः । बृहस्पतेः । जिघ्रत ॥९॥

सत्यसवसऽइतिसत्य सवसः । बृहस्पतेः । उत्तममित्युत् तमम् । सत्यप्रसवसऽइतिसत्य प्रसवसः ॥१०॥

---

[1]पथ्स्वितिपत् सु ॥८॥

बलवानितिबल वान् । वाजजिदितिवाज जित् । पारयिष्णुः । वाजजितऽइतिवाज जितः ॥९॥

रुहेयम् ॥१०॥

---

१. द्र० पूर्वत्र पृष्ठ ४४ टि० २ ।

बृहस्प्पते । व्वाजम् । जय । बृहस्प्पतये । व्वाचम् । व्वदत । बृहस्प्पतिम् । व्वाजम् । जापयत ॥ इन्द्र । इन्द्राय । इन्द्रम् ॥११॥

एषा । व्वः । सा । सत्त्या । सँव्वागितिसम् व्वाक् । अभूत् । यया । बृहस्प्पतिम् । व्वाजम् । अजीजपत । अजीजपत । बृहस्प्पतिम् । व्वाजम् । व्वनस्पतयः । व्वि । मुच्च्यद्ध्वम् ॥ इन्द्रम् । व्वाजजितऽइतिवाज जितं÷ । व्वाजम् । जेषम् ॥ व्वाजिनः । व्वाजजितऽइतिवाज जितः । अद्ध्वनः । स्कब्भुवन्तं÷ । योजना । मिमानाः । काष्ट्ठाम् । गच्छत ॥१२॥

एषः । स्यः । व्वाजी । क्षिपणिम् । तुरण्ण्यति । ग्रीवा-याम् । बद्धः । अपिकक्क्षऽइत्त्यपि कक्क्षे । आसनि ।

---

बृहस्पते । बृहस्पतये । बृहस्पतिम् ॥११॥

सत्या । बृहस्पतिम् । बृहस्पतिम् । वनस्पतयः । मुच्यध्वम् । अध्वनः । स्कम्नुवन्तं÷ । काष्ठाम् । गछत ॥१२॥

तुरण्यति । बद्धः । अपिकक्षऽइत्यपि कक्षे । दधिक्राऽइतिदधि क्राः ।

---

जय । बृहस्पतय्ये । जापय्यत । इन्द्राय्य ॥११॥

वः । [1]सम्व्वागितिसम् व्वाक् । य्यया । व्वनस्पतय्यः । [2]व्वाजजित-ऽइतिव्वाज जितं÷ । व्वाजम् । जेषम् । व्वाजिनः । व्वाजजितऽइतिव्वाज जितः । अध्वनः ॥१२॥

ग्रीवाय्याम् ॥१३॥

---

१. अपपाठोऽयम्, 'सव्वाँगितिसम् वाक्' इति पाठो ज्ञेयः ।

२. इत आरभ्य आकण्डिकान्तो भागोऽन्यकोशेषु पूर्वकण्डिकायामेव पठ्यते । अतः ककोश एकस्याः कण्डिकासंख्याया भेदो जायते ।

क्रतुम् । दधिक्राऽइतिदधि क्राः॰ । अनु । संसनिष्यदत् । संसनिस्यदादितिसम् सनिस्यदत् । पथाम् । अङ्कांसि । अनु । आपनीफणादित्या पनीफणत् । स्वाहा ॥१३॥

उत । स्म । अस्य । द्रवतः॰ । तुरण्यतः॰ । पर्णम् । न । वेः॰ । अनु । वाति । प्रगर्द्धिनऽइतिप्र गर्द्धिनः ॥ श्येनस्येवेतिश्येनस्य इव । ध्रजतः॰ । अङ्कसम् । परि । दधिक्राव्णऽइतिदधि क्राव्णः । सह । ऊर्जा । तरित्रतः॰ । स्वाहा ॥१४॥

शम् । नः॰ । भवन्तु । वाजिनः । हवेषु । देवतातेति-देव ताता । मितद्रवऽइतिमित द्रवः॰ । स्वर्काऽइतिसु अर्काः॰ ॥ जम्भयन्तः॰ । अहिम् । वृकम् । रक्षांसि ॥ सनेमि । अस्मत् । युयवन् । अमीवाः॰ ॥१५॥

---

संसनिष्यदत् । अङ्कांसि । आपनीफणदित्या पनीफणत् ॥१३॥

तुरण्यतः॰ । पर्णम् । प्रगर्धिनऽइतिप्र गर्धिनः । श्येनस्येवेतिश्येनस्य इव । अङ्कसम् । दधिक्राव्णऽइतिदधि क्राव्णः । तरित्रतः॰ ॥१४॥

मितद्रवऽइतिमित द्रवः॰ । रक्षांसि । अस्मत् ॥१५॥

---

[1]तुरण्यतः॰ । [2]वेः॰ । [3]वाति । प्रगर्द्धिनऽइतिप्र गर्द्धिनः ॥१४॥

[4]जम्भयन्तः॰ । यु॒यु॒वन् ॥१५॥

---

१. अपपाठोऽयम्, रेफस्योपरि अनुस्वारो नेष्यते ।

२. 'वेः॰' इति शुद्धः पाठो ज्ञेयः ।

३. 'वाति' इति शुद्धः पाठो द्रष्टव्यः ।

४. अत्र 'जम्भयन्तः॰' इत्यस्य स्थाने 'जम्भयन्त' इत्येवं पाठेन भाव्यम् ।

ते । नः । अर्वन्तः । हुवनश्श्रुतऽइतिहवन श्रुतः । हवम् । विश्वे । शृण्वन्तु । वाजिनः । मितद्रवऽइतिमित द्रवः । सहस्रसाऽइतिसहस्र साः । मेधसातेतिमेध साता । सनिष्यवः । महः । ये । धनम् । समिथेष्विति सम् इथेषु । जभ्रिरे ॥१६॥

वाजेवाजऽइतिवाजे वाजे । अवत । वाजिनः । नः । धनेषु । विप्राः । अमृताः । ऋतज्ञाऽइत्यृत ज्ञाः ॥ अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिभिरितिपथि भिः । देवयानैरितिदेव यानैः ॥१७॥

आ । मा । वाजस्य । प्रसवऽइतिप्र सवः । जगम्यात् । आ । इमेऽइतीमे । द्यावापृथिवीऽइतिद्यावापृथिवी ।

---

हुवनश्श्रुतऽइतिहवन श्रुतः । विश्वे । शृण्वन्तु । मितद्रवऽइतिमित द्रवः । सनिष्यवः । समिथेष्वितिसम् इथेषु । जभ्रिरे ॥१६॥

विप्राः । ऋतज्ञाऽइत्यृत ज्ञाः । मध्वः । मादयध्वम् । तृप्ताः ॥१७॥

प्रसवऽइतिप्र सवः । जगम्यात् । द्यावापृथिवीऽइतिद्यावापृथिवी ।

---

ये ॥१६॥

वाजेवाजऽइतिवाजे [1]वाजे । [2]ऋतग्न्याऽइत्यृत [2]ग्न्याः । मादयध्वम् । य्यात । [3]देवय्यानैरितिदेव [3]य्यानैः ॥१७॥

---

१. 'वाजे' इति शुद्धः पाठः कपाठानुसारम् ।

२. अपपाठोऽयमुच्चारणदोषजः ।

३. 'य्या' अपपाठोऽयम् 'या' इत्येवेष्यते ।

विश्वरूपेऽइतिविश्व रूपे ॥ आ । मा । गन्ताम् । [1]पितरा । [1]मातरा । च । आ । मा । सोमः । अमृतत्वेनेत्यमृत त्वेन । गम्म्यात् । सस्रुवाध्ठंसऽइतिसस्रुवाध्ठंसः । निमृजाना-इतिनि [2]मृजानाः ॥१८॥

आपये । स्वाहा । स्वापयऽइतिसु आपये । अपिजाये-त्यपि जाय । क्रतवे । वसवे । अहर्प्पतये । अहध्ठंपतय-ऽइत्यहध्ठं पतये । अह्ने । मुग्ग्धाय । मुग्ग्धाय । वैनध्ठं-शिनाय । विनध्ठंशिनऽइतिवि नध्ठंशिने । आन्त्यायनाये-त्यान्त्य [3]आयनाय । अन्त्याय । भौवनाय । भुवनस्य । पतये । [4]अधिपतयऽइत्यधि पतये ॥१९॥

---

विश्वरूपेऽइतिविश्व रूपे । अमृतत्वेनेत्यमृत त्वेन । गम्यात् ॥१८॥

अपिजायेत्यपि जाय । अहध्ठंपतयऽइत्यहध्ठं पतये । अह्ने । मुग्धाय । मुग्धाय । आन्त्यायनायेत्यान्त्य आयनाय । अधिपतयऽइत्यधि पतये ॥१९॥

---

विश्वरूपेऽइतिविश्व रूपे ॥१८॥

आपय्ये । स्वापय्यऽइतिसु आपय्ये । अपिजाय्येत्यपि जाय्य । अहर्प्पतय्ये । अहध्ठंपतय्यऽइत्यहध्ठं पतय्ये । मुग्धाय्य । मुग्धाय्य । वैनध्ठंशिनाय्य । विनध्ठंशिनऽइतिवि नध्ठंशिने । आन्त्याय्यनायेत्यान्त्य आयनाय्य । अन्त्याय्य । भौवनाय्य । भौवनाय्य । पतय्ये । अधिपतय्यऽइत्यधि पतय्ये ॥१९॥

---

१. अत्राह नागेशः —'यद्यपि तैत्तिरीये माध्यन्दिनशाखायां च पितरे-त्यादिभिन्नपदत्वेन पदपाठे पठन्ति, तथापि शाखान्तरे ऐकपद्येन पाठो भाष्य-प्रामाण्याद् द्रष्टव्यः । यद्वा पदच्छेदपाठो भ्रान्त्येति बोध्यम्, तत्र तत्रावग्रहवत् । आधुनिकानां वा सम्प्रदायभ्रंश इति कल्प्यम् ।।' महाभाष्यप्रदीपोद्योते ६।३।३३ ।

२. मृजाना?' इति काशिकः पाठः ।

३. 'आयनाय' इति काशिकः पाठः ।

४. 'अधिपतयऽइत्यधि पतये' इति काशिकः पाठो मन्त्रस्वरविपरीतः ।

आयुः । यज्ञेन । कल्पताम् । प्राणः । चक्षुः । श्रोत्रम् । पृष्ठम् । यज्ञः । यज्ञेन । कल्पताम् । प्रजापतेरितिप्रजा पतेः । प्रजाऽइतिप्र जाः । अभूम । स्वः । देवाः । अगन्म । अमृताः । अभूम ॥२०॥

अस्मेऽइत्यस्मे । वः । अस्तु । इन्द्रियम् । अस्मेऽइत्यस्मे । नृम्णम् । उत । क्रतुः । अस्मेऽइत्यस्मे । वर्चांसि । सन्तु । वः ॥ नमः । मात्रे । पृथिव्यै । नमः । मात्रे । पृथिव्यै । इयम् । ते । राट् । यन्ता । असि । यमनः । ध्रुवः । धरुणः ॥ कृष्यै । त्वा । क्षेमाय । रय्यै । पोषाय ॥२१॥

वाजस्य । इमम् । प्रसवऽइतिप्र सवः । सुषुवे । सुसुवऽइतिसुसुवे । अग्रे । सोमम् । राजानम् । ओषधीषु । अप्स्वित्यप् सु ॥ ताः । अस्मभ्यम् । मधुमतीरितिमधु मतीः । भवन्तु । वयम् । राष्ट्रे । जागृयाम । पुरोहिताऽइतिपुरः हिताः । स्वाहा ॥२२॥

---

यज्ञेन । कल्पताम् । चक्षुः । श्रोत्रम् । पृष्ठम् । यज्ञः । यज्ञेन । कल्पताम् । प्रजापतेरितिप्रजा पतेः । प्रजाऽइतिप्र जाः । अगन्म ॥२०॥

अस्मेऽइत्यस्मे । अस्मेऽइत्यस्मे । नृम्णम् । अस्मेऽइत्यस्मे । मात्रे । पृथिव्यै । मात्रे । पृथिव्यै । कृष्यै ॥२१॥

प्रसवऽइतिप्र सवः । अग्रे । अप्स्वित्यप् सु ॥ अस्मभ्यम् । राष्ट्रे ॥२२॥

---

आयुः । य्यज्ञेन । य्यज्ञः । य्यज्ञेन ॥२०॥

वः । इन्द्रियम् । वः । इयम् । य्यन्ता । य्यमनः । क्षेमाय । रय्यै । पोषाय ॥२१॥

वयम् । जागृयाम ॥२२॥

वाजस्य । इमाम् । प्रसवऽइतिप्र सवः । शिश्रिये । दिवम् । इमा । च । विश्वा । भुवनानि । सम्राडितिसम् राट् ॥ अदित्सन्तम् । दापयति । प्रजानन्नितिप्र जानन् । सः । नः । रयिम् । सर्ववीरमितिसर्व वीरम् । नि । यच्छतु । स्वाहा ॥२३॥

वाजस्य । नु । प्रसवऽइतिप्र सवः । आ । बभूव । इमा । च । विश्वा । भुवनानि । सर्वतः । सः । नेमि । राजा । परि । याति । विद्वान् । प्रजामितिप्र जाम् । पुष्टिम् । वर्द्धयमानः । अस्मेऽइत्यस्मे । स्वाहा ॥२४॥

सोमम् । राजानम् । अवसे । अग्निम् । अन्वारभामहऽइत्यनु आरभामहे ॥ आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् । स्वाहा ॥२५॥

---

प्रसवऽइतिप्र सवः । शिश्रिये । विश्वा । सम्राडितिसम् राट् । अदित्सन्तम् । प्रजानन्नितिप्र जानन् । यच्छतु ॥२३॥

प्रसवऽइतिप्र सवः । विश्वा । विद्वान् । प्रजामितिप्र जाम् । पुष्टिम् । अस्मेऽइत्यस्मे ॥२४॥

अग्निम् । अन्वारभामहऽइत्यनु आरभामहे । आदित्यान् । विष्णुम् । ब्रह्माणम् । बृहस्पतिम् ॥२५॥

---

शिश्रिये । [1]सम्राडितिसम् राट् । दापयति । रयिम् । सर्ववीरमितिसर्व वीरम् । यच्छतु ॥२३॥

याति । वर्द्धयमानः ॥२४॥

सूर्यम् ॥२५॥

---

१. द्र० पूर्वत्र पृष्ठ ३७ टि० १ ।

अर्य्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ॥ वाचम् । विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् । स्वाहा ॥२६॥

अग्ने । अच्छ । वद । इह । नः । प्रति । नः । सुमनाऽइतिसु मनाः । भव ॥ प्र । नः । यच्छ । सहस्र-जिदितिसहस्र जित् । त्वम् । हि । धनदाऽइतिधन दाः । असि । स्वाहा ॥२७॥

प्र । नः । यच्छतु । अर्य्यमा । पूषा । बृहस्पतिः ॥ वाक् । देवी । ददातु । नः । स्वाहा ॥२८॥

सरस्वत्यै । वाचः । यन्तुः । यन्त्रियें । दधामि । बृहस्पतेः । त्वा । साम्राज्ज्येनेतिसाम् राज्ज्येन । अभि । सिञ्चामि । असौ ॥२९॥

---

बृहस्पतिम् । विष्णुम् ॥२६॥

अग्ने । अछ । यछ ॥२७॥

यछतु । बृहस्पतिः ॥२८॥

सरस्वत्यै । बृहस्पतेः । साम्राज्येनेतिसाम् राज्येन ॥२९॥

---

अर्य्यमणम् । दानाय । चोदय ॥२६॥

अग्ने । अछ । य्यछ ॥२७॥

य्यछतु । अर्य्यमा ॥२८॥

य्यन्तुः । य्यन्त्रियें । [1]साम्राज्येनेतिसाम् राज्येन ॥२९॥

---

१. द्र० पूर्वत्र पृष्ठ ३७ टि० १ ।

अ॒ग्निः॑ । एका॑क्क्षरे॒णेत्त्येक॑ अक्क्षरेण । प्रा॒णम् । उत् । अ॒ज॒य॒त् । तम् । उत् । जे॒ष॒म् । अ॒श्विनौ॑ । द्व्य॑क्क्षरे॒णेति॒द्वि॒ अ॑क्क्षरेण । द्वि॒प॒द॒ऽइति॑द्वि॒ पद॑ः । म॒नु॒ष्ष्या॒न् । उत् । अ॒ज॒य॒ता॒म् । ता॒न् । वि॒ष्णु॑ः । त्र्य॑क्क्षरे॒णेति॒त्रि॒ अ॑क्क्षरेण । त्रीन् । लो॒का॒न् । सोम॑ः । चतु॑रक्क्षरे॒णेति॒चतु॑ः अक्क्षरेण । चतु॑ष्प॒द॒ः । चतु॑ःप॒द॒ऽइति॒चतु॑ः पद॒ः । प॒शून् ॥३०॥

पू॒षा । पञ्चा॑क्क्षरे॒णेति॒पञ्च॑ अक्क्षरेण । पञ्च॑ । दिश॑ः । ताः॑ । स॒वि॒ता । षड॑क्क्षरे॒णेति॒षट् अ॑क्क्षरेण । षट् । ऋ॒तू॒न् । म॒रुत॑ः । स॒प्ताक्क्ष॑रे॒णेति॑स॒प्त अ॑क्षरेण । स॒प्त । ग्रा॒म्म्या॒न् । अ॒ज॒य॒न् । बृ॒ह॒स्प्पति॑ः । अ॒ष्टाक्क्ष॑रे॒णेत्त्य॒ष्ट अ॑क्क्षरेण । गा॒य॒त्रीम् । ताम् ॥३१॥

मि॒त्त्रः॑ । न॒वा॑क्क्षरे॒णेति॒नव॑ अक्क्षरेण । त्रि॒वृत॒मिति॑त्त्रि॒ वृत॑म् । स्तोम॑म् । वरु॑णः । दशा॑क्क्षरे॒णेति॒दश॑ अक्क्षरेण ।

---

अ॒ग्निः॑ । एका॑क्षरे॒णेत्येक॑ अक्षरेण । अ॒श्विनौ॑ । द्व्य॑क्षरे॒णेति॒द्वि अ॑क्षरेण । द्वि॒प॒द॒ऽइति॑द्वि पद॑ः । म॒नु॒ष्या॒न् । वि॒ष्णु॑ः । त्र्य॑क्षरे॒णेति॒त्रि अ॑क्षरेण । चतु॑रक्षरे॒णेति॒चतु॑ः अक्षरेण । चतु॑ष्पद॒ः ॥३०॥

पञ्चा॑क्षरे॒णेति॒पञ्च॑ अक्षरेण । षड॑क्षरे॒णेति॒षट् अ॑क्षरेण । स॒प्ताक्ष॑रे॒णेति॑स॒प्त अ॑क्षरेण । स॒प्त । ग्रा॒म्या॒न् । बृ॒ह॒स्पति॑ः । अ॒ष्टाक्ष॑रे॒णेत्य॒ष्ट अ॑क्षरेण । गा॒य॒त्रीम् ॥३१॥

मि॒त्रः॑ । न॒वा॑क्षरे॒णेति॒नव॑ अक्षरेण । त्रि॒वृत॒मिति॑त्रि॒ वृत॑म् । दशा-

---

अ॒ज॒य्य॒त् । अ॒ज॒य्य॒ता॒म् ॥३०॥

गा॒य्य॒त्रीम् ॥३१॥

विराजमितिवि राजम् । इन्द्रः । एकादशाक्क्षरेणेत्येकादश अक्क्षरेण । त्रिष्टुभम् । त्रिस्तुभमितित्रि स्तुभम् । विश्वे । देवाः । द्वादशाक्षरेणेतिद्वादश अक्क्षरेण । जगतीम् ॥३२॥

वसवः । त्रयोदशाक्क्षरेणेतित्रयोदश अक्क्षरेण । त्रयोदशमितित्रयः दशम् । रुद्राः । चतुर्दशाक्क्षरेणेतिचतुर्दश अक्क्षरेण । चतुर्दशमितिचतुः दशम् । आदित्याः । पञ्च-दशाक्क्षरेणेतिपञ्चदश अक्क्षरेण । पञ्चदशमितिपञ्च दशम् । अदितिः । षोडशाक्क्षरेणेतिषोडश अक्क्षरेण । षोडशम् । प्रजापतिरितिप्रजा पतिः । सप्तदशाक्क्षरेणेति-सप्तदश अक्क्षरेण । सप्तदशमितिसप्त दशम् ॥३३॥

---

क्षरेणेतिदश अक्षरेण । एकादशाक्षरेणेत्येकादश अक्षरेण । त्रिष्टुभम् । त्रिस्तुभ-मितित्रि स्तुभम् । विश्वे । द्वादशाक्षरेणेतिद्वादश अक्षरेण ॥३२॥

त्रयोदशाक्षरेणेतित्रयोदश अक्षरेण । त्रयोदशमितित्रयः दशम् । रुद्राः । चतुर्दशाक्षरेणेतिचतुर्दश अक्षरेण । चतुर्दशमितिचतुः दशम् । आदित्याः । पञ्चदशाक्षरेणेतिपञ्चदश अक्षरेण । पञ्चदशमितिपञ्च दशम् । षोडशाक्षरेणेतिषोडश अक्षरेण । प्रजापतिरितिप्रजा पतिः । सप्तदशाक्षरेणेति-सप्तदश अक्षरेण । सप्तदशमितिसप्त दशम् ॥३३॥

---

विराजमितिवि राजम् ॥३२॥

त्रयोदशाक्षरेणेति त्रयोदश अक्षरेण । त्रयोदशमितित्रयः दशम् । [1]पञ्चदशमितिपञ्च दशम् । [2]षोडशमितिषोडशम् ॥३३॥

---

१. अपपाठोऽयम् ।

२. इतिना पुनरावृत्तिरन्यकोशेषु नोपलभ्यते, स्वरदोषश्चापि दृश्यते ।

एषः। ते। निर्ऋत इतिनिऽऋते। भागः। तम्। जुषस्व। स्वाहा। अग्निनेत्रेभ्य इत्यग्निऽनेत्रेभ्यः। देवेभ्यः। पुरःसद्भ्य इतिपुरःसत्ऽभ्यः। स्वाहा॥ यमनेत्रेभ्य इतियमऽनेत्रेभ्यः। दक्षिणासद्भ्य इतिदक्षिणासत्ऽभ्यः। विश्वदेवनेत्रेभ्य इतिविश्वदेवऽनेत्रेभ्यः। पश्चात्सद्भ्य इतिपश्चात्सत्ऽभ्यः। मित्रावरुणनेत्रेभ्य इतिमित्रावरुणऽनेत्रेभ्यः। वा। मरुन्नेत्रेभ्य इतिमरुत्ऽनेत्रेभ्यः। वा। उत्तरासद्भ्य इत्युत्तरासत्ऽभ्यः। सोमनेत्रेभ्य इतिसोमऽनेत्रेभ्यः। उपरिसद्भ्य इत्युपरिसत्ऽभ्यः। दुवस्वद्भ्य इतिदुवस्वत्ऽभ्यः॥३४॥

ये। देवाः। अग्निनेत्रा इत्यग्निऽनेत्राः। पुरःसद इतिपुरःऽसदः। तेभ्यः। यमनेत्रा इतियमऽनेत्राः। दक्षिणासद इतिदक्षिणाऽसदः। विश्वदेवनेत्रा इति-

---

अग्निनेत्रेभ्य इत्यग्निऽनेत्रेभ्यः। देवेभ्यः। यमनेत्रेभ्य इतियमऽनेत्रेभ्यः। दक्षिणासद्भ्य इतिदक्षिणासत्ऽभ्यः। विश्वदेवनेत्रेभ्य इतिविश्वदेवऽनेत्रेभ्यः। पश्चात्सद्भ्य इतिपश्चात्सत्ऽभ्यः। मित्रावरुणनेत्रेभ्य इतिमित्रावरुणऽनेत्रेभ्यः। मरुन्नेत्रेभ्य इतिमरुत्ऽनेत्रेभ्यः। उत्तरासद्भ्य इत्युत्तरासत्ऽभ्यः। सोमनेत्रेभ्य इतिसोमऽनेत्रेभ्यः। उपरिसद्भ्य इत्युपरिसत्ऽभ्यः॥३४॥

अग्निनेत्रा इत्यग्निऽनेत्राः। तेभ्यः। यमनेत्रा इतियमऽनेत्राः। दक्षिणासद इतिदक्षिणाऽसदः। विश्वदेवनेत्रा इतिविश्वदेवऽनेत्राः।

---

य्यमनेत्रेभ्य इतिय्यमऽनेत्रेभ्यः। वा। वा॥३४॥

य्ये। य्यमनेत्रा इतिय्यमऽनेत्राः। [1]पश्चात्सद इतिपश्चात्

---

१. द्र० पूर्वत्र पृष्ठ ४५ टि० २।

विश्वदेव नेत्राः । पश्चात्सदऽइतिपश्चात् सदः । मित्रावरुणनेत्राऽइतिमित्रावरुण नेत्राः । मरुन्नेत्राऽइतिमरुत् नेत्राः । उत्तरासदऽइत्युत्तरा सदः । सोमनेत्राऽइतिसोम नेत्राः । उपरिसदऽइत्युपरि सदः । दुवस्वन्तः ॥३५॥

अग्ने । सहस्व । पृतनाः । अभिमातीरित्यभि मातीः । अप । अस्य ॥ दुष्टरः । [1]दुस्तरऽइतिदुस्तरः । तरन् । अरातीः । वर्चः । धाः । यज्ञवाहसीतियज्ञ वाहसि ॥३६॥

उपांशोरित्युप अंशोः । वीर्येण । जुहोमि । हतम् । रक्षः । स्वाहा । रक्षसाम् । त्वा । वधाय । अवधिष्म । रक्षः । अवधिष्म । अमुम् । असौ । हतः ॥३७॥

---

पश्चात्सदऽइतिपश्चात् सदः । मित्रावरुणनेत्राऽइतिमित्रावरुण नेत्राः । मरुन्नेत्राऽइतिमरुत् नेत्राः । उत्तरासदऽइत्युत्तरा सदः । सोमनेत्राऽइतिसोम नेत्राः । उपरिसदऽइत्युपरि सदः ॥३५॥

अग्ने । अभिमातीरित्यभि मातीः । दुष्टरः । दुस्तरऽइतिदुस्तरः । यज्ञवाहसीतियज्ञ वाहसि ॥३६॥

उपांशोरित्युप अंशोः । रक्षः । रक्षसाम् । अवधिष्म । रक्षः । अवधिष्म ॥३७॥

---

सदः ॥३५॥

यज्ञवाहसीतियज्ञ वाहसि ॥३६॥

उपांशोरित्युप[2] अंशोः । वीर्येण । [3]रक्षसान् । वधाय ॥३७॥

---

१. स्वामिदयानन्दस्य भाष्ये 'दुस्तरऽइतिदुः तरः' इत्येवं पाठ उपलभ्यते ।

२. अपपाठोऽयं लेखकप्रमादजः । '०रित्युप अंशोः' इत्येवं साधुः पाठो द्रष्टव्यः ।

३. अपपाठोऽयं लेखकप्रमादजः । 'रक्षसाम्' इत्येवं पाठो युक्तः ।

सविता । त्वा । सवानाम् । सुवताम् । अग्निः । गृहपतीनामितिगृह पतीनाम् । सोमः । वनस्पतीनाम् ॥ बृहस्पतिः । वाचे । इन्द्रः । ज्यैष्ठ्याय । रुद्रः । पशुभ्यऽइतिपशु भ्यः । मित्रः । सत्यः । वरुणः । धर्म्मपतीनामितिधर्म्म पतीनाम् ॥३८॥

इमम् । देवाः । असपत्नम् । सुवध्वम् । महते । क्षत्राय । ज्यैष्ठ्याय । जानराज्यायेतिजान राज्याय । इन्द्रस्य । इन्द्रियाय ॥ इमम् । अमुष्य । पुत्रम् । अमुष्यै । पुत्रम् । अस्यै । विशे । एषः । वः । अमीऽइत्यमी । राजा । सोमः । अस्माकम् । ब्राह्मणानाम् । राजा ॥३९॥

॥ इति वाजसनेयिसंहितापदे नवमोऽध्यायः ॥

---

अग्नि? । वनस्पतीनाम् । बृहस्पतिः । ज्यैष्ठ्याय । रुद्र? । पशुभ्यऽइतिपशु भ्यः । मित्र? । सत्य? ॥३८॥

असपत्नम् । सुवध्वम् । क्षत्राय । ज्यैष्ठ्याय । जानराज्यायेतिजान राज्याय । अमुष्यै । पुत्रम् । अमीऽइत्यमी । अस्माकम् । ब्राह्मणानाम् ॥३९॥

---

सविता । ज्यैष्ठ्याय ॥३८॥

क्षत्राय । ज्यैष्ठ्याय । जानराज्यायेतिजान राज्याय । इन्द्रियाय । वः ॥३९॥

॥ इति श्री वाजसनेयिसंहितापदे नवमोऽध्यायः ॥

# दशमोऽध्यायः

अपः॒ । दे॒वाः॒ । मधु॑मती॒रिति॒मधु॑ मतीः॑ । अगृ॒भ्ण॒न् ।
ऊर्ज॑स्वतीः॑ । रा॒ज॒स्व॒ऽइति॑राज स्व॒ः । चिता॑नाः॑ ॥
याभि॑ः । मि॒त्रावरु॑णौ । अ॒भि । असि॑ञ्चन् । याभि॑ः ।
इन्द्र॑म् । अन॑यन् । अति॑ । अरा॑तीः॑ ॥१॥

वृ॒ष्ण॑ः । ऊ॒र्म्मिः॒ । अ॒सि॒ । रा॒ष्ट्र॒दा॒ऽइति॑रा॒ष्ट्र॒
दाः॒ । रा॒ष्ट्रम् । मे॒ । दे॒हि॒ । स्वाहा॑ । अ॒मुष्मै॑ । वृ॒ष॒सेन॒-
ऽइति॑वृ॒ष सेनः॒ ॥२॥

---

अगृ॒भ्ण॒न् । मि॒त्राव॒रु॑णौ ॥१॥
वृ॒ष्ण॑ः । रा॒ष्ट्र॒दा॒ऽइति॑रा॒ष्ट्र॒ दाः॒ । रा॒ष्ट्रम् । अ॒मुष्मै॑ ॥२॥

---

[2]चिता॑नाः॑ । य्याभि॑ः । [3]अ॒सि॒ञ्च॒न् । य्याभि॑ः । अन॑य्यन् ॥१॥
[4]वृ॒ष्ण॑ः । [4]वृ॒ष॒सेन॒ऽइति॑वृ॒ष[4] सेन॒ ॥२॥

---

१. सर्वकोशेष्वयमेव पाठः । अत्र च 'नाभ्येकाक्षरश्च स्वरसन्धयेऽकृति' इति प्रातिशाखीयं सूत्रं (६।५) प्रमाणम् । पाणिनीयमतानुसारं त्वत्र 'उदात्तवता गतिमता च तिङा' (वार्तिक ६।२।१८) इति नियमेन समासेन भाव्यम् । तथा सति 'अभ्यसिञ्चन्नित्यभि असिञ्चन्' इत्येवमवग्रहेण भाव्यम् । अयं मन्त्रः किञ्चिद्भेदेन तैत्तिरीयसंहितायाम् (१।८।११) अपि पठ्यते । तत्र च—'अभ्यषिञ्चान्नित्यभि आसिञ्चन्' इत्येवमवगृह्यते । तैत्तिरीयपदपाठेऽवग्रहात् परमुदात्तमाश्रित्य पूर्वस्मिन्नवगृहीतभागे 'उदात्तस्वरितपरस्य सन्नतरः (अष्टा० १।२।४०) इति नियमो न प्रवर्तत इति कृत्वा 'भि' इत्यत्रैकश्रुतिर्भवति । वाजसनेयप्रातिशाख्यकारमतेन सह पाणिनीयमत-संगत्यर्थमत्र पाणिनीये मते 'अभि' कर्मप्रवचनीयत्वं व्याख्येयम् ।

२. अपपाठोऽयं लेखकप्रमादजः ।

३. अपपाठोऽयं लेखकप्रमादजः, मन्त्रे तिङ आद्युदात्तत्वदर्शनात् ।

४. ककोशशैल्यनुसारमृकारपरो वकारो न गुरुर्भवति, अतोऽपपाठोऽयम् ।

अर्थेतऽइत्यर्थं इतंः । स्थ । दत्त । ओजस्वतींः । आर्पः । परिवाहिणींः । परिवाहिनीरितिपरि व्राहिनींः । अपाम् । पतिंः । अपाम् । गर्भः ॥३॥

सूर्य्यत्त्वचसऽइतिसूर्य्य त्वचसंः । सूर्य्यवर्चसऽइतिसूर्य्य वर्चसंः । मान्दांः । व्रजक्षित‍ऽइतिव्रज क्षितंः । वाशांः । शविष्ठांः । शक्करींः । जनभृतऽइतिजन भृतंः । विश्वभृतऽइतिविश्व भृतंः । आर्पः । स्वराजऽइतिस्व राजंः ॥ महि । क्षत्रम् । क्षत्रियाय । वन्वानाः । अनाधृष्टाः । सीदत । सहौजसऽइतिसह [1]ओजसंः । दधंतींः ॥४॥

सोमस्य । त्विषिंः । असि । तवेवेतितवं इव । मे । त्विषिंः । भूयात् ॥ अग्नये । स्वाहा । सोमाय । सवित्रे ।

---

अर्थेतऽइत्यर्थं इतंः । गर्भः ॥३॥

सूर्य्यत्वचसऽइतिसूर्य्य त्वचसं । व्रजक्षितऽइतिव्रज क्षितंः । शविष्ठाः । शक्करीः । विश्वभृतऽइतिविश्व भृतंः । क्षत्रम् । क्षत्रियाय । वन्वाना? । अनाधृष्टा? ॥४॥

अग्नये । सवित्रे । सरस्वत्यै । पूष्णे । बृहस्पतये ॥५॥

---

सूर्य्यत्वचसऽइतिसूर्य्य त्वचसं । सूर्य्यवर्चसऽइतिसूर्य्य [2]वर्चसं । व्रजक्षितऽइतिव्रज क्षितंः । विश्वभृतऽइतिविश्व भृतंः । क्षत्रियाय ॥४॥

भूयात् । अग्नये । सोमाय । बृहस्पतये । इन्द्राय । घोषाय ।

---

१. स्वामिदयानन्दः स्वीये यजुर्वेदभाष्ये 'ओजसः' इत्येवं स्वरं स्वीचकार । परन्त्वन्यत्र सर्वत्र 'ओजसं' इत्याद्युदात्तत्वमेवोपलभ्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरे 'ओजसं' इति सर्वानुदात्तेन पदेन भाव्यम् । तस्मात् स्वामिदयानन्दनिर्दिष्टः स्वरः पाणिनीयतन्त्रानुकूलः । पदकाराणामुभयपदप्रकृतिस्वरनियमो गवेषणार्हः ।

२. ककोशशैल्यनुसारं 'वर्च्चसं' इत्येकवकारवान् पाठो ज्ञेयः ।

सरस्वत्त्यै । पूष्ण्णे । बृहस्प्पतये । इन्द्राय । घोषाय । श्लोकाय । अꣳशाय । भगाय । अर्य्यम्णे ॥५॥

अनिभृष्ट्टमित्त्यनि भृष्ट्टम् । असि । व्वाचः । बन्धुः । तपोजाऽइतितपःꣳ जाः । सोमस्य । दात्त्रम् । असि । स्वाहा । राजस्स्वऽइतिराज स्वः ॥६॥

सधमादऽइतिसध मादः । द्युम्न्निनीꣳ । आपः । एताः । अनाधृष्टाꣳ । अपस्यः । व्वसानाꣳ ॥ पस्त्यासु । चक्क्रे । व्वरुणꣳ । सधस्त्थमितिसध स्थम् । अपाम् । शिशुः । मातृतमास्वितिमातृ तमासु । अन्तरिच्चयन्तः ॥७॥

क्षत्त्रस्य । उल्बम् । असि । जरायु । योनिः । नाभिः । इन्द्रस्य । वार्त्रघ्नमितिवार्त्र घ्नम् । मित्त्रस्य । व्वरुणस्य । त्वया । अयम् । वृत्त्रम् । व्वधेत् ॥ दृवा । रुजा । क्षुमा ॥ पात । एनम् । प्राञ्चम् । प्रत्त्यञ्चम् । तिर्य्यञ्चम् । दिग्भ्यऽइतिदिक् भ्यः । पात ॥८॥

---

अनिभृष्टमित्यनि भृष्टम् । दात्रम् ॥६॥

द्युम्निनीꣳ । अनाधृष्टाꣳ । चक्रे । सधस्थमितिसध स्थम् । अन्तरित्यन्तः ॥७॥

क्षत्रस्य । उल्बम् । व्वार्त्रघ्नमितिवार्त्र घ्नम् । मित्रस्य । वृत्रम् । प्रत्यञ्चम् । दिग्भ्यऽइतिदिक् भ्यः ॥८॥

---

श्लोकाय । अꣳशाय । भगाय । अर्य्यम्णे ॥५॥

जरायु । य्योनिः । व्वार्त्रघ्नमितिव्वार्त्र घ्नम् । त्वया । अयम् ॥८॥

आत्रिः । मर्य्यादं । आवित्तऽइत्त्या वित्तदं । अग्निः । गृहपतिरितिगृह पतिदं । आवित्तऽइत्त्या वित्तदं । इन्द्रः । वृद्धश्रवाऽइतिवृद्ध श्रवादं । आवित्तावित्त्या वित्तौ । मित्रावरुणौ । धृतव्रतावितिधृत व्रतौ । आवित्तऽइत्त्या वित्तदं । पूषा । विश्ववेदाऽइतिविश्व वेदादं । आवित्तेऽइत्त्या वित्ते । द्यावापृथिवीऽइतिद्यावापृथिवी । विश्वशम्भुवावितिविश्व शम्भुवौ । आवित्तेत्त्या वित्ता । अदितिदं । उरुशर्म्मेत्युरु शर्म्मा ॥९॥

अवेष्टाऽइत्त्यव इष्टादं । दन्दशूकादं । प्राचीम् । आ । रोह । गायत्री । त्वा । अवतु । रथन्तरमितिरथम् तरम् । साम । त्रिवृदितित्रि वृत् । स्तोमः । वसन्तः । ऋतुः । ब्रह्म । द्रविणम् ॥१०॥

---

आवित्तऽइत्या वित्तदं । अग्निः । आवित्तऽइत्या वित्तदं । वृद्धश्रवाऽइतिवृद्ध श्रवादं । आवित्तावित्या वित्तौ । मित्रावरुणौ । धृतव्रतावितिधृत व्रतौ । आवित्तऽइत्या वित्तदं । विश्ववेदाऽइतिविश्व वेदादं । आवित्तेऽइत्या वित्ते । द्यावापृथिवीऽइतिद्यावापृथिवी । विश्वशम्भुवावितिविश्व शम्भुवौ । आवित्तेत्या वित्ता । उरुशर्म्मेत्युरु शर्म्मा ॥९॥

अवेष्टाऽइत्यव इष्टादं । गायत्री । त्रिवृदितित्रि वृत् । ब्रह्म ॥१०॥

---

मर्य्यादं । आवित्तऽइत्या वित्तदं । आवित्तऽइत्या वित्तदं । [1]वृद्धश्रवाऽइतिवृद्ध श्रवादं । आवित्तावित्या वित्तौ । [2]धृतव्व्रतावितिधृत व्व्रतौ । आवित्तऽइत्या वित्तदं । विश्ववेदाऽइतिविश्व वेदादं । आवित्तेऽइत्या वित्ते । विश्वशम्भुवावितिविश्व शम्भुवौ । आवित्तेत्या वित्ता ॥९॥

गायत्री । त्रिवृदितित्रि वृत् ॥१०॥

---

१. कपाठशैल्यनुसारमृकारपरो वकारो न गुरुर्भवति ।

२. अपपाठोऽयम् । कपाठानुसारमत्र 'धृतव्रतावितिधृत व्रतौ' इत्येवं पाठेन भाव्यम् ।

दक्षिणाम् । आ । रोह । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । त्वा । अवतु । बृहत् । साम । पञ्चदशऽइतिपञ्च दश॒ । स्तोमः । ग्रीष्मः । ऋतुः । क्षत्रम् । द्रविणम् ॥११॥

प्रतीचीम् । आ । रोह । जगती । त्वा । अवतु । वैरूपम् । साम । सप्तदशऽइतिसप्त दश॒ । स्तोमः । वर्षाः । ऋतुः । विट् । द्रविणम् ॥१२॥

उदीचीम् । आ । रोह । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । त्वा । अवतु । वैराजम् । साम । एकविंशऽइत्येक विंश॒ । स्तोमः । शरत् । ऋतुः । फलम् । द्रविणम् ॥१३॥

ऊर्द्ध्वाम् । आ । रोह । पङ्क्तिः । त्वा । अवतु । शाक्वररैवतेऽइतिशाक्वररैवते । सामनीऽइतिसामनी । त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशावितित्रिनवत्रयस्त्रिंशौ । स्तोमौ । हेमन्तशिशिरौ । ऋतूऽइत्यृतू । वर्चः । द्रविणम् ।

---

दक्षिणाम् । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । ग्रीष्मः । क्षत्रम् ॥११॥

सप्तदशऽइतिसप्त दशः ॥१२॥

अनुष्टुप् । अनुस्तुबित्यनु स्तुप् एकविंशऽइत्येक विंशः ॥१३॥

पङ्क्तिः । शाक्वररैवतेऽइतिशाक्वररैवते । त्रिनवत्रयस्त्रिंशावितित्रिनवत्रयस्त्रिंशौ । ऋतूऽइत्यृतू । प्रत्यस्तमितिप्रति अस्तम् । मृत्योः ॥१४॥

---

एकविंशऽइत्येक विंशः ॥१३॥

त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशावितित्रिनवत्रयस्त्रिंशौ ॥१४॥

विरोकऽइतिवि[1] रोके । सूर्यः ॥१५॥

---

१. कपाठशैल्यनुसारमिह 'विरोकऽइतिवि रोके' इत्येवं पाठेन भाव्यम् ।

प्रत्यस्तमितिप्रतिं अस्तम् । नमुचेः । शिरः ॥ [1]मृत्योः । पाहि । ओजः । असि । सहः । अमृतम् ॥१४॥

हिरण्यरूपावितिहिरण्य रूपौ । उषसः । विरोकऽइतिंवि रोके । उभौ । इन्द्रौ । उत् । इथः । सूर्यः । च ॥ आ । रोहतम् । वरुण । मित्र । गर्त्तम् । ततः । चक्षाथाम् । अदितिम् । दितिम् । च । मित्रः । असि । वरुणः । असि ॥१५॥

सोमस्य । त्वा । द्युम्नेन । अभि । सिञ्चामि । अग्नेः । भ्राजसा । सूर्यस्य । वर्चसा । इन्द्रस्य । इन्द्रियेण ॥ क्षत्त्राणाम् । क्षत्त्रपतिरितिंक्षत्त्र पतिः । एधि । अति । दिद्यून् । पाहि ॥१६॥

प्र । पर्वतस्य । वृषभस्य । पृष्ठात् । नावः । चरन्ति । स्वसिचऽइतिस्व सिचः । इयानाः । ताः । आ । अववृत्रन् । अधराक् । उदक्ताऽइत्युत् अक्ताः । अहिम् ।

---

हिरण्यरूपावितिहिरण्य रूपौ । मित्र । चक्षाथाम् । मित्रः ॥१५॥
द्युम्नेन । अग्नेः । क्षत्राणाम् । क्षत्रपतिरितिक्षत्र पतिः । दिद्यून् ॥१६॥
पृष्ठात् । अववृत्रन् । उदक्ताऽइत्युत् अक्ताः । बुध्न्यम् । विष्णोः ।

---

सूर्यस्य । इन्द्रियाय ॥१६॥
[2]प्र । पर्वतस्य । इयानाः । [3]अववृत्रत् । रीयमाणाः । विक्रमण-

---

१. संहितापाठानुसारमितः पञ्चदशमन्त्रस्य पदान्येतानि । अत इहारभ्यैकस्याः संख्याया भेदो ज्ञेयः ।

२. इतः पूर्वस्याः कण्डिकायाः पदपाठोऽन्यकोशेषु नोलभ्यते, पूर्वत्र (६।३६) गतार्थत्वात् । तेनेहारभ्य ककोशे द्वयोः संख्ययोः भेदो जायते ।

३. अपपाठोऽयम् । 'अववृत्रन्' इति शुद्ध. पाठो द्रष्टव्यः ।

बुध्न्यम् । अनु । रीयमाणा॑म् । विष्णो॑ः । विक्रमणमितिविविक्रमणम् । असि । विक्रान्तमितिवि क्रान्तम् । क्रान्तम् ॥१७॥

प्रजापतऽइतिप्रजा पते । न । त्वत् । एतानि । अन्यः । विश्वा । रूपाणि । परि । ता । बभूव ॥ यत्कामा-इतियत् कामाः । ते । जुहुमः । तत् । नः । अस्तु । अयम् । अमुष्य । पिता । असौ । अस्य । पिता । वयम् । स्याम । पतयः । रयीणाम् । स्वाहा ॥ रुद्र । यत् । ते । क्रिविं । परम् । नाम । तस्मिन् । हुतम् । असि । अमेष्ट-मित्यमा इष्टम् । असि । स्वाहा ॥१८॥

मित्रावरुणयोः । त्वा । प्रशास्त्रोरितिप्र शास्त्रोः । प्रशिषेतिप्र शिषा । युनज्मि ॥ अध्वयथायै । त्वा । स्वधायै ।

---

विक्रमणमितिवि क्रमणम् । विक्रान्तमितिवि क्रान्तम् ॥१७॥

प्रजापतऽइतिप्रजा पते । अन्यः । विश्वा । यत्कामाऽइतियत् कामाः । अमुष्य । तस्मिन् । अमेष्टमित्यमा इष्टम् ॥१८॥

मित्रावरुणयोः । प्रशास्त्रोरितिप्र शास्त्रोः । प्रशिषेतिप्र शिषा ।

---

मितिवि[1] क्रमणम् । विक्रान्तमितिवि[2] क्रान्तम् । [3]क्रान्तम् ॥१७॥

ययत्कामाऽइतिययत् कामाः । अयम् । वयम् । पतयः । रयीणाम् । ययत् ॥१८॥

मित्रावरुणयोः । [4]ययुनज्मि । अध्वयथायै । स्वधायै । जय ।

---

१. 'त्रि' इत्यपपाठः ककोशशैल्यनुसारमितिशब्दात् परो वकारो द्विलिख्यते । तस्मात् 'वि' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम्, कपाठशैल्यनुसारं 'वि' इत्येवं पाठेन भाव्यम् ।

३. अपपाठोऽयम्, 'क्रान्तम्' इति शुद्धः पाठोऽत्र द्रष्टव्यः ।

४. अपपाठोऽयम्, 'ययुनज्मि' इत्येवं शुद्धः पाठो ज्ञेयः ।

त्वा । अरिष्टᳪ । अर्जुनᳪ । मरुताम् । प्रसवेनेतिप्र सवेन । जय । ¹आपाम । मनसा । सम् । इन्द्रियेण ॥१९॥

मा । ते । इन्द्र । ते । वयम् । तुराषाट् । अयुक्तासᳪ । अब्रह्मता । वि । दसाम ॥ तिष्ठ । रथम् । अधि । यम् । वज्रहस्तेतिवज्र हस्त । आ । रश्मीन् । देव । यमसे । स्वश्वानितिसु अश्वान् ॥२०॥

अग्नये । गृहपतयऽइतिगृह पतये । स्वाहा । सोमाय । वनस्पतये । मरुताम् । ओजसे । इन्द्रस्य । इन्द्रियाय ॥ पृथिवि । मातᳪ । मा । मा । हिᳪसीᳪ । मोऽइतिमो । अहम् । त्वाम् ॥२१॥

हᳪसः । शुचिषत् । शुचिसदितिशुचि सत् । वसुः । अन्तरिक्षसदित्यन्तरिक्ष सत् । होता । वेदिषत् ।

---

युनज्मि । अव्यथायै । अरिष्टᳪ । प्रसवेनेतिप्र सवेन ॥१९॥

अयुक्तासᳪ । अब्रह्मता । तिष्ठ । वज्रहस्तेतिवज्र हस्त । रश्मीन् । स्वश्वानितिसु अश्वान् ॥२०॥

अग्नये । वनस्पतये ॥२१॥

अन्तरिक्षसदित्यन्तरिक्ष सत् । ऋतसदित्यृत सत् । व्योमसदिति-

---

इन्द्रियेण ॥१९॥

वयम् । अयुक्तासᳪ । यम् । वज्रहस्तेतिवज्र हस्त । यमसे ॥२०॥

अग्नये । गृहपतयऽइतिगृह पतये । सोमाय । वनस्पतये । इन्द्रियाय ॥२१॥

---

१. उव्वटमहीधरयोर्बम्बईमुद्रिते भाष्ये तत्र पठिते कात्यायनश्रौतसूत्रे च 'अपाम' इत्येवं पाठो दृश्यते । स च शतपथ (५।४।३।८) पाठविरोधात् चिन्त्यः ।

वेदिसदितिवेदि सत् । अतिथिः । दुरोणसदिति दुरोण सत् । नृषत् । नृसदितिनृ सत् । वरसदितिवर सत् । ऋतसदित्यृत सत् । व्योमसदितिव्योम सत् । अब्जाऽइत्यप् जाः । गोजाऽइतिगो जाः । ऋतजाऽइत्यृत जाः । अद्रिजाऽइत्यद्रि जाः । ऋतम् । बृहत् ॥२२॥

इयत् । असि । आयुः । असि । आयुः । मयि । धेहि । युङ् । वर्चः । ऊर्क् । ऊर्जम् ॥ इन्द्रस्य । वाम् । वीर्य्यकृतऽइतिवीर्य्य कृतः । बाहूऽइतिबाहू । अभ्युपावहरामीत्यभि उपावहरामि ॥२३॥

स्योना । असि । सुषदा । सुसदेतिसु सदा । क्षत्रस्य । योनिः ॥ स्योनाम् । आ । सीद । सुषदाम् । सुसदामितिसु सदाम् । क्षत्त्रस्य । योनिम् ॥२४॥

---

व्योम सत् । अब्जाऽइत्यप् जाः । ऋतजाऽइत्यृत[1] जाः । अद्रिजाऽइत्यद्रि जाः ॥२२॥

अभ्युपावहरामीत्यभि उपावहरामि ॥२३॥

क्षत्रस्य । क्षत्रस्य ॥२४॥

---

वेदिसदितिवेदि सत् । [2]वरसदितिवर सत् । ऋतसदित्यृत सत् । ऋतजाऽइत्यृत जाः । [3]अद्रजाऽइत्यद्रि जाः ॥२२॥

इयत् । आयुः । आयुः । मयि । युङ् । वीर्य्यकृतऽइतिवीर्य्य कृतः ॥२३॥

योनिः । योनिम् ॥२४॥

---

१. 'इत्यृत' इत्येवमपपाठो बम्बईमुद्रिते ।

२. लेखकप्रमादजोऽयमपपाठः, 'वरसदितिवर सत्' इति कपाठशैल्यनुसारं पाठोऽत्रापेक्षते ।

३. अपपाठोऽयम्, 'अद्रिजा०' इति शुद्धः पाठो ज्ञेयः ।

नि । ससाद । धृतव्रत ऽइतिधृत व्रतः । वरुणः । पस्त्यासु । आ ॥ साम्म्राज्ज्यायेतिसाम् राज्ज्याय । सुक्क्रतुरितिसु क्रतुः ॥२५॥

अभिभूरित्त्यभि भूः । असि । एताः । ते । पञ्च । दिशः । कल्प्पन्ताम् । ब्रह्मन् । त्वम् । ब्रह्मा । असि । सविता । सत्त्यप्प्रसवऽइतिसत्यप्रसवः । वरुणः । सत्त्यौजाइतिसत्त्य ओजाः । इन्द्रः । विशौजाः । रुद्रः । सुशेवऽइतिसु शेवः ॥ बहुकारेतिबहु कार । श्रेयस्कर । श्रेयः करेतिश्रेयः कर । भूयस्कर । भूयः करेतिभूयः कर । तेन । मे । रद्ध्य ॥२६॥

अग्निः । पृथुः । धर्म्मणः । पतिः । जुषाणः । अग्निः । पृथुः । धर्म्मणः । पतिः । आज्ज्यस्य । व्वेतु । स्वाहा । स्वाहाकृताऽइतिस्वाहा कृताः । सूर्य्यस्य । रश्मिभि-

---

धृतव्रतऽइतिधृत व्व्रतः । साम्राज्यायेतिसाम् राज्याय । सुक्रतुरितिसु क्रतुः ॥२५॥

अभिभूरित्यभि भूः । कल्पन्ताम् । ब्रह्मन् । ब्रह्मा । सत्यप्रसवऽइति-सत्य प्रसवः । सत्यौजाऽइतिसत्य ओजाः । रुद्रः । श्रेयस्कर । श्रेयः करेति-श्रेयः कर । भूयस्कर । रध्य ॥२६॥

अग्निः । अग्निः । आज्जस्य । रश्मिभिरितिरश्मि भिः । ध्यतध्वम् ।

---

धृतव्व्रतऽइतिधृत [1]व्व्रतः । साम्राज्यायेतिसाम् राज्याय ॥२५॥

श्रेयंस्कर । श्रेयं करेतिश्रेयं कर । भूयंस्कर । भूयं करेति भूयं कर ॥२६॥

सूर्यस्य । ध्यतध्वम् । मध्यमेष्ठ्याय । मध्यमेस्थ्यायेति-

---

१. कपाठशैल्यनुसारं 'व्रतः' इति शुद्धः पाठो ज्ञेयः ।

रि॒ति॒र॒श्मि भिः॑ । य॒तद्धुम् । स॒जा॒ता॒ना॒मिति॑स जा॒ताना॑म् । म॒द्‌ध्य॒मे॒ष्ठ्या॑य । म॒द्‌ध्य॒मे॒स्त्थ्या॒ये॒ति॑म॒द्‌ध्य॒मे स्थ्या॑य ॥२७॥

स॒वि॒त्रा । प्र॒स॒वि॒त्रेति॑प्र ¹स॒वि॒त्रा । सर॑स्वत्त्या । वा॒चा । त्वष्ट्ट्रा॑ । रू॒पैः । पू॒ष्ण्णा । प॒शु॒भि॒रिति॑प॒शु भिः॑ । इन्द्रे॑ण । अ॒स्म्मेऽइत्त्य॒स्म्मे । बृ॒ह॒स्प्पति॑ना । ब्रह्म॑णा । वरु॑णेन । ओज॑सा । अ॒ग्निना॑ । तेज॑सा । सोमे॑न । राज्ज्ञा॑ । विष्ण्णु॑ना । द॒शम्म्या । दे॒वत॑या । प्र॒सू॑त॒ऽइति॒प्र सू॑तᳫं । प्र । स॒र्प्पा॒मि ॥२८॥

अ॒श्विभ्या॒मित्त्य॒श्वि भ्या॑म् । प॒च्य॒स्व । सर॑स्वत्त्यै । इन्द्रा॑य । सु॒त्त्राम्म॒णऽइति॑सु त्राम्म्णे॑ ॥ वा॒युः । पू॒तः । प॒वित्त्रे॑ण । प्र॒त्त्यङ् । सोमः॑ । अति॑स्रुत॒ऽइत्त्यति॑ स्रुतᳫं ॥ इन्द्र॑स्य । यु॒ज्ज्यः॑ । सखा॑ ॥२९॥

कु॒वित् । अ॒ङ्ग । य॒व॑मन्त॒ऽइति॒यव॑ मन्तᳫं । यव॑म् । चि॒त् । यथा॑ । दान्ति॑ । अ॒नु॒पू॒र्व्व॒मित्त्य॑नु पू॒र्व्वम् । वि॒यू॒येति॑वि

---

म॒ध्य॒मेष्ठ्या॑य । म॒ध्य॒मे॒स्थ्या॒ये॒ति॑म॒ध्य॒मे स्थ्या॑य ॥२७॥

स॒वि॒त्रा । प्र॒स॒वि॒त्रेति॑प्र स॒वि॒त्रा । सर॑स्वत्या । त्वष्ट्रा॑ । पू॒ष्णा । अ॒स्मे॒ऽइत्य॒स्मे । बृ॒ह॒स्पति॑ना । ब्रह्म॑णा । अ॒ग्निना॑ । राज्ञा॑ । विष्णु॑ना । द॒शम्या । प्र॒सू॑त॒ऽइति॒प्र सू॑तᳫं ॥२८॥

अ॒श्विभ्या॒मित्य॒श्वि भ्या॑म् । प॒च्य॒स्व । सर॑स्वत्यै । सु॒त्राम्ण॒ऽइति॑सु त्राम्णे॑ । प॒वित्रे॑ण । प्र॒त्यङ् । अति॑स्रुत॒ऽइत्यति॑ स्रुतᳫं । यु॒ज्यः॑ ॥२९॥

---

म॒ध्य॒मे स्थ्या॑य ॥२७॥

दे॒वत॑य्या ॥२८॥

इन्द्रा॑य । वा॒युः । य्यु॒ज्ज्यः॑ ॥२९॥

य्यव॑मन्त॒ऽइति॒य्यव॑ मन्तᳫं । य्यव॑म् । य्यथा॑ । वि॒यू॒य्येति॑वि ²य्यू॒ । य्य ।

---

१. 'स॒वि॒त्त्रा' इति काशिकः पाठः ।

२. अपपाठोऽयम्,अस्थानेऽवग्रहात् यकारस्य द्वित्वाच्च । ककोशशैल्यनुसारं 'वि॒यू॒य्येति॑वि यू॒य्य' इत्येवं पाठेन भाव्यम् ।

सूर्य ॥ इहेहेतीह इह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमऽउक्तिमितिनमः उक्तिम् । यजन्ति । अश्विभ्यामित्यश्वि भ्याम् । त्वा । सरस्वत्यै । इन्द्राय । सुत्राम्णऽइतिसु त्राम्णे ॥३०॥

युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ॥ विपिपानेतिवि [1]पिपाना । शुभः । पतीऽइतिपती । इन्द्रम् । कर्म्मस्वितिकर्म्म सु । आवतम् ॥३१॥

पुत्रमिवेतिपुत्रम् इव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ॥ यत् । सुरामम् । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघवन्नितिमघ वन् । अभिष्णक् ॥३२॥

॥ इति वाजसनेयिसंहितापदे दशमोऽध्यायः ॥

---

अनुपूर्वमित्यनु पूर्वम् । नमऽउक्तिमितिनमः उक्तिम् । अश्विभ्यामित्यश्वि भ्याम् । सरस्वत्यै । सुत्राम्णऽइतिसु त्राम्णे ॥३०॥

अश्विना ॥३१॥

पुत्रमिवेतिपुत्रम् इव । अश्विना । काव्यैः अभिष्णक् ॥३२॥

---

ये । यजन्ति । इन्द्राय ॥३०॥

युवम् । [2]विपिपानेतिवि पिपाना । [3]शुभस्य ॥३१॥

यत् । मघवन्नितिमघ वन् ॥३२॥

॥ इति श्री वाजसनेयिसंहितापदे दशमोऽध्यायः ॥



---

१. 'पिपाना' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'विपिपानेतिवि पिपाना' इति शुद्धः पाठः ककोशशैल्यनुसारं ज्ञेयः ।

३. पदमिदं न मन्त्रे दृश्यते, न चान्येषु कोशेषु ।

# एकादशोऽध्यायः

युञ्जानः । प्रथमम् । मनः । तत्त्वाय । सविता । धियः ॥ अग्नेः । ज्योतिः । निचाय्येतिनि चाय्य । पृथिव्याः । अधि । आ । अभरत् ॥१॥

युक्तेन । मनसा । वयम् । देवस्य । सवितुः । सवे ॥ स्वर्ग्यायेतिस्वः ग्याय । शक्त्या ॥२॥

¹युक्त्वाय । सविता । देवान् । स्वः । यतः । धिया । दिवम् ॥ बृहत् । ज्योतिः । करिष्यतः । सविता । प्र । सुवाति । तान् ॥३॥

युजे । वाम् । ब्रह्म । पूर्व्यम् । नमोभिरितिनमः

---

तत्वाय । अग्ने? । पृथिव्या? ॥१॥

युक्तेन । शत्त्या ॥२॥

¹युत्त्वाय । करिष्युत? ॥३॥

---

य्युञ्जान? । तत्वाय्य । धिय्य ॥१॥

व्युक्तेन । व्रय्यम् । स्वर्ग्याय्येतिस्वः ग्याय्य ॥२॥

¹य्युक्ताय्य । य्यत? । धिय्या ॥३॥

²य्युजे । पूर्व्यम् । य्ये ॥४॥

---

१. वेङ्क० निर्णय० आदिषु बहुषु मुद्रितेषु संहिताग्रन्थेषु पदग्रन्थेषु हस्तलिखितेषु च 'युक्ताय' इत्येवं पाठः । शतपथे भाष्यग्रन्थेषु च 'युक्त्वाय' पाठः ।

२. इतः पूर्वं च वर्तमानस्य 'युञ्जते मनः' इत्यस्य पदपाठः पूर्वं

भिर्दं । द्वि । श्लोकः । एतु । पत्थ्येवेतिपत्थ्या इव । सूरेः ॥ शृण्वन्तु । विश्वे । अमृतस्य । पुत्राः । आ । ये । धामानि । दिव्यानि । तस्थुः ॥४॥

यस्य । प्रयाणम् । प्रयानमितिप्र यानम् । अनु । अन्ये । इत् । ययुः । देवाः । देवस्य । महिमानम् । ओजसा ॥ यः । पार्थिवानि । विमम इतिवि ममे । सः । एतशः । रजांसि । देवः । सविता । महित्वनेतिमहि त्वना ॥ वाचः । पार्त । वाचम् । नः । स्वदतु ॥५॥

इमम् । नः । देव । सवितः । यज्ञम् । प्र । नय । देवाव्युमितिदेव अव्यम् । सखिविदमितिसखि विदम् । सत्राजितमितिसत्रा जितम् । धनजितमितिधन जितम् । स्वर्जितमितिस्वः जितम् ॥ ऋचा । स्तोमम् । सम् । अर्द्धय । गाय-

---

ब्रह्म । पथ्येवेतिपथ्या इव । शृण्वन्तु । विश्वे । पुत्राः । दिव्यानि । तस्थुः ॥४॥

प्रयानमितिप्र यानम् । अन्ये । पार्थिवानि । महित्वनेतिमहि त्वना ॥५॥

यज्ञम् । देवाव्युमितिदेव अव्यम् । सत्राजितमितिसत्रा जितम् गाय-

---

य्यस्य । प्रयाणम् । प्रयानमितिप्र य्यानम् । य्ययुः । य्यः । विमम इतिवि ममे । महित्वनेतिमहि त्वना । [1]वाचः ॥५॥

य्यज्ञम् । नय । अर्द्धय । गायत्रेण । सखिविदमितिसखि विदम् ।

---

गतत्वान्नेह पदग्रन्थेषु पठ्यते । तेनैकस्याः संख्याया भेदो जायते ककोशे ।

१. उत्तरस्य 'देव सवितः' मन्त्रस्य बहूनां पदानां पूर्वं गतत्वान्नेह पदपाठे पठ्यन्ते, अवशिष्टानि च पञ्च पदानि पञ्चमकण्डिकायां संगृह्यन्ते । अत इत आरभ्य द्वयोः कण्डिकासंख्ययोर्भेदः ककोशे द्रष्टव्यः । इह तु सौकर्यार्थं ककोशीयपाठेऽपि पदपाठानुसारी संख्या प्रदत्ता ।

त्रेण । रथन्तरमिति रथम् तरम् । बृहत् । गायत्रवर्त्तनीति-गायत्र वर्त्तनि । स्वाहा ॥६॥

आ । ददे । गायत्रेण । छन्दसा । अङ्गिरस्वत् । पृथिव्याः । सधस्थादिति सध स्थात् । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । आ । भर । त्रैष्टुभेन । त्रैस्तुभेनेति त्रैस्तुभेन ॥७॥

अभ्रिः । असि । नारी । असि । त्वया । वयम् । अग्निम् । शकेम । खनितुम् । सधस्थऽइति सध स्थे । आ ॥ जागतेन ॥८॥

हस्ते । आधायेत्या धाय । सविता । बिभ्रत् । अभ्रिम् । हिरण्ययीम् । आनुष्टुभेन । आनुस्तुभेनेत्यानु स्तुभेन ॥९॥

---

त्रेण । गायत्रवर्त्तनीति गायत्र वर्तनि ॥६॥

गायत्रेण । पृथिव्याः । सधस्थादिति सध स्थात् । अग्निम् । पुरीष्यम् । त्रैष्टुभेन । त्रैस्तुभेनेति त्रै स्तुभेन ॥७॥

अभ्रिः । अग्निम् । सधस्थऽइति सध स्थे ॥८॥

आधायेत्या धाय । बिभ्रत् । अभ्रिम् । हिरण्ययीम् । आनुष्टुभेन । आनुस्तुभेनेत्यानु स्तुभेन ॥९॥

---

गायत्रवर्तनीति गायत्र वर्तनि ॥६॥

गायत्रेण ॥७॥

त्वया । वयम् ॥८॥

आधायेत्या धाय । हिरण्ययीम् ॥९॥

प्रतूर्त्तमितिप्र तूर्त्तम् । व्वाजिन् । आ । द्रव । व्वरिष्ठाम् । अनु । सँव्वतमितिसम् व्वतम् ॥ दिवि । ते । जन्म । परमम् । अन्तरिक्क्षे । तव । नाभिः । पृथिव्याम् । अधि । योनिः । इत् ॥१०॥

युञ्जाथाम् । रासभम् । युवम् । अस्म्मिन् । यामे । व्वृषण्ण्वसूऽइतिव्वृषण् व्वसू ॥ अग्निम् । भरन्तम् । अस्म्मयु-मित्त्यस्म्म युम् ॥११॥

योगेयोगऽइतियोगे योगे । तवस्तरमितितवः तरम् । व्वाजेव्वाजऽइतिव्वाजे व्वाजे । हवामहे ॥ सखायः । इन्द्रम् । ऊतये ॥१२॥

---

प्रतूर्त्तमितिप्र तूर्त्तम् । व्वरिष्ठाम् । जन्म । अन्तरिक्षे । पृथिव्याम् ॥१०॥

अस्मिन् । व्वृषण्वसूऽइतिव्वृषण् व्वसू । अग्निम् । अस्मयुमित्यस्म युम् ॥११॥

---

[1]संव्वतमितिसम् व्वतम् । य्योनिः ॥१०॥

य्युञ्जाथाम् । य्युवम् । य्यामे । व्वृषण्वसूऽइतिव्वृषण् [2]व्वसू । अस्मयुमित्यस्म [3]य्युम् ॥११॥

य्योगेय्योगऽइतियोगे[4] य्योगे । व्वाजेव्वाजऽइतिव्वाजे [2]व्वाजे । सखायः । ऊतये ॥१२॥

---

१. अपपाठोऽयम्, 'सँव्वतमितिसम् व्वतम्' इति शुद्धेन पाठेन भाव्यम् ।

२. कपाठशैल्यनुसारमिह एकवकार इष्यते ।

३. कपाठशैल्यनुसारमिह 'युम्' इति शुद्धः पाठो ज्ञेयः ।

४. कपाठशैल्यनुसारमिह '०य्योगे य्योगे' इति शुद्धः पाठो ज्ञेयः ।

प्रतूर्व्वन्नितिप्र तूर्व्वन् । आ । इहि । अवक्रामन्नित्त्यव क्रामन् । अशस्तीः । रुद्रस्य । गाणपत्त्यमितिगाण पत्त्यम् । मयोभूरितिमयः भूः । आ । इहि ॥ उरु । अन्तरिक्क्षम् । वि । इहि । स्वस्तिगव्यूतिरितिस्वस्ति गव्यूतिः । अभयानि । कृण्ण्वन् । पूष्ण्णा । सयुजेतिस युजा । सह ॥ अच्छ । इमं । भरिष्ष्यामः ॥१३॥

अनु । अग्निः । उषसाम् । अग्ग्रम् । अक्ख्यत् । अनु । अहानि । प्रथमः । जातवेदाऽइतिजात वेदाः ॥ अनु । सूर्य्यस्य । पुरुत्रेतिपुरु त्रा । च । रश्श्मीन् । अनु । द्यावापृथिवी-ऽइतिद्यावापृथिवी । आ । ततन्थ ॥१४॥

आगत्त्येत्त्या गत्त्य । वाजी । अद्ध्वानम् । सर्व्वाः ।

---

प्रतूर्व्वन्नितिप्र तूर्व्वन् । अवक्रामन्नित्यव क्रामन् । रुद्रस्य । गाणपत्य-मितिगाण पत्यम् । अन्तरिक्षम् । स्वस्तिगव्यूतिरितिस्वस्ति गव्यूतिः । कृण्वन् । पूष्णा । अछ । भरिष्यामः ॥१३॥

अग्निः । अग्रम् । अख्यत् । पुरुत्रेतिपुरु त्रा । रश्मीन् । द्यावापृथिवी-ऽइतिद्यावापृथिवी ॥१४॥

आगत्येत्या गत्य । अध्वानम् । अग्निम् । सधस्थऽइतिसध स्थे ।

---

मय्योभूरितिमय्यः भूः । अभय्यानि । सयुजेतिस [1]य्युजा । [2]अच्छ ॥१३॥

जातवेदाऽइतिजात वेदाः । सूर्य्यस्य ॥१४॥

---

१. कपाठशैल्यनुसारमिह 'युजा' इति शुद्धः पाठो द्रष्टव्यः ।

२. इत आरभ्य उत्तरमन्त्रस्य त्रीण्येव पदानि पूर्वमगतानि पदपाठे त्रयोदशकण्डिकाया एवान्ते पठचन्ते । अत इत आरभ्य ककोशे तिसृणां कण्डिका-संख्यानां भेदो जायते ।

मूर्धः । वि । धूनुते ॥ अग्निम् । सधस्त्थऽइतिसध स्थे । महति । चक्क्षुषा । नि । चिकीषते ॥१५॥

आक्रम्म्येत्त्या क्रम्म्य । वाजिन् । पृथिवीम् । अग्निम् । इच्छ । रुचा । त्वम् ॥ भूम्म्याः । वृत्त्वाय । नः । ब्रूहि । यतः । खनेम । तम् । वयम् ॥१६॥

द्यौः । ते । पृष्ट्ठम् । पृथिवी । सधस्त्थमितिसध स्थम् । आत्मा । अन्तरिक्क्षम् । समुद्रः । योनिः ॥ विक्ख्यायेतिवि ख्याय । चक्क्षुषा । त्वम् । अभि । तिष्ट्ठ । पृतन्न्यतः ॥१७॥

उत् । क्राम । महते । सौभगाय । अस्म्मात् । आस्त्थानादित्त्या स्थानात् । द्रविणोदाऽइतिद्रविणः दाः । वाजिन् ॥ वयम् । स्याम । सुमताविति सु मतौ । पृथिव्व्याः । अग्निम् । खनन्तः । उपस्त्थेऽइत्त्युप स्थे । अस्याः ॥१८॥

---

चक्षुषा ॥१५॥

आक्रम्येत्या क्रम्य । अग्निम् । इच्छ । भूम्याः । वृत्वाय ॥१६॥

पृष्ठम् । सधस्थमितिसध स्थम् । आत्मा । अन्तरिक्षम् । समुद्रः । विख्यायेतिवि ख्याय । चक्षुषा । तिष्ठ । पृतन्यतः ॥१७॥

अस्मात् । आस्थानादित्या स्थानात् । द्रविणोदाऽइतिद्रविणः दाः । पृथिव्याः । अग्निम् । उपस्थऽइत्युप स्थे ॥१८॥

---

वृत्वाय्यँ । य्यतः । वय्यम् ॥१६॥

य्योनिः । विख्याय्येतिवि ख्याय्यँ ॥१७॥

सौभगाय्य । वय्यम् ॥१८॥

उत् । अक्क्रमीत् । द्रविणोदाऽइतिंद्रविणः दाः । वाजी । अर्वा । अकरित्यकः । सु । लोकम् । सुकृतमितिसु कृतम् । पृथिव्याम् । ततः । खनेम । सुप्रतीकमितिंसु प्रतीकम् । अग्निम् । स्वरितिस्वः । रुहाणाः । अधि । नाकम् । उत्तममित्युत् तमम् ॥१९॥

आ । त्वा । जिघर्म्मि । मनसा । घृतेन । प्रतिक्क्षियन्तमितिंप्रति क्षियन्तम् । भुवनानि । विश्श्वा ॥ पृथुम् । तिरश्श्चा । वयसा । बृहन्तम् । व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥२०॥

आ । विश्श्वतः । प्रत्त्यञ्चम् । जिघर्म्मि । अरक्क्षसा । मनसा । तत् । जुषेत ॥ मर्य्यश्रीरितिमर्य्य श्रीः । स्पृहयद्वर्णऽइतिस्पृहयत् वर्णः । अग्निः । न । अभिमृशऽइत्त्यभि मृशे । तन्वा । जर्भुराणः ॥२१॥

---

अक्रमीत् । द्रविणोदाऽइतिंद्रविणः दाः । अकरित्यकः । पृथिव्याम् सुप्रतीकमितिंसु प्रतीकम् । अग्निम् । उत्तममित्युत् तमम् ॥१९॥

प्रतिक्षियन्तमितिंप्रति क्षियन्तम् । विश्वा । तिरश्चा । व्यचिष्ठम् ॥२०॥

विश्वतः । प्रत्यञ्चम् । अरक्षसा । मर्यश्रीरितिमर्य श्रीः । स्पृहयद्वर्णऽइतिस्पृहयत् वर्णः । अग्निः । अभिमृशऽइत्यभि मृशे । तन्वा । जर्भुराणः ॥२१॥

---

प्रतिक्षियन्तमितिंप्रति क्षियन्तम् । वयसा ॥२०॥

मर्यश्रीरितिमर्य श्रीः । स्पृहयद्वर्णऽइतिस्पृहयत् वर्णः ॥२१॥

परि॑ । वाज॑पति॒रिति॒वाज॑ पति॑ᳪ । क॒विः । अ॒ग्निः । ह॒व्यानि॑ । अ॒क्र॒मी॒त् ॥ दध॑त् । रत्ना॑नि । दा॒शुषे॑ ॥२२॥

परि॑ । त्वा॒ । अ॒ग्ने॒ । पुर॑म् । व॒यम् । विप्र॑म् । स॒ह॒स्य॒ । धी॒म॒हि॒ ॥ धृ॒षद्व॑र्ण॒मि॒ति॑धृ॒षत् व॑र्ण॑म् । दि॒वेदि॑व॒ऽइ॒ति॑दि॒वे दि॑वे । ह॒न्तार॑म् । भ॒ङ्गु॒राव॑ताम् । भ॒ङ्गु॒रव॑ता॒मिति॑भ॒ङ्गु॒र व॑ताम् ॥२३॥

त्वम् । अ॒ग्ने॒ । द्यु॒भि॒रिति॒द्यु भिः॑ । आ॒शु॒शु॒क्षणिः॑ । अ॒द्भ्यऽइ॒त्य॒त् भ्यः । अश्म॑नᳪ । परि॑ ॥ वने॑भ्यᳪ । ओष॑धीभ्यᳪ । नृ॒णाम् । नृ॒प॒त॒ऽइति॑नृ पते । जा॒य॒से॒ । शुचिः॑ ॥२४॥

---

अ॒ग्निः । ह॒व्यानि॑ । अ॒क्र॒मी॒त् । रत्ना॑नि ॥२२॥

अ॒ग्ने॒ । विप्र॑म् । धृ॒षद्व॑र्ण॒मि॒ति॑धृ॒षत् व॑र्ण॑म् ॥२३॥

अ॒ग्ने॒ । द्यु॒भि॒रिति॒द्यु भिः॑ । आ॒शु॒शु॒क्षणिः॑ । अ॒द्भ्यऽइ॒त्य॒त् भ्यः । अश्म॑नᳪ । वने॑भ्यᳪ । ओष॑धीभ्यᳪ ॥२४॥

---

[1]वाज॑पति॒रिति॒वाज॑ पति॑ᳪ ॥२२॥

व॒यम् । धृ॒षद्व॑र्ण॒मि॒ति॑दृ॒षत्[2] व॑र्ण॑म् । भ॒ङ्गु॒रव॑ता॒मिति॑भ॒ङ्गु॒र व॑ताम् ॥२३॥

जा॒य॒से॒ ॥२४॥

---

१. अपपाठोऽयम्, 'वाज॑पति॒रिति॒वाज॑ पति॑ᳪ' इति कपाठशैल्यनुसारं शुद्धः पाठो ज्ञेयः ।

२. '०दृषत्' इत्यपपाठो लेखकप्रमादजः ।

अङ्गिरस्वत् । खनामि ॥ ज्योतिष्मन्तम् । त्वा । अग्ने । सुप्रतीकमितिसु प्रतीकम् । अजस्रेण । भानुना । दीद्यतम् ॥ शिवम् । प्रजाभ्यऽइतिप्र जाभ्यः । अहिंसन्तम् । खनामि ॥२५॥

अपाम् । पृष्ठम् । असि । योनिः । अग्नेः । समुद्रम् । अभितः । पिन्वमानम् ॥ वर्द्धमानः । महान् । आ । च । पुष्करे । दिवः । मात्रया । वरिम्णा । प्रथस्व ॥२६॥

शर्म्म । च । स्थः । वर्म्म । च । स्थः । अच्छिद्रेऽइत्यच्छिद्रे । बहुलेऽइतिबहुले । उभेऽइत्युभे ॥ व्यचस्वतीऽइतिव्यचस्वती । सम् । वसाथाम् । भृतम् । अग्निम् । पुरीष्यम् ॥२७॥

सम् । वसाथाम् । स्वर्विदेतिस्वः विदा । समीचीऽइतिसमीची । उरसा । त्मना । अग्निम् । अन्तः ।

---

ज्योतिष्मन्तम् । अग्ने । सुप्रतीकमितिसु प्रतीकम् । दीद्यतम् । प्रजाभ्यऽइतिप्र जाभ्यः ॥२५॥

पृष्ठम् । अग्ने? । समुद्रम् । पिन्वमानम् । पुष्करे । मात्रया । वरिम्णा ॥२६

अच्छिद्रेऽइत्यच्छिद्रे । उभेऽइत्युभे । व्यचस्वतीऽइतिव्यचस्वती । अग्निम् । पुरीष्यम् ॥२७॥

---

योनिः । मात्रया ॥२६॥

[1]स्वर्विदेतिस्वः विदा ॥२८॥

---

१. अपपाठोऽयम्, 'स्वर्विदेतिस्वः विदा' इति कपाठशैल्यनुसारं शुद्धेन पाठेन भाव्यम् ।

भरिष्यन्तीऽइतिभरिष्यन्ती । ज्योतिष्मन्तम् । अजस्रम् । इत् ॥२८॥

पुरीष्यः । असि । विश्वभराऽइतिविश्व भराः । अथर्वा । त्वा । प्रथमः । निः । अमन्थत् । अग्ने ॥ त्वाम् । अग्ने । पुष्करात् । अधि । अथर्वा । निः । अमन्थत ॥ मूर्ध्नः । विश्वस्य । वाघतः ॥२९॥

तम् । ऊँऽइत्यूँ । त्वा । दध्यङ् । ऋषिः । पुत्रः । ईधे । अथर्वणः ॥ वृत्रहणम् । वृत्रहनमितिवृत्र हनम् । पुरन्दरमितिपुरम् दरम् ॥३०॥

तम् । ऊँऽइत्यूँ । त्वा । पाथ्यः । वृषा । सम् । ईधे । दस्युहन्तममितिदस्युहन् तमम् ॥ धनञ्जयमितिधनम् जयम् । रणेरणऽइतिरणे रणे ॥३१॥

---

अग्निम् । भरिष्यन्तीऽइतिभरिष्यन्ती । ज्योतिष्मन्तम् ॥२८॥

पुरीष्यः । विश्वभराऽइतिविश्व भराः । अग्ने । अग्ने । पुष्करात् । विश्वस्य ॥२९॥

ऊँऽइत्यूँ । दध्यङ् । पुत्रः । वृत्रहणम् । वृत्रहनमितिवृत्र हनम् ॥३०॥

ऊँऽइत्यूँ । पाथ्यः ॥३१॥

---

विश्वभराऽइतिविश्व भराः ॥२९॥

[1]उंऽइत्युंम् ॥३०॥

[1]उंऽइत्युंम् । धनञ्जयमितिधनम् जयम् ॥३१॥

---

१. अपपाठोऽयम्, 'ऊँऽइत्यूँ' इति पाठेन भवितव्यम् ।

सीद । होतरितिहोतः । स्वे । ऊँऽइत्यूँ । लोके । चिकित्त्वान् । सादय । यज्ञम् । सुकृतस्येतिसु कृतस्य । योनौ ॥ देवावीरितिदेव अवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥३२॥

नि । होता । होतृषदने । होतृसदनऽइतिहोतृ सदने । विदानः । त्वेषः । दीदिवानितिदीदि वान् । असदत् । सुदक्क्षऽइतिसु दक्क्षः ॥ अदब्धव्व्रतप्रमतिरित्यदब्धव्व्रत प्रमतिः । वसिष्ठः । सहस्रम्भरऽइतिसहस्रम् भरः । शुचिजिह्वऽइतिशुचि जिह्वः । अग्निः ॥३३॥

सम् । सीदस्व । महान् । असि । शोचस्व । देववीतमऽइतिदेव वीतमः ॥ वि । धूमम् । अग्ने । अरुषम् । मियेद्ध्य । सृज । प्रशस्तेतिप्र शस्त । दर्शतम् ॥३४॥

---

ऊँऽइत्यूँ । चिकित्वान् । यज्ञम् । अग्ने ॥३२॥

सुदक्षऽइतिसु दक्षः । अदब्धव्रतप्रमतिरित्यदब्धव्रत प्रमतिः । वसिष्ठः । शुचिजिह्वऽइतिशुचि जिह्वः । अग्निः ॥३३॥

अग्ने । मियेध्य । प्रशस्तेतिप्र शस्त ॥३४॥

---

[1]उँऽइत्युम् । सादय । य्यज्ञम् । य्योनौ । [2]देवाव्वीरितिदेव अवीः । य्यजासि । य्यजमाने । वयः ॥३२॥

दीदिवानितिदीदि वान् । अदब्धव्व्रतप्रमतिरित्यदब्धव्व्रत[3] प्रमतिः ॥३३

देववीतमऽइतिदेव वीतमः । मियेध्य ॥३४॥

---

१. अपपाठोऽयम्, द्र० पूर्वमन्त्रस्था टि० ।

२. द्विवकारात्मको '०व्वी०' इत्यपपाठः ।

३. लेखकप्रमादजोऽत्राऽपपाठोऽयं द्विवकारात्मकः ।

अप॑ऽ । दे॒वीः॑ । उप॑ । सृ॒ज॒ । मधु॑मती॒रिति॒मधु॑ मतीः॑ । अ॒य॒क्ष्माय॑ । प्र॒जाभ्य॒ऽइति॑प्र जाभ्यः॑ ॥ तासा॑म् । आ॒स्था॒ना॒दित्या॑ स्थाना॑त् । उत् । जि॒ह॒ता॒म् । ओष॑धयः॑ । सु॒पि॒प्प॒ला॒ऽइति॑सु [1]पि॒प्प॒लाः॑ ॥३५॥

सम् । ते॒ । वा॒युः॑ । मा॒त॒रिश्वा॑ । द॒धा॒तु॒ । उ॒त्ता॒नायाः॑ । हृद॑यम् । यत् । विक॑स्त॒मिति॒वि क॑स्तम् ॥ यः॑ । दे॒वाना॑म् । चर॑सि । प्रा॒णथे॑न । कस्मै॑ । दे॒व॒ । वष॑ट् । अ॒स्तु॒ । तुभ्य॑म् ॥३६॥

सु॒जा॒त॒ऽइति॑सु जा॑तः॑ । ज्योति॑षा । स॒ह । शर्म॑ । व॒रू॑थम् । आ । अ॒स॒द॒त् । स्व॒रिति॒स्वः॑ ॥ वासः॑ । अ॒ग्ने॒ । वि॒श्वरू॑प॒मिति॑वि॒श्व रू॑पम् । सम् । व्य॒य॒स्व॒ । वि॒भा॒व॒सो॒ऽइति॑विभा वसो ॥३७॥

---

अ॒य॒क्ष्माय॑ । प्र॒जाभ्य॒ऽइति॑प्र जाभ्यः॑ । आ॒स्था॒ना॒दित्या॑ स्थाना॑त् ॥३५

मा॒त॒रिश्वा॑ ॥३६॥

अ॒ग्ने॒ । वि॒श्वरू॑प॒मिति॑वि॒श्व रू॑पम् ॥३७॥

---

अ॒य॒क्ष्माय॑ । ओष॑धयः॑ ॥३५॥

वा॒युः॑ । उ॒त्ता॒नायाः॑ । हृद॑यम् । यत् । [2]विक॑स्त॒मिति॒वि क॑स्तम् । यः॑ ॥३६॥

वि॒श्वरू॑प॒मिति॑वि॒श्व रूपम् । व्य॒य॒स्व॒ । वि॒भा॒व॒सो॒ऽइति॑विभा वसो ॥३७

---

१. 'पिप्पलाः' इति काशिकः पाठः ।

२. अपपाठोऽयम्, कपाठशैल्यनुसारमिह 'विक॑स्त॒मिति॒वि क॑स्तम्' इति पाठेन भाव्यम् ।

उत् । ऊँऽइत्यूँ । तिष्ट्ठ । स्वद्धरेतिसु अद्धर । अवं । नः । देव्या । धिया ॥ दृशे । च । भासा । बृहता । सुशुक्क्वनिरितिसु शुक्क्वनिः । आ । अग्ने । याहि । सुशस्तिभिरितिसुशस्ति भिः ॥३८॥

ऊर्द्ध्वः । ऊँऽइत्यूँ । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ॥ ऊर्द्ध्वः । वाजस्य । सनिता । यत् । अञ्जिभिरित्यञ्जि भिः । वाघद्भिरितिवाघत् भिः । विह्वयामहऽइतिवि ह्वयामहे ॥३९॥

सः । जातः । गर्भः । असि । रोदस्योः । अग्ने । चारुः । विभृतऽइतिवि भृतः । ओषधीषु ॥ चित्त्रः ।

---

ऊँऽइत्यूँ । तिष्ठ । स्वध्वरेतिसु अध्वर । देव्या । सुशुक्वनिरितिसु शुक्वनिः । अग्ने ॥३८॥

ऊँऽइत्यूँ । तिष्ठ । विह्वयामहऽइतिवि ह्वयामहे ॥३९॥

गर्भः । अग्ने । चित्रः । अक्तून् । मातृभ्यऽइतिमातृ भ्यः ।

---

[1]उंऽइत्युम् । धिया । याहि ॥३८॥

[1]उंऽइत्युम् । ऊतये । यत् । वाघद्भिरितिवाघत् भिः । विह्वयामहऽइतिवि[2] ह्वयामहे ॥३९॥

विभृतऽइतिवि[3] भृतः ॥४०॥

---

१. अपपाठोऽयम् । द्र० १६४ पृष्ठस्था टि० १ ।

२. कपाठशैल्यनुसारमिह 'व्वि' इत्येवं द्विवकारपाठेन भाव्यम् ।

३. कपाठशैल्यनुसारमिह 'व्वि' इति द्विवकारपाठेन भाव्यम् ।

शिशुः । परि । तमाᳬसि । अक्तून् । प्र । मातृभ्य-ऽइतिमातृ भ्यः । अधि । कनिक्रदत् । गाः ॥४०॥

स्थिरः । भव । वीड्वङ्गऽइतिवीडु अङ्गः । आशुः । भव । वाजी । अर्वन् ॥ पृथुः । भव । सुषदः । सुसद-ऽइतिसु सदः ।त्वम् । अग्नेः । पुरीषवाहणः । पुरीष-वाहनऽइतिपुरीष वाहनः ॥४१॥

शिवः । भव । प्रजाभ्यऽइतिप्र जाभ्यः । मानुषी-भ्यः । त्वम् । अङ्गिरः ॥ मा । द्यावापृथिवीऽइतिद्यावा-पृथिवी । अभि । शोचीः । मा । अन्तरिक्षम् । मा । वनस्पतीन् ॥४२॥

प्र । एतु । वाजी । कनिक्रदत् । नानदत् । रासभः । पत्वा ॥ भरन् । अग्निम् । पुरीष्यम् । मा । पादि । आयुषः । पुरा ॥ वृषा । अग्निम् । वृषणम् । भरन् । अपाम् । गर्भम् । समुद्रियम् ॥ अग्ने । आ । याहि । वीतये ॥४३॥

---

कनिक्रदत् ॥४०॥

अग्ने? ॥४१॥

प्रजाभ्यऽइतिप्र जाभ्यः । मानुषीभ्यः । द्यावापृथिवीऽइतिद्यावा-पृथिवी । अन्तरिक्षम् । वनस्पतीन् ॥४२॥

कनिक्रदत् । अग्निम् । पुरीष्यम् । अग्निम् । गर्भम् । समुद्रियम् । अग्ने ॥४३॥

---

वीड्वङ्गऽइतिवीडु अङ्गः । पुरीषवाहनऽइतिपुरीष वाहनः ॥४१॥

आयुषः । समुद्रियम् । याहि । वीतये ॥४३॥

ऋतम् । सत्त्यम् । ऋतम् । सत्त्यम् । अग्निम् । पुरीष्ष्यम् । अङ्गिरस्वत् । भरामः ॥ ओषधयः । प्रति । मोदद्ध्वम् । अग्निम् । एतम् । शिवम् । आयन्तमित्त्या यन्तम् । अभि । अत्र । युष्माः ॥ इयस्यन्निति॑वि अस्यन् । विश्वाः । अनिराः । अमीवाः । निषीदन् । निसीदन्निति॑नि सीदन् । नः । अप । दुर्म्मतिमिति॑दुः मतिम् । जहि ॥४४॥

ओषधयः । प्रति । गृब्भ्णीत । पुष्प्पवतीरिति॑पुष्प्प वतीः । सुपिप्पलाऽइति॑सु [1]पिप्पलाः ॥ अयम् । वः । गर्ब्भः । ऋत्त्वियः । प्रत्त्नम् । सधस्त्थमिति॑सध स्थम् । आ । असदत् ॥४५॥

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्क्षसः । अमीवाः ॥ सुशर्म्मणऽइति॑सु शर्म्मणः । बृहतः ।

---

सत्यम् । सत्यम् । अग्निम् । पुरीष्यम् । मोदध्वम् । अग्निम् । आयन्तमित्या यन्तम् । अत्र । युष्माः । विश्वाः ॥४४॥

गृभ्णीत । पुष्पवतीरिति॑पुष्प वतीः । ऋत्वियः । प्रत्नम् । सधस्थमिति॑सध स्थम् ॥४५॥

रक्षसः । अग्ने । प्रनीताविति॑प्र नीतौ ॥४६॥

---

ओषधय्यः । आयन्तमित्या [2]य्यन्तम् । य्युष्माः । [3]व्यस्यन्निति॑वि अस्यन् ॥४४॥

ओषधय्यः । पुष्पवतीरिति॑पुष्प वतीः । अय्यम् । [4]व्वः । ऋत्विय्यः ॥४५॥

---

१. पिप्पलाः' इति काशिकः पाठः ।

२. कपाठशैल्यनुसारमिह 'य्यन्तम्' इति पाठेन भाव्यम् ।

३. अपपाठोऽयम्, 'व्यस्यन्निति॑व्वि अस्यन्' इति शुद्धेन पाठेन भाव्यम् ।

४. अपपाठोऽयं, कपाठशैल्यनुसारमिह 'वः' इति शुद्धः पाठो ज्ञेयः ।

शर्म्मणि । स्याम् । अग्नेऽ३ । अहम् । सुहवस्येतिसु हवस्य । प्रणीतौ । प्रनीताविति॑प्र नीतौ ॥४६॥

आपः॑ । हि । स्थ । मयोभुवऽइतिमय॒ऽ३ भुवः॑ । ताः॑ । न॒ऽ३ । ऊर्ज्जे । दधातन ॥ महे । रणाय । चक्क्षसे ॥४७॥

यः॑ । व्व॒ऽ३ । शिवतम॒ऽइतिशिव तमः॑ । रसः॑ । तस्य । भाजयत । इह । न॒ऽ३ ॥ उशतीरिवेत्युशतीऽ३ इव । मातरः॑ ॥४८॥

तस्म्मै । अरम् । गमाम । व्व॒ऽ३ । यस्य । क्षयाय । जिन्न्वथ ॥ आपः॑ । जनयथ । च । न॒ऽ३ ॥४९॥

मित्त्रः॑ । स॒ऽ३सृज्ज्येति॑सम् सृज्ज्य । पृथिवीम् । भूमिम् । च । ज्योतिषा । सह ॥ सुजातामितिसु जातम् । जातवेदसमिति॑जात वेदसम् । अयक्क्ष्माय । त्वा । सम् । सृजामि । प्रजाभ्य॒ऽइति॑प्र जाभ्यः॑ ॥५०॥

---

चक्षसे ॥४७॥
उशतीरिवेत्युशती? इव ॥४८॥
तस्मै । जिन्वथ ॥४९॥
मित्र? । स॒ऽ३सृज्येति॑सम् सृज्य । अयक्ष्माय । प्रजाभ्य॒ऽइति॑प्र जाभ्यः॑ ॥५०॥

---

मयोभुवऽइतिमय॒ऽ३ भुवः॑ । रणाय ॥४७॥
य्य? । [1]व्व॒ऽ३ । भाजयत ॥४८॥
[1]व्व॒ऽ३ । य्यस्य । क्षयाय । जनयथ ॥४९॥
जातवेदसमिति॑जात वेदसम् । अयक्ष्माय ॥५०॥

---

१. अपपाठोऽयम्, कपाठशैल्यनुसारमिह 'व॒ऽ३' इत्येकवकारवता पाठेन भाव्यम् ।

रुद्राः । सꣳसृज्ज्येतिसम् सृज्ज्य । पृथिवीम् । बृहत् । ज्योतिः । सम् । ईधिरे ॥ तेषाम् । भानुः । अजस्रꣳ । इत् । शुक्रः । देवेषु । रोचते ॥५१॥

सꣳसृष्टामितिसम् सृष्टाम् । वसुभिरितिवसु भिꣳ । रुद्रैः । धीरैꣳ । कर्म्मण्याम् । मृदम् । हस्ताभ्याम् । मृद्वीम् । कृत्वा । सिनीवाली । कृणोतु । ताम् ॥५२॥

सिनीवाली । सुकपर्देतिसु [1]कपर्दा । सुकुरीरेतिसु [2]कुरीरा । स्वौपशेतिसु [3]औपशा ॥ सा । तुभ्यम् । अदिते । महि । आ । उखाम् । दधातु । हस्तयोꣳ ॥५३॥

उखाम् । कृणोतु । शक्त्या । बाहुभ्यामितिबाहु भ्याम् । अदितिꣳ । धिया ॥ माता । पुत्रम् । यथा ।

---

रुद्राः । सꣳसृज्येतिसम् सृज्य । शुक्रः ॥५१॥

सꣳसृष्टामितिसम् सृष्टाम् । रुद्रैः । कर्म्मण्याम् । हस्ताभ्याम् । मृद्वीम् । कृत्वा ॥५२॥

तुभ्यम् ॥५३॥

शक्त्या । बाहुभ्यामितिबाहु भ्याम् । पुत्रम् । उपस्थऽइत्युप स्थे ।

---

वसुभिरितिवसु भिꣳ । [4]कर्म्मण्यम् ॥५२॥

हस्तयोꣳ ॥५३॥

धिया । यथा ॥५४॥

---

१. 'कपर्दा' इति काशिकः पाठः ।

२. 'कुरीरा' इति काशिकः पाठः ।

३. 'औपशा' इति काशिकः पाठः ।

४. अपपाठोऽयं लेखकप्रमादजः । 'कर्म्मण्याम्' इति शुद्धः पाठो ज्ञेयः ।

उपस्त्थऽइत्त्युप स्थे । सा । अग्निम् । विभर्त्तु । गर्भे । आ ॥ मखस्य । शिरः । असि ॥५४॥

वसवः । त्वा । कृण्ण्वन्तु । गायत्रेण । छन्दसा । अङ्गिरस्वत् । ध्रुवा । असि । पृथिवी । असि । धारय । मयि । प्रजामितिप्प्र जाम् । रायः । पोषम् । गौपत्त्यम् । सुवीर्य्यमितिसु वीर्य्यम् । सजातानितिस जातान् । यजमानाय । रुद्राः । त्रैष्टुभेन । त्रैस्तुभेनेतित्त्रै स्तुभेन । अन्तरिक्क्षम् । आदित्त्याः । जागतेन । द्यौः । विश्श्वे । देवाः । वैश्श्वानराः । आनुष्टुभेन । आनुस्तुभेनेत्त्यानु स्तुभेन । दिशः ॥५५॥

अदितिः । ते । बिलम् । गृब्भ्णातु । कृत्त्वाय । सा । महीम् । उखाम् । मृन्मयीमितिमृत् मयीम् । योनिम् ।

---

अग्निम् ॥५४॥

कृण्वन्तु । गायत्रेण । प्रजामितिप्र जाम् । गौपत्यम् । रुद्राः । त्रैष्टुभेन । त्रैस्तुभेनेतित्रै स्तुभेन । अन्तरिक्षम् । आदित्याः । विश्वे । वैश्वानराः । आनुष्टुभेन । आनुस्तुभेनेत्यानु स्तुभेन ॥५५॥

गृभ्णातु । कृत्वाय । मृन्मयीमितिमृत् मयीम् । अग्नये ।

---

गायत्रेण । धारय । मयि । रायः । सुवीर्य्यमितिसु [1]वीर्य्यम् । यजमानाय ॥५५॥

कृत्वाय । मृन्मयीमितिमृत् मयीम् । योनिम् । अग्नये ।

---

१. अपपाठोऽयम् । कपाठशैल्यनुसारमिह 'वी' इत्येकवकारवान् पाठः साधुः ।

अग्नये ॥ पुत्रेभ्यः । प्र । अयच्छत् । अदितिः । श्रपयान् । इति ॥५६॥

वसवः । त्वा । धूपयन्तु । इन्द्रः । धूपयतु । वरुणः । विष्णुः ॥५७॥

अदितिः । त्वा । देवी । विश्वदेव्यावती । विश्वदेव्यवतीतिविश्वदेव्य वती । पृथिव्याः । सधस्थऽइतिसध स्थे । अङ्गिरस्वत् । खनतु । अवट । देवानाम् । त्वा । पत्नीः । देवीः । विश्वदेव्यावतीः । विश्वदेव्यवतीरितिविश्वदेव्य वतीः । दधतु । उखे । धिषणाः । अभि । इन्धताम् । वरूत्रीः । श्रपयन्तु । ग्नाः । पचन्तु । जनयः । अच्छिन्नपत्राऽइत्यच्छिन्न पत्राः । पचन्तु ॥५८॥

मित्रस्य । चर्षणीधृतः । चर्षणिधृतऽइतिचर्षणि धृतः ।

---

पुत्रेभ्यः । अयच्छत् ॥५६॥

विष्णुः ॥५७॥

विश्वदेव्यावती । विश्वदेव्यवतीतिविश्वदेव्य वती । पृथिव्याः । सधस्थऽइतिसध स्थे । पत्नीः । विश्वदेव्यावतीः । विश्वदेव्यवतीरितिविश्वदेव्य वतीः । वरूत्रीः । अच्छिन्नपत्राऽइत्यच्छिन्न पत्राः ॥५८॥

---

अयच्छत् । श्रपयान् ॥५६॥

धूपयन्तु । धूपयतु ॥५७॥

विश्वदेव्यवतीतिविश्वदेव्य वती । विश्वदेव्यवतीरितिविश्वदेव्य वतीः । श्रपयन्तु । जनयः ॥५८॥

अवः । देवस्य । सानसि ॥ द्युम्नम् । चित्रश्श्रवस्तममिति-चित्रश्श्रवःऽतमम् ॥५९॥

देवः । त्वा । सविता । उत् । वपतु । सुपाणिरितिसु पाणिः । स्वङ्गुरिरितिसु 'अङ्गुरिः । सुबाहुरितिसु बाहुः । उत । शक्त्या ॥ अव्यथमाना । पृथिव्याम् । आशाः । दिशः । आ । पृण ॥६०॥

उत्थाय । बृहती । भव । उत् । ऊँऽइत्यूँ । तिष्ठ । ध्रुवा । त्वम् ॥ मित्र । एताम् । ते । उखाम् । परि । ददामि । अभित्त्यै । एषा । मा । भेदि ॥ वसवः । त्वा । आ । छृन्दन्तु ॥६१॥

आकूतिमित्त्या कूतिम् । अग्निम् । प्रयुजमितिप्र युजम् । स्वाहा । मनः । मेधाम् । चित्तम् । विज्ञात-

---

मित्रस्य । द्युम्नम् । चित्रश्रवस्तममितिचित्रश्रवःऽतमम् ॥५९॥

स्वङ्गुरिरितिसु अङ्गुरिः । शक्त्या । अव्यथमाना । पृथिव्याम् ॥६०॥

उत्थाय । ऊँऽइत्यूँ । तिष्ठ । मित्र । अभित्त्यै ॥६१॥

आकूतिमित्या कूतिम् । अग्निम् । प्रयुजमितिप्र सुजम् । विज्ञातमितिवि

---

उत्थाय । उंऽइत्युम् ॥६१॥

प्रयुजमितिप्र [3]य्युजम् । विज्ञातमितिवि ज्ञातम् । विधृतिमितिवि

---

१. 'अङ्गुरिः' इति काशिकः पाठः ।

२. इमानि पदान्युत्तरस्याः कण्डिकाया इहैव पठचन्ते, अन्यानि पूर्वगतानि । अतः इत आरभ्य चतसृणां कण्डिकासंख्यानां भेदो ककोशे ज्ञेयः ।

३. कपाठशैल्यनुसारमिह 'युजम्' इति पाठेन भाव्यम् ।

मितिवि ज्ञातम् । व्राचः । विधृतिमितिवि धृतिम् । प्रजा-पतयऽइतिप्रजा पतये । मनवे । अग्नये । वैश्वानराय ॥६२॥

मा । सु । भित्थाः । मा । सु । रिषः । अम्ब । धृष्णु । वीरयस्व । सु ॥ अग्निः । च । इदम् । करिष्यथः ॥६३॥

दृꣳहस्व । देवि । पृथिवि । स्वस्तये । आसुरी । माया । स्वधया । कृता । असि ॥ जुष्टम् । देवेभ्यः । इदम् । अस्तु । हव्यम् । अरिष्टा । त्वम् । उत् । इहि । यज्ञे । अस्मिन् ॥६४॥

द्र्वन्नऽइतिद्रु अन्नः । सर्पिरासुतिरितिसर्पिः आसुतिः । प्रत्नः । होता । वरेण्यः ॥ सहसः । पुत्रः । अद्भुतः ॥६५॥

---

ज्ञातम् । प्रजापतयऽइतिप्रजा पतये । अग्नये । वैश्वानराय ॥६२॥

भित्थाः । अग्निः । करिष्यथः ॥६३॥

जुष्टम् । देवेभ्यः । हव्यम् । अरिष्टा । यज्ञे । अस्मिन् ॥६४॥

द्र्वन्नऽइतिद्रु अन्नः । प्रत्नः । वरेण्यः । पुत्रः । अद्भुतः ॥६५॥

---

धृतिम् । प्रजापतयऽइतिप्रजा पतये । अग्नये । वैश्वानराय ॥६२॥

[1]वीरयस्व ॥६३॥

स्वस्तये । माया । स्वधया । यज्ञे ॥६४॥

---

१. इतः पूर्वा मन्त्रकण्डिका पूर्वं गतेति कृत्वा नेह पुनः पदपाठे पठ्यते । अत इत आरभ्य पञ्चानां कण्डिकासंख्यानां कक्रोशे भेदो ज्ञेयः ।

परस्याः । अधि । सव्वँत ऽइतिसम् वतः । अवरान् । अभि । आ । तर ॥ यत्र । अहम् । अस्मि । तान् । अव ॥६६॥

परमस्याः । परावत ऽइतिपरा वतः । रोहिदश्व ऽइतिरोहित् अश्वः । इह । आ । गहि ॥ पुरीष्यः । पुरुप्प्रिय ऽइतिपुरु प्रियः । अग्ने । त्वम् । तर । मृधः ॥६७॥

यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दुदध्मसि ॥ सर्वम् । तत् । अस्तु । ते । घृतम् । तत् । जुषस्व । यविष्ट्ठ्य ॥६८॥

यत् । अत्ति । उपजिह्विकेत्युप जिह्विका । यत् । वम्म्रः । अतिसर्प्पतीत्त्यति सर्प्पति ॥६९॥

---

यत्र । अस्मि ॥६६॥

रोहिदश्व ऽइतिरोहित् अश्वः । पुरीष्यः । पुरुप्रिय ऽइतिपुरु प्रियः । अग्ने ॥६७॥

अग्ने । दुध्मसि । यविष्ठ्य ॥६८॥

उपजिह्विकेत्युप जिह्विका । वम्रः । अतिसर्प्पतीत्यति सर्प्पति ॥६९॥

---

[1]सम्वत ऽइतिसम् वतः । य्यत्र ॥६६॥

पुरुप्रिय्य ऽइतिपुरु प्रिय्यः ॥६७॥

य्यत् । य्यविष्ठ्य ॥६८॥

य्यत् । य्यत् ॥६९॥

---

१. अपपाठोऽयम्, 'सव्वँत ऽइतिसम् वतः' इति शुद्धः पाठो ज्ञेयः ।

अहंरहुरित्त्यहंः अहः । अप्प्रयावुमित्त्यप्प्र यावम् । भरन्तः । अश्श्वायेवेत्त्यश्श्वाय इव । तिष्ठ्ठते । घासम् । अस्म्मै ॥ रायः । पोषेण । सम् । इषा । मदन्तः । अग्ने । मा । ते । प्रतिवेशाऽइतिप्प्रति वेशाः । रिषाम ॥७०॥

नाभा । पृथिव्याः । समिधानऽइतिसम् [1]इधाने । अग्नौ । रायः । पोषाय । बृहते । हवामहे ॥ इरम्मदमितीरम् मदम् । बृहदुक्क्थमितिबृहत् उक्क्थम् । यजत्रम् । जेतारम् । अग्निम् । पृतनासु । सासहिम् । ससहिमितिससहिम् ॥७१॥

याः । सेनाः । अभीत्त्वरीरित्त्यभि इत्त्वरीः । आव्याधिनीरित्त्या व्याधिनीः । उगणाः । उत ॥ ये । स्तेनाः । ये । च । तस्कराः । तान् । ते । अग्ने । अपि । दधामि । आस्ये ॥७२॥

---

अहंरहुरित्यहंः अहः । अप्रयावमित्यप्र यावम् । अश्वायेवेत्यश्वाय इव । तिष्ठते । अस्मै । अग्ने । प्रतिवेशाऽइतिप्रति वेशाः ॥७०॥

पृथिव्याः । अग्नौ । बृहदुक्थमितिबृहत् उक्थम् । यजत्रम् । अग्निम् ॥७१॥

अभीत्वरीरित्यभि इत्वरीः । आव्याधिनीरित्या व्याधिनीः । तस्कराः । अग्ने ॥७२॥

---

अप्रय्यावमित्यप्र [2]य्यावम् । अश्वाय्येवेत्यश्वाय्य इव । राय्यः ॥७०॥

राय्यः । पोषाय्य । य्यजत्रम् ॥७१॥

य्याः । य्ये । य्ये ॥७२॥

---

१. 'इधाने' इति काशिकः पाठः ।

२. 'य्यावम्' इति शुद्धेन पाठेन भाव्यम् ।

दꣳष्ट्राभ्याम् । मलिम्म्लून् । जम्भ्यैः । तस्करान् । उत ॥ हनुभ्यामितिहनु भ्याम् । स्तेनान् । भगवऽइतिभग वः । तान् । त्वम् । खाद । सुखादितानितिसु खादितान् ॥७३॥

ये । जनेषु । मलिम्म्लवः । स्तेनासः । तस्कराः । वने ॥ ये । कक्षेषु । अघायवः । अघयवऽइत्यघ यवः । तान् । ते । दधामि । जम्भयोः ॥७४॥

यः । अस्म्मभ्यम् । अरातीयात् । अरातियादित्त्यराति यात् । यः । च । नः । द्वेषते । जनः ॥ निन्दात् । यः । अस्मान् । धिप्प्सात् । च । सर्वम् । तम् । मस्म्मसा । कुरु ॥७५॥

सꣳशितमितिसम् शितम् । मे । ब्रह्म । सꣳशितमिति-सम् शितम् । वीर्य्यम् । बलम् ॥ सꣳशितमितिसम् शितम् ।

---

दꣳष्ट्राभ्याम् । मलिम्लून् । तस्करान् । हनुभ्यामितिहनु भ्याम् ॥७३॥

मलिम्लवः । तस्कराः । कक्षेषु । अघयवऽइत्यघ यवः ॥७४॥

अस्मभ्यम् । अरातियादित्यराति यात् । अस्मान् । धिप्सात् । मस्मसा ॥७५॥

---

भगवऽइतिभग वः ॥७३॥

य्ये । य्ये । अघाय्यवः । अघय्यवऽइत्यघ [1]य्यवः । जम्भय्योः ॥७४

य्यः । अरातीय्यात् । अरातिय्यादित्यराति [2]य्यात् । य्यः । य्यः ॥७५॥

वीर्य्यम् ॥७६॥

---

१. अपपाठोऽयम् । 'य्यवः' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम् । 'य्यात्' इति शुद्धेन पाठेन भाव्यम् ।

क्षत्त्रम् । जिष्णु । यस्य॑ । अहम् । अस्म्मि । पुरोहि॑त॒ऽइति॑-
पुरः॒ हि॑तं॑ ॥७६॥

उत् । एषाम् । बाहूऽइति॑बाहू । अतिरम् । उत् । वर्च्चः॑ ।
अथोऽइत्त्यथो॑ । बलम् ॥ क्षिणोमि॑ । ब्रह्म॑णा । अमित्त्रा॑न् ।
उत् । नयामि । स्वान् । अहम् ॥७७॥

अन्न॑पत॒ऽइत्त्यन्न॑ पते । अन्न॑स्य । नः॑ । देहि । अनमी-
वस्य॑ । शुष्म्मिणः॑ ॥ प्रप्रेतिप्र प्र॑ । दातार॑म् । तारिषः॑ ।
ऊर्ज॑म् । नः॑ । धेहि । द्विपद॒ऽइति॑द्वि पदे॑ । चतु॑ष्पदे ।
चतुः॑पद॒ऽइति॑चतुः॑ पदे ॥७८॥

॥ इति वाजसनेयिसंहितापदे एकादशोऽध्यायः ॥

---

ब्रह्म॑ । क्षत्त्रम् । जिष्णु । अस्मि॑ ॥७६॥

अथोऽइत्यथो॑ । ब्रह्म॑णा । अमित्रा॑न् ॥७७॥

अन्न॑पत॒ऽइत्यन्न॑ पते । शुष्मिणः॑ । प्रप्रेतिप्र प्र॑ । द्विपद॒ऽइति॑द्वि पदे॑ ।
चतु॑ष्पदे ॥७८॥

---

नय्यामि ॥७७॥

अन्न॑पत॒ऽइत्यन्न॑ पते ॥७८॥

॥ इति श्री वाजसनेयिसंहितापदे एकादशमो[1]ऽध्यायः ॥



---

१. प्राचीनोऽयं प्रयोगः। प्राचीनसंस्कृतग्रन्थेष्वेतादृशः प्रयोगा बहुधा उपलभ्यन्ते ।

# द्वादशोऽध्यायः

दृशानः । रुक्मः । उर्व्या । वि । अद्यौत् । दुर्मर्षमितिदुः मर्षम् । आयुः । श्रिये । रुचानः ॥ अग्निः । अमृतः । अभवत् । वयोभिरितिवयः भिः । यत् । एनम् । द्यौः । अजनयत् । सुरेताऽइतिसु रेताः ॥१॥

नक्तोषासा । नक्तोषसेतिनक्तोषसा । समनसेतिस मनसा । विरूपेऽइतिवि रूपे । धापयेतेऽइतिधापयेते । शिशुम् । एकम् । समीचीऽइतिसम् ईची ॥ द्यावाक्षामा । रुक्मः । अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणोदाऽइतिद्रविणः दाः ॥२॥

विश्वा । रूपाणि । प्रति । मुञ्चते । कविः । प्र । असावीत् । भद्रम् । द्विपदऽइतिद्वि पदे । चतुष्पदे । चतुःपदऽइति-चतुः पदे ॥ वि । नाकम् । अख्यत् । सविता । वरेण्यः ।

---

रुक्मः । अद्यौत् । अग्निः ॥१॥

नक्तोषासा । नक्तोषसेतिनक्तोषसा । द्यावाक्षामा । रुक्मः । अग्निम् । द्रविणोदाऽइतिद्रविणः दाः ॥२॥

विश्वा । भद्रम् । द्विपदऽइतिद्वि पदे । चतुष्पदे । अख्यत् । वरेण्यः ।

---

आयुः । श्रिये । वयोभिरितिवयः भिः । यत् । अजनयत् ॥१॥

धापयेतेऽइतिधापयेते । धारयन् ॥२॥

अनु । प्रयाणम् । प्रयानमितिप्र यानम् । उषसः । वि । राजति ॥३॥

सुपर्णऽइतिसु पर्णः । असि । गरुत्मान् । त्रिवृदितित्रि वृत् । ते । शिरः । गायत्रम् । चक्षुः । बृहद्रथन्तरेऽइतिबृहत् [1]रथन्तरे । पक्षौ ॥ स्तोमः । आत्मा । छन्दांꣳसि । अङ्गानि । यजूꣳषि । नाम ॥ साम । ते । तनूः । वामदेव्यमितिवाम देव्यम् । यज्ञायज्ञियमितियज्ञा यज्ञियम् । पुच्छम् । धिष्ण्याꣳ । शफाः ॥ दिवम् । गच्छ । स्वरितिस्वः । पत ॥४॥

---

प्रयानमितिप्र यानम् ॥३॥

सुपर्णऽइतिसु पर्णः । गरुत्मान् । त्रिवृदितित्रि वृत् । गायत्रम् । चक्षुः । बृहद्रथन्तरेऽइतिबृहत् रथन्तरे । पक्षौ । आत्मा । यज्ञायज्ञियमिति-यज्ञा यज्ञियम् । [2]पुछम् । धिष्ण्याꣳ । [2]गछ ॥४॥

---

प्रयाणम् । प्रयानमितिप्र [3]यानम् ॥३॥

सुपर्णऽइतिसु पर्णः । त्रिवृदितित्रि वृत् । गायत्रम् । यजूꣳषि । [4]वामदेव्यमितिवाम देव्यम् । [5]यज्ञायज्ञियमितियज्ञा यज्ञियम् ॥४॥

---

१. 'रथन्तरे' इति काशिकः पाठः ।

२. 'पुच्छम्' 'गच्छ' इति मुम्बईमुद्रिते पाठौ ।

३. अपपाठोऽयम्, 'यानम्' इति शुद्धः कपाठो ज्ञेयः ।

४. सर्वपाठविलक्षणोऽत्र स्वरनिर्देशः । 'वामदेवाड्ड्यड्डौ' (अष्टा० ४।२।८) इत्यनेन पाणिनिः डयत् डय इति द्वौ प्रत्ययौ विदधाति । तत्र डयप्रत्यये प्रत्ययस्वरेणान्तोदात्तो वामदेव्यशब्दः निष्पद्यते । डयत्-प्रत्ययस्य तित्त्वात् 'तित्स्वरितम्' (अष्टा० ६।१।१७९) इति नियमेनान्तस्वरितः, यथात्र कपाठः । शाखाभेदेन स्वरभेदो भवति । तेनायं कपाठो माध्यन्दिनपाठाद् भिन्नायाः कस्याश्चित् शाखाया इति विज्ञायते । शर्परे द्वितीयवर्णापत्तिरपि शाखान्तरत्वमेवास्य पाठस्य द्योतयति ।

५. कपाठशैल्यनुसारमिह 'यज्ञायज्ञियमितियज्ञा यज्ञियम्' इति पाठेन भाव्यम् ।

विष्णोः । क्रमः । असि । सपत्नहेतिसपत्न हा । गायत्रम् । छन्दः । आ । रोह । पृथिवीम् । अनु । वि । क्रमस्व । अभिमातिहेत्यभिमाति हा । त्रैष्टुभम् । त्रैस्तुभमितित्रैस्तुभम् । अन्तरिक्षम् । अरातीयतः । अरातियतऽइत्यराति यतः । हन्ता । जागतम् । दिवम् । शत्रूयतः । शत्रुयतऽइतिशत्रु यतः । हन्ता । आनुष्टुभम् । आनुस्तुभमित्यानुस्तुभम् । दिशः ॥५॥

अक्रन्दत् । अग्निः । स्तनयन्निवेतिस्तनयन् इव । द्यौः । क्षाम । रेरिहत् । वीरुधः । समञ्जन्नितिसम् अञ्जन् ॥ सद्यः । जज्ञानः । वि । हि । ईम् । इद्धः । अख्यत् । आ । रोदसीऽइतिरोदसी । भानुना । भाति । अन्तरित्यन्तः ॥६॥

---

विष्णोः । सपत्नहेतिसपत्न हा । गायत्रम् । अभिमातिहेत्यभिमाति हा । त्रैष्टुभम् । त्रैस्तुभमितित्रैस्तुभम् । अन्तरिक्षम् । अरातियतऽइत्यराति यतः । शत्रूयतः । शत्रुयतऽइतिशत्रु यतः । आनुष्टुभम् ॥५॥

अक्रन्दत् । अग्निः । सद्यः । जज्ञानः । इद्धः । अख्यत् । अन्तरित्यन्तः ॥६॥

---

गायत्रम् । अरातीयतः । [1]अरातीयतऽइत्यराति य्यतः । शत्रूयतः । [2]शत्रूयतऽइतिशत्रु य्यतः ॥५॥

स्तनयन्निवेतिस्तनयन् इव ॥६॥

---

१. अपपाठोऽयम्, 'अरातियतऽइत्यराति यत' इति पाठेन भाव्यम् ।
२. अपपाठोऽयम् 'शत्रुयतऽइतिशत्रु यतः' इति पाठेन भाव्यम् ।

अग्ने । अभ्यावर्त्तिन्नित्यभि आवर्त्तिन् । अभि । मा । नि । वर्त्तस्व । आयुषा । वर्चसा । प्रजयेतिप्र जया । धनेन ॥ सन्या । मेधया । रय्या । पोषेण ॥७॥

अग्ने । अङ्गिरः । शतम् । ते । सन्तु । आवृतऽइत्या वृतः । सहस्रम् । ते । उपावृतऽइत्युप आवृतः ॥ अध । पोषस्य । पोषेण । पुनः । नः । नष्टम् । आ । कृधि । पुनः । नः । रयिम् । आ । कृधि ॥८॥

पुनः । ऊर्जा । नि । वर्त्तस्व । पुनः । अग्ने । इषा । आयुषा ॥ पुनः । नः । पाहि । अंहसः ॥९॥

सह । रय्या । नि । वर्त्तस्व । अग्ने । पिन्वस्व । धारया ॥ विश्वप्स्न्येतिविश्व प्स्न्या । विश्वतः । परि ॥१०॥

---

अग्ने । अभ्यावर्त्तिन्नित्यभि आवर्त्तिन् । प्रजयेतिप्र जया ॥७॥

अग्ने । आवृतऽइत्या वृतः । उपावृतऽइत्युप आवृतः । नष्टम् ॥८

अग्ने ॥९॥

अग्ने । पिन्वस्व । विश्वप्स्न्येतिविश्व प्स्न्या । विश्वतः ॥१०॥

---

आयुषा । प्रजयेतिप्र जया । मेधया । रय्या ॥७॥

आवृतऽइत्या [1]व्रतः । रयिम् ॥८॥

आयुषा ॥९॥

रय्या । धारया ॥१०॥

---

१. अपपाठोऽयम्, 'वृतः' इति शुद्धः पाठो ज्ञेयः ।

आ । त्वा । अहार्षम् । अन्तः । अभूः । ध्रुवः । तिष्ठ । अविचाचलिरित्यविं चाचलिः ॥ विशः । त्वा । सर्वाः । वाञ्छन्तु । मा । त्वत् । राष्ट्रम् । अधि । भ्रशत् ॥११॥

उत् । उत्तममित्युत् तमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मद्ध्यमम् । श्रथाय । श्रथयेतिश्रथय ॥ अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥१२॥

अग्ने । बृहन् । उषसाम् । ऊर्द्ध्वः । अस्थात् । निर्जगन्वानितिनिः [1]जगन्वान् । तमसः । ज्योतिषा । आ । अगात् ॥ अग्निः । भानुना । रुशता । स्वङ्गऽइतिसु अङ्गः । आ । जातः । विश्वा । सद्मानि । अप्राः ॥१३॥

सीद । त्वम् । मातुः । अस्याः । उपस्थऽइत्युप स्थे ।

---

तिष्ठ । अविचाचलिरित्यविं चाचलिः । राष्ट्रम् ॥११॥

उत्तममित्युत् तमम् । अस्मत् । मध्यमम् । श्रथयेतिश्रथय । आदित्य ॥१२॥

अग्ने । अस्थात् । निर्जगन्वानितिनिः जगन्वाम् । अग्निः । विश्वा । सद्मानि । अप्राः ॥१३॥

---

[2]श्रथाय । [3]श्रथायेतिश्रथाय । वयम् । अदितये ॥१२॥

---

१. 'जगन्न्वान्' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'श्रथाय' इत्येवं शुद्धः स्वरो ज्ञेयः ।

३. अपपाठोऽयम्, 'श्रथयेतिश्रथय' इति शुद्धः पाठो ज्ञेयः ।

व्विश्वा॑नि । अ॒ग्ने॒ । व्वयु॒ना॑नि । व्वि॒द्वान् ॥ मा । ए॒नाम् । तप॑सा । मा । अ॒र्च्चिषा॑ । अ॒भि । शो॒ची॒ᳪ । अ॒न्तः । अ॒स्याम् । शु॒क्रज्ज्यो॑ति॒रि॒ति॑शु॒क्र ज्यो॑तिᳪ । व्वि । भा॒हि॒ ॥१४॥

अ॒न्तः । अ॒ग्ने॒ । रु॒चा । त्वम् । उ॒षायाः॑ᳪ । सद॑ने । स्वे ॥ तस्याः॑ᳪ । त्वम् । हर॑सा । तप॑न् । जात॑वेद॒ऽइ॒ति॒जात॑ व्वेदᳪ । शि॒वः । भ॒व ॥१५॥

शि॒वः । भू॒त्त्वा । मह्य॑म् । अ॒ग्ने॒ । अथो॒ऽइत्त्यथो॑ । सी॒द॒ । शि॒वः । त्वम् ॥ शि॒वाः । कृ॒त्त्वा । दिशः॑ । सर्वाः॑ᳪ । स्वम् । योनि॑म् । इ॒ह । आ । अ॒स॒दᳪ ॥१६॥

---

उ॒प॒स्थ॒ऽइत्त्यु॑प स्थे॑ । व्विश्वा॑नि । अ॒ग्ने॒ । व्वि॒द्वान् । शु॒क्रज्यो॑ति॒रि॒ति॑शु॒क्र ज्यो॑तिᳪ ॥१४॥

अ॒ग्ने॒ ॥१५॥

भू॒त्वा । अ॒ग्ने॒ । अथो॒ऽइत्यथो॑ । कृ॒त्वा ॥१६॥

---

[1]व्वयु॒ना॑नि । [2]ए॒ताम् ॥१४॥

[3]उ॒खाया॑ᳪ । जात॑वेद॒ऽइ॒ति॒जात॑ वेदᳪ ॥१५॥

मह्य॑म् । य्योनि॑म् ॥१६॥

---

१. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह पदानि पदपादे पठचन्ते । अत इत आरभ्यैकस्याः कण्डिकासंख्याया भेदो ज्ञेयः ।

२. अपपाठोऽयं प्रतीयते । नहि पाठान्तरे स्वीकृतेऽपि 'ए॒ताम्' पदस्य सर्वानुदात्तत्वं संभवति ।

३. षकारस्य खकारोच्चारणजोऽपपाठः । 'उ॒षाया॑ᳪ' इत्येव साधुः ।

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परि । जातवेदा ऽइति जात वेदाः ॥ तृतीयम् । अप्स्वित्यप् सु । नृमणाः । नृमना ऽइति नृ मनाः । अजस्रम् । इन्धानः । एनम् । जरते । स्वाधीरिति सु आधीः ॥१७॥

विद्म । ते । अग्ने । त्रेधा । त्रयाणि । विद्म । ते । धाम । विभृतेति वि भृता । पुरुत्रेति पुरु त्रा ॥ विद्म । ते । नाम । परमम् । गुहा । यत् । विद्म । तम् । उत्सम् । यतः । आजगन्थेत्या जगन्थ ॥१८॥

समुद्रे । त्वा । नृमणाः । नृमना ऽइति नृ मनाः । अप्स्वित्यप् सु । अन्तः । नृचक्षा ऽइति नृ चक्षाः । ईधे । दिवः । अग्ने । ऊधन् ॥ तृतीये । त्वा । रजसि ।

---

जज्ञे । अस्मत् । अप्स्वित्यप् सु ॥१७॥

विद्म । अग्ने । विद्म । पुरुत्रेति पुरु त्रा । विद्म । विद्म । [1]उत्सम् । आजगन्थेत्या जगन्थ ॥१८॥

समुद्रे । अप्स्वित्यप् सु । नृचक्षा ऽइति नृ चक्षाः । अग्ने । तस्थि-

---

[2]अस्मात् । द्वितीयम् । जातवेदा ऽइति जात वेदाः । तृतीयम् ॥१७॥ त्रयाणि । विभृतेति वि[3] भृता । यत् । [4]उत्सम् । यतः ॥१८॥ तृतीये ॥१९॥

---

१. 'उत्थ्सम्' इत्यपपाठो बम्बईमुद्रिते ।

२. अपपाठोऽयम् । 'अस्मत्' इति शुद्धः पाठो ज्ञेयः ।

३. अपपाठोऽयम्, कशैल्यनुसारमिह 'वि' इति शुद्धः पाठो ज्ञेयः ।

४. कपाठे सर्वत्र सकारे परतः द्वितीयवर्णापत्तिरिष्यते, अतोऽत्र 'उथ्सम्' इति शुद्धः पाठो द्रष्टव्यः । इदं चावधेयम्—उत्सशब्दे कपाठेऽत्र चान्यत्र (१३।४९ ॥ १७।८७ ॥ १९।८७ मन्त्राणां पदपाठे) च द्वितीयवर्णापत्तिर्न दृश्यते ।

तस्त्थवाᳬसमितितस्त्थ वाᳬसम् । अपाम् । उपस्त्थ-ऽइत्त्युप स्थे । महिषाः । अवर्द्धन् ॥१९॥

श्रीणाम् । उदारऽइत्त्युत आरः । धरुणः । रयीणाम् । मनीषाणाम् । प्रार्प्पणऽइतिप्र अर्प्पणः । सोमगोपाऽइतिसोम गोपाः ॥ वसुः । सूनुः । सहसः । अप्स्वित्त्यप् सु । राजा । वि । भाति । अग्रे । उषसाम् । इधानः ॥२०॥

विश्वस्य । केतुः । भुवनस्य । गर्भः । आ । रोदसी-ऽइतिरोदसी । अपृणात् । जायमानः ॥ वीडुम् । चित् । अद्रिम् । अभिनत् । परायन्नितिपरा यन् । जनाः । यत् । अग्निम् । अयजन्त । पञ्च ॥२१॥

उशिक् । पावकः । अरतिः । सुमेधाऽइतिसु मेधाः । मर्त्त्येषु । अग्निः । अमृतः । नि । धायि ॥ इयर्त्ति । धूमम् ।

---

वाᳬसमितितास्थ वाᳬसम् । उपस्थऽइत्युप स्थे । अवर्द्धन् ॥१९॥

उदारऽइत्युत आरः । प्रार्प्पणऽइतिप्र अर्प्पणः । अप्स्वित्यप् सु । अग्रे ॥२०॥

विश्वस्य । आद्रिम् । अग्निम् ॥२१॥

---

[1]रय्रीणाम् ॥२०॥

जाय्रमानः । [2]परय्रन्नितिपरा य्यन् । य्यत् । अय्रजन्त ॥२१॥

धाय्रि । इय्रर्ति ॥२२॥

---

१. अपपाठोऽयम्, 'रय्रीणाम्' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम्, 'परा्यन्नितिपरा य्रन्' इति शुद्धः पाठो ज्ञेयः ।

अरुषम् । भरिभ्रत् । उत् । शुक्रेण । शोचिषा । द्याम् । इनक्षन् ॥२२॥

यः । ते । अद्य । कृणवत् । भद्रशोचऽइतिभद्र शोचे । अपूपम् । देव । घृतवन्तमितिघृत वन्तम् । अग्ने ॥ प्र । तम् । नय । प्रतरमितिप्र तरम् । वस्यः । अच्छ । अभि । सुम्नम् । देवभक्तमितिदेव भक्तम् । यविष्ठ ॥२३॥

आ । तम् । भज । सौश्रवसेषु । अग्ने । उक्थ-ऽउक्थऽइत्युक्थे उक्थे । आ । भज । शस्यमाने ॥ प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । उत् । जातेन । भिनदत् । उत् । जनित्वैरितिजनि त्वैः ॥२४॥

त्वाम् । अग्ने । यजमानाः । अनु । द्यून् । विश्वा । वसु । दधिरे । वार्याणि ॥ त्वया । सह । द्रविणम् ।

---

अग्निः । भरिभ्रत् । शुक्रेण । इनक्षन् ॥२२॥

अद्य । भद्रशोचऽइतिभद्र शोचे । अग्ने । प्रतरमितिप्र तरम् । अछ । सुम्नम् । देवभक्तमितिदेव भक्तम् । यविष्ठ ॥२३॥

सौश्रवसेषु । अग्ने । उक्थऽउक्थऽइत्युक्थे उक्थे । अग्ना । जनित्वैरिति-जनि त्वैः ॥२४॥

---

[1]यः । घृतवन्तमितिघृत वन्तम् । नय । यविष्ठ ॥२३॥

प्रियः । सूर्ये । प्रियः ॥२४॥

यजमानाः । वार्याणि । त्वया । [2]वसुः ॥२५॥

---

१. इतः पूर्वमेकस्याः कण्डिकायाः पूर्वं गतत्वात् पदपाठेऽस्याः पदानि न पठ्यन्ते । अत इत आरभ्य तिसृणां कण्डिकासंख्यानां भेदो जायते ।

२. अपपाठोऽयम्, 'वसुः' इति शुद्धः पाठो ज्ञेयः

इच्छमानाः । व्रजम् । गोमन्तमितिगो मन्तम् । उशिजः । वि । वव्रुः ॥२५॥

अस्तावि । अग्निः । नराम् । सुशेवऽइतिसु शेवः । वैश्वानरः । ऋषिभिरित्यृषि भिः । सोमगोपाऽइतिसोम गोपाः ॥ अद्वेषेऽइत्यद्वेषे । द्यावापृथिवीऽइतिद्यावापृथिवी । हुवेम । देवाः । धत्त । रयिम् । अस्मेऽइत्यस्मे । सुवीरमितिसु वीरम् ॥२६॥

उत । ऊँऽइत्यूँ । त्वा । विश्वे । देवाः । अग्ने । भरन्तु । चित्तिभिरितिचित्ति भिः ॥ सः । नः । भव । शिवः । त्वम् । सुप्रतीकऽइतिसु प्रतीकः । विभावसुरितिविभा वसुः ॥२७॥

प्र । इत् । अग्ने । ज्योतिष्मान् । याहि । शिवेभिः । अर्चिभिरित्यर्चि भिः । त्वम् । बृहद्भिरितिबृहत् भिः ।

---

अग्ने । विश्वा । इच्छमानाः ॥२५॥

अग्निः । ऋषिभिरित्यृषि भिः । अद्वेषेऽइत्यद्वेषे । द्यावापृथिवीऽइति-द्यावापृथिवी । अस्मेऽइत्यस्मे ॥२६॥

ऊँऽइत्यूँ । विश्वे । अग्ने । सुप्रतीकऽइतिसु प्रतीकः ॥२७॥

अग्ने । ज्योतिष्मान् । अर्चिभिरित्यर्चि भिः । बृहद्भिरितिबृहत्

---

ऋषिभिरित्यृषि भिः । रयिम् । सुवीरमितिसु वीरम् ॥२६॥

[1]ऊँऽइत्यूम् । विभावसुरितिविभा वसुः ॥२७॥

याहि ॥२८॥

---

१. इतः पूर्वस्या एकस्याः कण्डिकायाः पूर्वं गतत्वान्न तत्पदानि पदपाठे पठ्यन्ते । अत इत आरभ्य चतसृणां कण्डिकासंख्यानां भेदो ज्ञेयः ।

भानुभिरितिभानु भिंः । भासन् । मा । हिंसीः । तन्वा । प्रजाऽइतिप्र जाः ॥२८॥

प्रप्रेतिप्र प्र । अयम् । अग्निः । भरतस्य । शृण्वे । वि । यत् । सूर्यः । न । रोचते । बृहत् । भाः ॥ अभि । यः । पूरुम् । पृतनासु । तस्थौ । दीदाय । दैव्यः । अतिथिः । शिवः । नः ॥२९॥

आपः । देवीः । प्रति । गृभ्णीत । भस्म । एतत् । स्योने । कृणुध्वम् । सुरभौ । ऊँऽइत्यूँ । लोके ॥ तस्मै । नमन्ताम् । जनयः । सुपत्नीरितिसु पत्नीः । मातेवेतिमाता इव । पुत्रम् । बिभृत । अप्स्वित्यप् सु । एनत् ॥३०॥

अप्स्वित्यप् सु । अग्ने । सधिः । तव । सः । ओषधीः । अनु । रुध्यसे । गर्भे । सन् । जायसे । पुनरितिपुनः ॥३१॥

---

भिंः । तन्वा । प्रजाऽइतिप्र जाः ॥२८॥

प्रप्रेतिप्र प्र । अग्निः । शृण्वे । तस्थौ । दैव्यः ॥२९॥

गृभ्णीत । भस्म । कृणुध्वम् । ऊँऽइत्यूँ । तस्मै । सुपत्नीरितिसु पत्नीः । पुत्रम् । अप्स्वित्यप् सु ॥३०॥

अप्स्वित्यप् सु । अग्ने । रुध्यसे । गर्भे ॥३१॥

---

[1]अयम् । व्यत् । सूर्यः । व्यः । दीदाय ॥२९॥

उंऽइत्यूम् । जनयः ॥३०॥

जायसे ॥३१॥

---

१. इतः पूर्वस्या एकस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठ्यन्ते । अत इत आरभ्य पञ्चानां कण्डिकासंख्यानां भेदो ज्ञेयः ।

गर्भः । असि । ओषधीनाम् । गर्भः । वनस्पतीनाम् ॥ गर्भः । विश्वस्य । भूतस्य । अग्ने । गर्भः । अपाम् । असि ॥३२॥

प्रसद्येतिप्र सद्य । भस्मना । योनिम् । अपः । च । पृथिवीम् । अग्ने ॥ सꣳसृज्येतिसम् सृज्य । मातृभिरितिमातृ भिः । त्वम् । ज्योतिष्मान् । पुनः । आ । असदः ॥३३॥

पुनः । आसद्येत्या सद्य । सदनम् । अपः । च । पृथिवीम् । अग्ने ॥ शेषे । मातुः । यथा । उपस्थऽइत्युप स्थे । अन्तः । अस्याम् । शिवतमऽइतिशिव तमः ॥३४॥

बोध । मे । अस्य । वचसः । यविष्ठ । मꣳहिष्ठस्य । प्रभृतस्येतिप्र भृतस्य । स्वधावऽइतिस्वधा वः ॥ पीयति ।

---

गर्भः । गर्भः । वनस्पतीनाम् । गर्भः । विश्वस्य । अग्ने । गर्भः ॥३२॥

प्रसद्येतिप्र सद्य । भस्मना । सꣳसृज्येतिसम् सृज्य । ज्योतिष्मान् ॥३३॥

आसद्येत्या सद्य । अग्ने । उपस्थऽइत्युप स्थे ॥३४॥

यविष्ठ । मꣳहिष्ठस्य । प्रभृतस्येतिप्र भृतस्य । तन्वम् । अग्ने ॥३५॥

---

य्योनिम् । [1]ज्योतिष्मान् ॥३३॥

य्यथा ॥३४॥

[2]य्यविष्ठ । पीय्यति ॥३५॥

---

१. अपपाठोऽयम् ।

२. इतः पूर्वयोर्द्वयोः कण्डिकयोः पूर्वं गतत्वान्न तयोः पदानि पदपाठे पठचन्ते । अत इत आरभ्य सप्तानां कण्डिकासंख्यानां भेदो ज्ञेयः ।

त्वम् । अनु । त्वम् । गृणाति । वृन्दारुः । ते । तन्वम् । वृन्दे । अग्ने ॥३५॥

सः । बोधि । सूरिः । मघवेतिमघ वा । वसुपतऽइतिवसु पते । वसुदावन्नितिवसु दावन् ॥ युयोधि । अस्म्मत् । द्वेषांसि । विश्श्वकर्म्मणऽइतिविश्श्व कर्म्मणे । स्वाहा ॥३६॥

पुनरितिपुनः । त्वा । आदित्त्याः । रुद्राः । वसवः । सम् । इन्धताम् । पुनः । ब्रह्माणः । वसुनीथेतिवसु नीथ । यज्ञैः ॥ घृतेन । त्वम् । तन्वम् । वर्द्धयस्व । सत्त्याः । नः । सन्तु । यजमानस्य । कामाः ॥३७॥

अप । इत । वि । इत । वि । च । सर्प्पत । अतः । ये । अत्र । स्थ । पुराणाः । ये । च । नूतनाः ॥ अदात् । यमः । अवसानमित्त्यव सानम् । पृथिव्याः । अक्रन् । इमम् । पितरः । लोकम् । अस्म्मै ॥३८॥

---

अस्मत् । विश्वकर्मणऽइतिविश्व कर्मणे ॥३६॥

आदित्याः । रुद्राः । ब्रह्माणः । यज्ञैः । तन्वम् । वर्द्धयस्व । सत्याः ॥३७॥

अत्र । अवसानमित्यव सानम् । पृथिव्याः । अक्रन् । अस्मै ॥३८॥

---

मघवेतिमघ वा । वसुपतऽइतिवसु पते । वसुदावन्नितिवसु[1] दावन् । य्युयोधि । विश्वकर्मणऽइतिविश्व कर्म्मणे ॥३६॥

वसुनीथेतिवसु नीथ । य्यज्ञैः । वर्द्धयस्व । य्यजमानस्य ॥३७॥

य्ये । य्यमः ॥३८॥

---

१. कशैल्यनुसारमिह 'वसु' इत्येवं पाठो युक्तः ।

सञ्ज्ञानमितिसम् ज्ञानम् । असि । कामधरणमितिकाम धरणम् । मयि । ते । कामधरणमितिकाम धरणम् । भूयात् ॥ अग्नेः । भस्मं । असि । अग्नेः । पुरीषम् । असि । चितः । स्थ । परिचितऽइतिपरि चितः । ऊर्द्धचितऽइत्यूर्द्ध चितः । श्रयद्धम् ॥३९॥

अयम् । सः । अग्निः । यस्मिन् । सोमम् । इन्द्रः । सुतम् । दधे । जठरे । वावशानः ॥ सहस्रियम् । वाजम् । अत्त्यम् । न । सप्तिम् । ससवानितिसस वान् । सन् । स्तूयसे । जातवेदऽइतिजात वेदः ॥४०॥

अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् । यत् । ओषधीषु । अप्स्वित्त्यप् सु । आ । यजत्र ॥ येन । अन्तरिक्षम् । उरु । आततन्थेत्त्या ततन्थ । त्वेषः । सः । भानुः । अर्णवः । नृचक्षाऽइतिनृ चक्षाः ॥४१॥

---

अग्नेः । भस्म । अग्नेः । ऊर्ध्वचितऽइत्यूर्ध्व चितः । श्रयध्वम् ॥३९॥
अग्निः । यस्मिन् । अत्यम् । सप्तिम् ॥४०॥

अग्ने । पृथिव्याम् । अप्स्वित्यप् सु । यजत्र । अन्तरिक्षम् । आततन्थे-त्या ततन्थ । नृचक्षाऽइतिनृ चक्षाः ॥४१॥

---

मयि । भूयात् । ऊद्र्ध्वचितऽइत्यूद्र्ध्व चितः । श्रयध्वम् ॥३९॥

अयम् । यस्मिन् । सहस्रियम् । ससवानितिसस वान् । स्तूयसे । जातवेदऽइतिजात वेदः ॥४०॥

यत् । [1]वर्चः । यत् । यजत्र । येन ॥४१॥

---

१. रेफोत्तरस्य सर्वत्र द्विर्वचनदर्शनादयमपपाठः ।

अग्ने । दिवः । अर्णम् । अच्छ । जिगासि । अच्छ । देवान् । ऊचिषे । धिष्ण्याः । ये ॥ याः । रोचने । परस्तात् । सूर्यस्य । याः । च । अवस्तात् । उपतिष्ठन्त इत्युप तिष्ठन्ते । आपः ॥४२॥

पुरीष्यासः । अग्नयः । प्रावणेभिः । प्रवणेभिरितिप्र 'वणेभिः । सजोषस इतिस जोषसः ॥ जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥४३॥

इडाम् । अग्ने । पुरुदंसमितिपुरु दंसम् । सनिम् । गोः । शश्वत्तममितिशश्वत् तमम् । हवमानाय । साध ॥ स्यात् । नः । सूनुः । तनयः । विजावेतिविजा वा । अग्ने । सा । ते । सुमतिरितिसु मतिः । भूतु । अस्मे इत्यस्मे ॥४४॥

---

अग्ने । अछ । अछ । धिष्ण्याः । उपतिष्ठन्त इत्युप तिष्ठन्ते ॥४२॥

पुरीष्यासः । अग्नयः । प्रवणेभिरितिप्र 'वणेभिः ॥४३॥

अग्ने । शश्वत्तममितिशश्वत् तमम् । अग्ने । अस्मे इत्यस्मे ॥४४॥

---

²उचिषे । ये । ज्याः । सूर्यस्य । ज्याः ॥४२॥

अग्नयः । ¹प्रवणेभिरितिप्रवणेभिः ॥४३॥

हवमानाय । तनयः । विजावेतिविजा वा ॥४४॥

---

१. कवर्ज सर्वकोशेषु 'वणेभिः' इति विच्छिद्यते, परन्तु तच्छैल्यनुसारमवग्रहादुत्तरस्य वकारस्य गुरुत्वनिदर्शनाय 'व' इत्येवं द्विर्न लिख्यते कारणमत्र मृग्यम् । ककोशेषु त्ववग्रहो न निर्दिश्यते आवेष्टनं च क्रियते, तत्रापि कारणं मृग्यम् । ऋगथर्वपदपाठयोरपि नावगृह्यते ।

२. अपपाठोऽयम्, 'ऊचिषे' इति शुद्धः पाठोऽत्र ज्ञेयः ।

चित् । असि । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । परिचिदितिपरि चित् ॥४५॥

लोकम् । पृण । छिद्रम् । पृण । अथोऽइत्यथौ । सीद । ध्रुवा । त्वम् ॥ इन्द्राग्नीऽइतीन्द्राग्नी । त्वा । बृहस्पतिः । अस्मिन् । योनौ । असीषदन् । असीसदन्नित्यसीसदन् ॥४६॥

ताः । अस्य । सूददोहसऽइतिसूद दोहसः । सोमम् । श्रीणन्ति । पृश्नयः ॥ जन्मन् । देवानाम् । विशः । त्रिषु । आ । रोचने । दिवः ॥४७॥

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रव्यचसमितिसमुद्र व्यचसम् । गिरः ॥ रथीतमम् । रथितममितिरथि तमम् । रथीनाम् । रथिनामितिरथि नाम् । वाजानाम् । सत्पतिमितिसत् पतिम् । पतिम् ॥४८॥

---

छिद्रम् । अथोऽइत्यथौ । इन्द्राग्नीऽइतीन्द्राग्नी । बृहस्पतिः । अस्मिन् । असीसदन्नित्यसीसदन् ।।४६।।

पृश्नयः । जन्मन् ।।४७।।

विश्वाः । समुद्रव्यचसमितिसमुद्र व्यचसम् । सत्पतिमितिसत् पतिम् ।।४८।।

---

[1]तया । देवतया ॥४५॥

योनौ ॥४६॥

पृश्नयः ॥४७॥

समुद्रव्यचसमितिसमुद्र व्यचसम् ॥४८॥

---

१. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठयन्ते । अत इत आरभ्याष्टानां कण्डिकासंख्यानां भेदो द्रष्टव्यः ।

सम् । इतम् । सम् । कल्पेथाम् । सम्प्रियाविति सम्प्रियौ । रोचिष्णूऽइतिरोचिष्णू । सुमनस्यमानाविति सु[1]मनस्यमानौ ॥ इषम् । ऊर्जम् । अभि । सँव्वसानाविति सम्वसानौ ॥४९॥

सम् । वाम् । मनांसि । सम् । व्रता । सम् । ऊँऽइत्यूँ । चित्तानि । आ । अकरम् । अग्ने । पुरीष्य । अधिपाऽइत्यधिपाः । भव । त्वम् । नः । इषम् । ऊर्जम् । यजमानाय । धेहि ॥५०॥

अग्ने । त्वम् । पुरीष्य÷ । रयिमानिति रयिमान् । पुष्टिमानितिपुष्टिमान् । असि ॥५१॥

मातेवेतिमाताइव । पुत्रम् । पृथिवी । पुरीष्यम् । अग्निम् । स्वे । योनौ । अभाः । उखा ॥ ताम् । विश्वैः ।

कल्पेथाम् । सम्प्रियाविति सम्प्रियौ । रोचिष्णूऽइतिरोचिष्णू ॥४९॥

ऊँऽइत्यूँ । अग्ने । पुरीष्य । अधिपाऽइत्यधिपाः ॥५०॥

अग्ने । पुरीष्य÷ । पुष्टिमानितिपुष्टिमान् ॥५१॥

पुत्रम् । पुरीष्यम् । अग्निम् । विश्वैः । ऋतुभिरितिऋतुभिः । प्रजा-

सम्प्रियाविति सम्प्रियौ । [2]सम्वसानावितिसम्वसानौ ॥४९॥

उंऽइत्यूम् । यजमानाय ॥५०॥

रयिमानिति रयिमान् ॥५१॥

१. 'मनस्यमानौ' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'सँव्वसाना०' इति शुद्धः पाठो ज्ञेयः ।

देवैः। ऋतुभिरित्यृतु भिः। सवँविदानऽइतिसम् [1]विदानः। प्रजापतिरितिप्रजा पतिः। विश्वकर्मेतिविश्व कर्म्मा। वि। मुञ्चतु ॥५२॥

असुन्वन्तम्। अयजमानम्। इच्छ। स्तेनस्य। इत्याम्। अनु। इहि। तस्करस्य ॥ अन्यम्। अस्मत्। इच्छ। सा। ते। इत्या। नमः। देवि। निर्ऋतऽइतिनिः ऋते। तुभ्यम्। अस्तु ॥५३॥

नमः। सु। ते। निर्ऋतऽइतिनिः ऋते। तिग्मतेजऽइतितिग्म तेजः। अयस्मयम्। वि। चृत। बन्धम्।

---

पतिरितिप्रजा पतिः। विश्वकर्मेतिविश्व कर्म्मा ॥५२॥

असुन्वन्तम्। इछ। इत्याम्। तस्करस्य। अन्यम्। अस्मत्। इछ। इत्या। तुभ्यम् ॥५३॥

तिग्मतेजऽइतितिग्म तेजः। अयस्मयम्। यम्या। सवँविदानेतिसम्

---

[2]रयोनौ। [3]सम्विदानऽइतिसम् [4]विदानाः। विश्वकर्मेतिविश्व कर्मा ॥५२॥

अयजमानम् ॥५३॥

अयस्मयम्। [5]य्यामेन। य्यम्या। [6]संम्विदानेतिसम् विदाना।

---

१. 'विदानः' इति काशिकः पाठः।

२. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठ्यन्ते। अत इत आरभ्य नवानां कण्डिकासंख्यानां भेदो ज्ञेयः।

३. अपपाठोऽयम्, 'सवँविदान०' इति शुद्धः पाठो ज्ञेयः।

४. 'विदानः' इति शुद्धः पाठो ज्ञेयः।

५. अपपाठोऽयं लेखकप्रमादजः, 'य्यमेन' इत्येवं शुद्धः पाठो ज्ञेयः।

६. अपपाठोऽयम्, 'सवँविदानेतिसम् विदाना' इत्येवं शुद्धः पाठो ज्ञेयः।

एतम् ॥ यमेन । त्वम् । यम्म्या । सवूँविदानेतिसम् [1]विदाना । उत्तमऽइत्युत् तमे । नाके । अधि । रोहय । एनम् ॥५४॥

यस्याः । ते । घोरे । आसन् । जुहोमि । एषाम् । बन्धानाम् । अवसर्जनायेत्यव सर्जनाय ॥ याम् । त्वा । जनः । भूमिः । इति । प्रमन्दतऽइतिप्र मन्दते । निर्ऋतिमितिनिः ऋतिम् । त्वा । अहम् । परि । वेद । विश्वतः ॥५५॥

यम् । ते । देवी । निर्ऋतिरितिनिः ऋतिः । आबबन्धेत्याबबन्ध । पाशम् । ग्रीवासु । अविचृत्यमित्यवि चृत्यम् ॥ तम् । ते । वि । स्यामि । आयुषः । न । मध्यात् । अथ । एतम् । पितुम् । अद्धि । प्रसूतऽइतिप्र सूतः ॥ नमः । भूत्यै । या । इदम् । चकार ॥५६॥

निवेशनऽइतिनि वेशनः । सङ्गमनऽइतिसम् गमनः ।

---

विदाना । उत्तमऽइत्युत् तमे ॥५४॥

अवसर्जनायेत्यव सर्जनाय । प्रमन्दतऽइतिप्र मन्दते । विश्वतः ॥५५॥

आबबन्धेत्या बबन्ध । अविचृत्यमित्यवि चृत्यम् । मध्यात् । अद्धि । प्रसूतऽइतिप्र सूतः । भूत्यै ॥५६॥

---

रोहय ॥५४॥

यस्याः । अवसर्जनायेत्यव सर्जनाय । याम् ॥५५॥

यम् । आयुषः । या ॥५६॥

निवेशनऽइतिनि वेशनः । [2]रूप ॥५७॥

---

१. 'विदाना' इति काशिकः पाठः ।

२. अपपाठोऽयम् । 'रूपा' इति शुद्धः पाठः ।

वसूनाम् । विश्वा । रूपा । अभि । चष्टे । शचीभिः ॥ देवऽइवेतिदेवः इव । सविता । सत्त्यधर्म्मेतिसत्त्य धर्म्मा । इन्द्रः । न । तस्थौ । समरऽइतिसम् अरे । पथीनाम् ॥५७॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् ॥ धीराः । देवेषु । सुम्नयेतिसुम्न या ॥५८॥

युनक्त । सीरा । वि । युगा । तनुध्वम् । कृते । योनौ । वपत । इह । बीजम् ॥ गिरा । च । श्रुष्टिः । सभराऽइतिस भराः । असत् । नः । नेदीयः । इत् । सृण्यः । पक्कम् । आ । इयात् ॥५९॥

शुनम् । सु । फालाः । वि । कृषन्तु । भूमिम् । शुनम् । कीनाशाः । अभि । यन्तु । वाहैः ॥ शुनासीरा ।

---

विश्वा । चष्टे । सत्यधर्मेतिसत्य धर्म्मा । तस्थौ ॥५७॥

तन्वते । सुम्नयेतिसुम्न या ॥५८॥

युनक्त । तनुध्वम् । श्रुष्टिः । सृण्यः । पक्कम् ॥५९॥

---

[1]य्युञ्जति । [2]कवय्यः । य्युगा । सुम्नय्येतिसुम्न [3]य्या ॥५८॥

य्युनक्त । य्युगा । य्योनौ । नेदीय्यः । इय्यात् ॥५९॥

[4]य्यंतु ॥६०॥

---

१. अपपाठोऽयम् । 'य्युञ्जन्ति' इति शुद्धः पाठः ।

२. अपपाठोऽयम् । 'कवय्य' इति शुद्धेन पाठेन भाव्यम् ।

३. कपाठानुसारमिह 'य्या' इत्येवं पाठेन भाव्यम् ।

४. परसवर्णाभावरूपोऽपपाठः ।

हुविषा । [1]तोशमाना । सुपिप्पलाऽइतिसु [1]पिप्पलाः॑ । ओषधीः॑ । कर्त्तन । अस्मेऽइत्त्यस्मे ॥६०॥

घृतेन । सीता । मधुना । सम् । अज्ज्यताम् । विश्वैः॑ । देवैः॑ । अनुमतेत्त्यनु मता । मरुद्भिरितिमरुत् भिः॑ ॥ ऊर्जस्वती । पयसा । पिन्वमाना । अस्स्मान् । सीते । पयसा । अभि । आ । ववृत्स्व ॥६१॥

लाङ्गलम् । पवीरवत् । सुशेवमितिसु शेवम् । सोमपित्त्सर्वितिसोमपि त्त्सरु ॥ तत् । उत् । वपति । गाम् । अविम् । प्रफर्व्युमितिप्र फर्व्यम् । च । पीवरीम् । प्रस्त्थावदितिप्रस्त्था वत् । रथवाहणम् । रथवाहनमितिरथ वाहनम् ॥६२॥

---

अस्मेऽइत्त्यस्मे ॥६०॥

अज्यताम् । विश्वैः॑ । अनुमतेत्यनु मता । मरुद्भिरितिमरुत् भिः॑ । पिन्वमाना । अस्मान् । ववृत्स्व ॥६१॥

सोमपित्सर्वितिसोमपि त्सरु । प्रफर्व्युमितिप्र फर्व्यम् । प्रस्थावदितिप्रस्था वत् ॥६२॥

---

पयसा । पयसा ॥६१॥

प्रस्थावदितिप्रस्था वत् । रथवाहनमितिरथ [3]वाहनम् ॥६२॥

---

१. 'तोषमाना' इति काशिकोऽपपाठः ।

२. 'पिप्पलाः॑' इति काशिकः पाठः ।

३. कपाठानुसारमिह 'वाहनम्' इति पाठेन भाव्यम् ।

कामम् । कामदुघऽइतिकाम दुघे । धुक्क्ष्व । मित्त्राय । व्वरुणाय । च ॥ इन्द्राय । अश्विब्भ्यामित्त्यश्वि ब्भ्याम् । पूष्णे । प्रजाब्भ्यऽइतिप्र जाब्भ्यः । ओषधीब्भ्यः ॥६३॥

वि । मुच्यद्ध्वम् । अग्घ्याः । देवयानाऽइतिदेव यानाः । अगन्म । तमसः । पारम् । अस्य ॥ ज्योतिः । आपाम ॥६४॥

सजूरितिस जूः । अब्दः । अयशोभिरित्त्ययवः भिः । उषाः । अरुणीभिः ॥ सजोषसावितिस जोषसौ । अश्विना । दꣳसोभिरितिदꣳस भिः । सूरः । एतशेन । व्वैश्वानरः । इडया । घृतेन । स्वाहा ॥६५॥

याः । ओषधीः । पूर्व्वाः । जाताः । देवेब्भ्यः । त्रियुगमितित्रि युगम् । पुरा ॥ मनै । नु । बब्भ्रूणाम् । अहम् । शतम् । धामानि । सप्त । च ॥६६॥

---

धुक्ष्व । मित्राय । अश्विभ्यामित्यश्वि भ्याम् । पूष्णे । प्रजाभ्यऽइतिप्र जाभ्यः । ओषधीभ्यः ॥६३॥

मुच्यध्वम् । अघ्न्याः । अगन्म ॥६४॥

अब्दः । अयवोभिरित्ययवः भिः । अश्विना । व्वैश्वानरः ॥६५॥

देवेभ्यः । त्रियुगमितित्रि युगम् । बभ्रूणाम् । सप्त ॥६६॥

मित्राय । व्वरुणाय । इन्द्राय ॥६३॥

देवय्यानाऽइतिदेव [1]य्यानाः ॥६४॥

अय्यवोभिरित्य्यवः भिः[2] ॥६५॥

य्याः । त्रिय्युगमितित्रि य्युगम् ॥६६॥

---

१. कशैल्यनुसारमिह 'य्यानाः' इति पाठेन भाव्यम् ।

२. इत उत्तरं मन्त्रे पुनः पठितं पदपाठे च पौनरुक्त्या परित्यक्तं 'सजूः' पदं कपाठशैल्यनुसारं यथास्थानं त्रिः पठ्यते । तत्रावेष्टनमकृत्वैव 'स जूः' इत्येवं लिख्यते, सोऽपपाठो ज्ञेयः ।

शतम् । वः । अम्ब । धामानि । सहस्रम् । उत । वः । रुहः ॥ अध । शतक्रत्वऽइतिशत क्रत्वः । यूयम् । इमम् । मे । अगदम् । कृत ॥६७॥

ओषधीः । प्रति । मोदध्वम् । पुष्पवतीरितिपुष्प वतीः । प्रसूवरीरितिप्र सूवरीः ॥ अश्वाऽइवेत्यश्वाः इव । सजित्वरीरितिस जित्वरीः । वीरुधः । पारयिष्णवः ॥६८॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ॥ सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पूरुष । पुरुषेतिपुरुष ॥६९॥

अश्वत्थे । वः । निषदनम् । निसदनमितिनि सदनम् । पर्ण । वः । वसतिः । कृता ॥ गोभाजऽइतिगो भाजः । इत् । किल । असथ । यत् । सनवथ । पूरुषम् । पुरुषमिति-पुरुषम् ॥७०॥

---

अम्ब । शतक्रत्वऽइतिशत क्रत्वः ॥६७॥

मोदध्वम् । पुष्पवतीरितिपुष्प वतीः । प्रसूवरीरितिप्र सूवरीः । अश्वाऽइवेत्यश्वाः इव । सजित्वरीरितिस जित्वरीः । पारयिष्णवः ॥६८॥

अश्वम् । आत्मानम् ॥६९॥

अश्वत्थे ॥७०॥

---

वः । वः । यूयम् ॥६७॥

[1]मादध्वम् । पारयिष्णवः ॥६८॥

वः । [2]सेनेयम् ॥६९॥

वः । वः । यत् ॥७०॥

---

१. अपपाठोऽयम्, 'मोदध्वम्' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम् 'सनेयम्' इति शुद्धः पाठो द्रष्टव्यः ।

यत्रं । ओषधीः । समग्ग्मतेतिंसम् अग्मंत । राजांनः । समिताविवेतिसमिंतौ इव ॥ विप्रः । सः । उच्यते । भिषक् । रक्षोहेतिरक्षः हा । अमीवचातंनऽइत्यंमीव चातंनः ॥७१॥

अश्वावतीम् । अश्वावतीमित्यंश्व वतीम् । सोमावतीम् । सोमवतीमितिसोम वतीम् । ऊर्जयन्तीम् । उदोंजसमित्युत् ओंजसम् ॥ आ । अवित्सि । सर्वाः । ओषधीः । अस्मै । अरिष्टतांतयऽइत्यंरिष्ट तांतये ॥७२॥

उत् । शुष्माः । ओषधीनाम् । गावः । गोष्ठादिव । गोस्थादिवेतिंगोस्थात् इव । ईरते ॥ धनम् । [1]सनिष्यन्तीनाम् । आत्मानंम् । तवं । पूरुष । पुरुषेतिंपुरुष ॥७३॥

---

यत्रं । समग्मेतिंसम् अग्मंत । विप्रः । उच्यते । रक्षोहेतिरक्षः हा । अमीवचातंनऽइत्यंमीव चातंनः ॥७१॥

अश्वावतीम् । अश्ववतीमित्यंश्व वतीम् । उदोंजसमित्युत् ओंजसम् । अवित्सि । अस्मै । अरिष्टतांतयऽइत्यंरिष्ट तांतये ॥७२॥

शुष्माः । गोष्ठादिव । गोस्थादिवेतिंगोस्थात् इव । सनिष्यन्तीनाम् । आत्मानंम् ॥७३॥

---

यत्रं । [2]समगंग्मेतेतिंसम् अग्मंत ॥७१॥

अश्ववतीमित्यंश्व वतीम् । सोमवतीमितिंसोम वतीम् । ऊर्जयन्तीम् । [3]अस्मे । अरिष्टतांतयऽइत्यंरिष्ट तांतये ॥७२॥

---

१. अत्र सनिष्ष्यन्ती०' इति द्वियकारवान् क्वचित् पाठः ।
२. अपपाठोऽयम्, 'समग्मतेतिंसम् अग्मंत' इति शुद्धः पाठो द्रष्टव्यः ।
३. अपपाठोऽयम्, 'अस्मै' इति शुद्धः पाठो ज्ञेयः ।

इष्कृतिः । नाम । वः । माता । अथोऽइत्यथो । यूयम् । स्थ । निष्कृतीः । निःकृतीरितिनिः कृतीः ॥ सीराः । पतत्रिणीः । स्थन । यत् । आमयति । निः । कृथ ॥७४॥

अति । विश्वाः । परिष्ठाः । परिस्थाऽइतिपरि स्थाः । स्तेनऽइवेतिस्तेनः इव । व्रजम् । अक्रमुः ॥ ओषधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वः । रपः ॥७५॥

यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आदधऽइत्याँ दधे ॥ आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीवगृभऽइतिजीव गृभः । यथा ॥७६॥

यस्य । ओषधीः । प्रसर्पथेतिप्र सर्पथ । अङ्गमङ्गमित्यङ्गम् अङ्गम् । परुःपरुः । परुःपरुरितिपरुः परुः ॥

---

इष्कृतीः । अथोऽइत्यथो । निष्कृतीः । पतत्रिणीः ॥७४॥

विश्वा । परिष्ठाः । परिस्थाऽइतिपरिस्थाः । स्तेनऽइवेतिस्तेनः इव । अक्रमुः । अचुच्यवुः । तन्वः ॥७५॥

हस्ते । आदधऽइत्याँ दधे । आत्मा । यक्ष्मस्य । नश्यति ॥७६॥

प्रसर्पथेतिप्र सर्पथ । अङ्गमङ्गमित्यङ्गम् अङ्गम् । परुःपरुः ।

---

वः । य्यूयम् । य्यत् । आमय्यति ॥७४॥

य्यत् ॥७५॥

य्यत् । व्वाजय्यन् । [1]य्यक्ष्मस्य । य्यथा ॥७६॥

य्यस्य । परुः[2] । परुरितिपरुः परुः । य्यक्ष्मम् ॥७७॥

---

१. अपपाठोऽयम् 'य्यक्ष्मस्य' इति शुद्धः पाठो ज्ञेयः :

२. इतः उत्तरः पूर्णविरामः प्रमादपाठः ।

तत॑ः । यक्क्ष्म॑म् । वि । बा॒ध॒द्ध्वे॒ । उ॒ग्रः । म॒द्ध्य॒म॒शीरि॒वेति॑मद्ध्य॒म॒शीः इ॑व ॥७७॥

सा॒कम् । य॒क्क्ष्म॒ । प्र । प॒त॒ । चाषे॑ण । कि॒कि॒दी॒वि॑ना॑ ॥ सा॒कम् । वात॑स्य । ध्राज्ज्या॑ । सा॒कम् । न॒श्श्य॒ । नि॒हा॒क॒येति॑नि॒ हाक॑या ॥७८॥

अ॒न्न्या । वः॒ । अ॒न्न्याम् । अ॒व॒तु॒ । अ॒न्न्या । अ॒न्न्यस्याः॑ । उप॑ । अ॒व॒त॒ । ताः । सर्वाः॑ । स॒र्वँ॒वि॒दा॒नाऽइति॑सम् [1]वि॒दा॒नाः । इ॒दम् । मे॒ । प्र । अ॒व॒त॒ । वच॑ः ॥७९॥

याः । फ॒लिनीः॑ । अ॒फ॒लाः । अ॒पु॒ष्प्पाः । याः । च॒ । पु॒ष्प्पिणीः॑ ॥ बृह॒स्प्पति॑प्प्रसू॒ताऽइति॒बृह॒स्प्पति॑ प्रसूताः॑ । ताः । नः॒ । मु॒ञ्च॒न्तु॒ । अंह॑सः॑ ॥८०॥

---

यक्ष्मम् । बा॒ध॒ध्वे॒ । उग्रः । म॒ध्य॒म॒शीरि॒वेति॑मध्य॒म॒शीः इ॑व ॥७७॥

य॒क्ष्म॒ । ध्राज्या॑ । न॒श्य॒ ॥७८॥

अ॒न्या । अ॒न्याम् । अ॒न्या । अ॒न्यस्याः॑ ॥७९॥

अ॒पु॒ष्पाः । पु॒ष्पिणीः॑ । बृह॒स्पति॑प्रसू॒ताऽइति॒बृह॒स्पती॑ प्रसूताः॑ ॥८०॥

---

य॒क्ष्म॒ । नि॒हा॒क॒येति॑नि॒ हाक॑या ॥७८॥

व॒ः । [2]स॒म्वि॒दा॒नाऽइति॑सम् वि॒दा॒नाः ॥७९॥

याः । याः ॥८०॥

---

१. 'वि॒दा॒नाः' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'स॒र्वँ॒वि॒दा॒नाऽइति॑सम् वि॒दा॒नाः॑' इति शुद्धः पाठो ज्ञेयः

मुञ्चन्तु । मा । शपत्थ्यात् । अथोऽइत्त्यथो । व्वरुण्ण्यात् । उत ॥ अथोऽइत्त्यथो । यमस्य । पड्वींशात् । सर्व्वस्म्मात् । देवकिल्ल्विषादितिदेव [1]किल्ल्विषात् ॥८१॥

अवपनन्तीरित्त्यव पतन्तीः । अवदन् । दिवः । ओषधयः । परि ॥ यम् । जीवम् । अश्नवामहै । न । सः । रिष्ष्याति । पूरुषः । पुरुषऽइतिपुरुषः ॥८२॥

याः । ओषधीः । सोमराज्ज्ञीरितिसोम राज्ज्ञीः । बह्वीः । शतविचक्क्षणाऽइतिशत विचक्क्षणाः ॥ तासाम् । असि । त्वम् । उत्तमेत्त्युत् तमा । अरम् । कामाय । शम् । हृदे ॥८३॥

---

शपथ्यात् । अथोऽइत्यथो । वरुण्यात् । पड्वींशात् । सर्व्वस्मात् ॥८१॥

अवपतन्तीरित्यव पतन्तीः । अश्नवामहै । रिष्याति ॥८२॥

सोमराज्ञीरितिसोम राज्ञीः । बह्वीः । शतविचक्षणाऽइतिशत विचक्षणाः । उत्तमेत्युत् तमा ॥८३॥

---

य्यमस्य । देवकिल्विषादितिदेव [2]किल्विषात् ॥८१॥

ओषधय्यः । अवपतन्तीरित्यव [3]पतन्तीः । य्यम् । पुरुषऽइति [4]पूरुष ॥८२॥

कामाय्य ॥८३॥

---

१. 'किल्विषात्' इति काशिकः पाठः ।

२. अपपाठोऽयम् 'किल्विषात्' इत्येवं स्वरेण भाव्यम् ।

३. अपपाठोऽयम्, अत्रावग्रहस्थानीयरेखाया उपरि = इत्येवं पाठशोधनाय चिह्नं वर्तते, परन्तु न तत्र पाठः शोधितः । शुद्धः पाठः 'अवपतन्ती' द्रष्टव्यः ।

४. अपपाठोऽयं दीर्घनिर्देशरूपः ।

विष्ठिताः । विस्थिताऽइतिवि स्थिताः । पृथिवीम् । अनु । बृहस्पतिप्रसूताऽइतिबृहस्पति प्रसूताः । अस्यै । सम् । दत्त । वीर्य्यम् ॥८४॥

याः । च । इदम् । उपशृण्वन्तीत्युप शृण्वन्ति । याः । च । दूरम् । परागताऽइतिपरा गताः ॥ सर्वाः । सङ्गत्येतिसम् गत्य । वीरुधः ॥८५॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः । द्विपादितिद्वि पात् । चतुष्पात् । चतुः॒पादितिचतुः॒ पात् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥८६॥

ओषधयः । सम् । अवदन्त । सोमेन । सह । राज्ञा ॥ यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥८७॥

---

विष्ठिताः । विस्थिताऽइतिवि स्थिताः । बृहस्पतिप्रसूताऽइतिबृहस्पति प्रसूताः ॥८४॥

उपशृण्वन्तीत्युप शृण्वन्ति । सङ्गत्येतिसम् गत्य ॥८५॥

यस्मै । द्विपादितिद्वि पात् । चतुष्पात् । अस्माकम् ॥८६॥

राज्ञा । यस्मै । ब्राह्मणः ॥८७॥

---

वीर्य्यम् ॥८४॥

य्याः । य्याः । [1]वीरुधः ॥८५॥

वः । य्यस्मै । वः ॥८६॥

ओषधय्यः । य्यस्मै । पारय्यामसि ॥८७॥

---

१. एकवकारवान् अपपाठोऽयम् ।

नाशयित्री । बलासस्य । अर्शसः । उपचितामित्युप चिताम् । असि ॥ अथोऽइत्यथो । शतस्य । यक्ष्माणाम् । पाकारोरितिपाक अरोः । असि । नाशनी ॥८८॥

त्वाम् । गन्धर्वाः । अखनन् । इन्द्रः । बृहस्पतिः ॥ ओषधे । सोमः । राजा । विद्वान् । यक्ष्मात् । अमुच्यत ॥८९॥

सहस्व । मे । अरातीः । सहस्व । पृतनायतऽइतिपृतना यतः ॥ सहस्व । सर्वम् । पाप्मानम् । सहमाना । असि । ओषधे ॥९०॥

दीर्घायुरितिदीर्घ आयुः । ते । ओषधे । खनिता । यस्मै । च । त्वा । खनामि । अहम् ॥ अथोऽइत्यथो । त्वम् ।

---

नाशयित्री । उपचितामित्युप चिताम् । अथोऽइत्यथो ॥८८॥
बृहस्पतिः । अमुच्यत ॥८९॥
पाप्मानम् ॥९०॥
दीर्घायुरितिदीर्घ आयुः । यस्मै । अथोऽइत्यथो । दीर्घायुरितिदीर्घ

---

नाशयित्री । यक्ष्माणाम् । पाकारोरितिपाक [1]आरोः ॥८८॥
यक्ष्मात् ॥८९॥
पृतनायतऽइतिपृतना [2]यतः ॥९०॥
दीर्घायुरितिदीर्घ आयुः । यस्मै । दीर्घायुरितिदीर्घ आयुः ॥९१॥

---

१. अपपाठोऽयम्, अन्यथा वा सन्धिविच्छेदजं पाठान्तरमिति संदिग्धम्, उभयथापि सम्भवति ।

२. कशैल्यनुसारमिह 'यतः' इति युक्तः पाठः ।

दीर्घायुरितिदीर्घ आयुः । भूत्वा । शतवल्लशेतिशत वल्शा । वि । रोहतात् ॥९१॥

त्वम् । उत्तमेत्युत् तमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ॥ उपस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिदासतीत्यभि दासति ॥९२॥

मा । मा । हिंसीत् । जनिता । यः । पृथिव्याः । यः । वा । दिवम् । सत्यधर्मेतिसत्य धर्मा । वि । आनट् ॥ यः । च । अपः । चन्द्राः । प्रथमः । जजान । कस्मै । देवाय । हविषा । विधेम ॥९३॥

अभि । आ । वर्तस्व । पृथिवि । यज्ञेन । पयसा । सह ॥ वपाम् । ते । अग्निः । इषितः । अरोहत् ॥९४॥

अग्ने । यत् । ते । शुक्रम् । चन्द्रम् । पूतम् । च । यज्ञियम् ॥ तत् । देवेभ्यः । भरामसि ॥९५॥

---

आयुः । भूत्वा । शतवल्शेतिशत वल्शा ॥९१॥

उत्तमेत्युत् तमा । वृक्षाः । अस्माकम् । अस्मान् । अभिदासतीत्यभि दासति ॥९२॥

पृथिव्याः । सत्यधर्मेतिसत्य धर्मा । कस्मै ॥९३॥

यज्ञेन । अग्निः ॥९४॥

अग्ने । शुक्रम् । यज्ञियम् । देवेभ्यः ॥९५॥

---

[1] वृक्षाः । उपस्तयः । य्यः ॥९२॥

य्यः । य्यः । देवाय ॥९३॥

य्यज्ञेन । पयसा ॥९४॥

य्यत् । य्यज्ञियम् ॥९५॥

---

१. कशौलयनुसारमृकारपरो वकारो न द्विर्लिख्यतेऽतोऽपपाठोऽयम् ।

इषंम् । ऊर्ज्जंम् । अहम् । इतः । आदम् । ऋतस्यं । योनिम् । महिषस्यं । धाराम् ॥ आ । मा । गोषुं । विशतु । आ । तनूषुं । जहांमि । सेदिम् । अनिराम् । अमींवाम् ॥९६॥

अग्ने । तवं । श्रवंः वयंः । महिं । भ्राजन्ते । अर्चयंः । विभावसोऽइतिविभा वसो ॥ बृहंद्भानोऽइतिबृहंत् भानो । शवंसा । वाजंम् ॥ उक्क्थ्यम् । दधांसि । दाशुषे । कवे ॥९७॥

पावकवर्च्चाऽइतिपावक वर्च्चाः । शुक्रवर्च्चाऽइतिशुक्र वर्च्चाः । अनूनवर्च्चाऽइत्यनूंन वर्च्चाः । उत् । इयर्षि । भानुनां ॥ पुत्रः । मातरां । विचरन्नितिवि चरंन् । उपं । अवसि । पृणक्षि । रोदंसीऽइतिरोदंसी । उभेऽइत्युभे ॥९८॥

ऊर्ज्जंः । नपात् । जातवेदऽइतिजात वेदः । सुश-

---

इषम् ॥९६॥

अग्ने । बृहद्भानोऽइतिबृहंत् भानो । उक्थ्यम् ॥९७॥

शुक्रवर्च्चाऽइतिशुक्र वर्च्चाः । अनूनवर्च्चाऽइत्यनूंन वर्च्चाः । पुत्रः । पृणक्षि । उभेऽइत्युभे ॥९८॥

---

योनिम् ॥९६॥

वयंः । अर्चयंः । विभावसोऽइतिवि[1] । भा वसो ॥९७॥

पावकवर्च्चाऽइतिपावक वर्च्चाः । शुक्रवर्च्चाऽइतिशुक्र वर्च्चाः अनूनवर्च्चाऽइत्यनूंन वर्च्चाः । इयर्षि । विचरन्नितिवि चरंन् ॥९८॥

---

१. अस्थानेऽयं पूर्णविरामः, संयुक्तपाठेनात्र भाव्यम् ।

स्तिभिरितिऽसुशस्ति भिः । मन्दस्व । धीतिभिरितिधीति भिः । हितः ॥ त्वेऽइतित्वे । इषः । सम् । दधुः । भूरिवर्प्पसऽइतिभूरि वर्प्पसः । चित्रोतयऽइतिचित्र ऊतयः । वामजाताऽइतिवाम जाताः ॥९९॥

इरज्ज्यन् । अग्ने । प्रथयस्व । जन्तुभिरितिजन्तु भिः । अस्म्मेऽइत्त्यस्म्मे । रायः । अमर्त्त्य ॥ सः । दर्शतस्य । वपुषः । वि । राजसि । पृणक्षि । सानसिम् । क्रतुम् ॥१००॥

इष्ककर्त्तारम् । अध्वरस्य । प्रचेतसमितिप्प्र चेतसम् । क्षयन्तम् । राधसः । महः ॥ रातिम् । वामस्य । सुभगामितिसु भगाम् । महीम् । इषम् । दधासि । सानसिम् । रयिम् ॥१०१॥

ऋतावानम् । ऋतवानमित्त्यृत वानम् । महिषम् । विश्वदर्शतमितिविश्व दर्शतम् । अग्निम् । सुम्म्नाय । दधिरे ।

---

त्वेऽइतित्वे । चित्रोतयऽइतिचित्र ऊतयः ॥९९॥

इरज्यन् । अग्ने । अस्मेऽइत्यस्मे । पृणक्षि ॥१००॥

इष्कर्त्तारम् । अध्वरस्य । प्रचेतसमितिप्र चेतसम् ॥१०१॥

ऋतवानमित्यृत व्वानम् । विश्वदर्शतमितिविश्व दर्शतम् । अग्निम् ।

---

जातवेदऽइतिजात वेदः । भूरिवर्प्पसऽइतिभूरि वर्पसः । चित्रोतयऽइतिचित्र ऊतयः । वामजाताऽइतिवाम जाताः ॥९९॥

प्रथयस्व । जन्तुभिरितिजन्तु भिः । रायः ॥१००॥

क्षयन्तम् । रयिम् ॥१०१॥

[1] ऋतावानमित्यृत वानम् । विश्वदर्शतऽमितिविश्व दर्शतम् । सुम्नाय ।

---

१. इह 'ऋतवान०' इति शुद्धः पाठो ज्ञेयः ।

पुरः। जनाः ॥ श्रुत्कर्णमितिश्रुत् कर्णम् । सप्रथस्तम-मितिसप्रथः तमम् । त्वा । गिरा । दैव्यम् । मानुषा । युगा ॥१०२॥

आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् ॥ भव । वाजस्य । सङ्गथऽइतिसम् गथे ॥१०३॥

सम् । ते । पयांᳬसि । सम् । ॐऽइत्यूँ । यन्तु । वाजाः । वृष्ण्यानि । अभिमातिषाहः । अभिमातिसहऽइत्यभिमाति सहः ॥ आप्यायमानऽइत्या प्यायमानः । अमृताय । सोम । दिवि । श्रवांᳬसि । उत्तमानीत्युत् तमानि । धिष्व ॥१०४॥

आ । प्यायस्व । मदिन्तमेतिमदिन् तम । सोम ।

---

सुम्नाय । श्रुत्कर्णमितिश्रुत् कर्णम् । सप्रथस्तममितिसप्रथः तमम् । दैव्यम् ॥१०२॥

विश्वतः । वृष्ण्यम् ॥१०३॥

ॐऽइत्यूँ । वृष्ण्यानि । अभिमातिसहऽइत्यभिमाति सहः । आप्यायमानऽइत्या प्यायमानः । उत्तमानीत्युत् तमानि । धिष्व ॥१०४॥

---

युगा ॥१०२॥

प्यायस्व ॥१०३॥

पयांᳬसि । उंऽइत्यूम् । यन्तु । आप्यायमानऽइत्या प्यायमानः । अमृताय ॥१०४॥

विश्वेभिः । अंशुभिरित्यंशु भिः ॥ भव । नः । सप्रथस्तमऽइतिसप्रथः तमः । सखा । वृधे ॥१०५॥

आ । ते । वत्स । मनः । यमत् । परमात् । चित् । सधस्थादितिसध स्थात् ॥ अग्ने । त्वाङ्कामयेतित्वाम् कामया । गिरा ॥१०६॥

तुभ्यम् । ताः । अङ्गिरस्तमेत्यङ्गिरः तम । विश्वाः । सुक्षितयऽइतिसु क्षितयः । पृथक् ॥ अग्ने । कामाय । येमिरे ॥१०७॥

---

विश्वेभिः । अंशुभिरित्यंशु भिः । सप्रथस्तमऽइतिसप्रथः तमः ॥१०५॥

वत्स । सधस्थादितिसध स्थात् । अग्ने । त्वाङ्कामयेतित्वाम् कामया ॥१०६॥

तुभ्यम् । अङ्गिरस्तमेत्यङ्गिरः तम । विश्वाः । सुक्षितयऽइतिसु क्षितयः । अग्ने ॥१०७॥

---

प्यायस्व । [1]वृधे ॥१०५॥

[2]वत्स । यमत् । त्वाम्[3] । कामयेतित्वाम् कामया ॥१०६॥

सुक्षितयऽइतिसु क्षितयः । कामाय । येमिरे ॥१०७॥

---

१. कशैल्यनुसारमृकारपरस्य वकारस्य द्विर्लेखनं न युक्तम् ।

२. सकारपरस्य वर्गीयप्रथमाक्षरस्य द्वितीयापत्तिः कपाठे दृश्यते । परन्तु 'वत्सोत्स'शब्दयोर्द्वितीयापत्तिर्नोपलभ्यते (द्र० १२।१६, पृ० १८६ टि० ४) किमत्रकारणमिति न ज्ञायते ।

३. एकपदस्य मध्ये विच्छेदरूपोऽपपाठः ।

अ॒ग्निः॑ । प्रि॒येषु॑ । धाम॒स्विति॒धाम॑ सु । काम॑ः । भूतस्य॑ । भव्य॑स्य ॥ स॒म्म्राडिति॑स॒म् राट् । एक॑ः । वि । रा॒ज॒ति॒ ॥१०८॥

॥ इति वाजसनेयिसंहितापदे द्वादशोऽध्यायः ॥

---

अ॒ग्निः । भव्य॑स्य । स॒म्राडिति॑स॒म् राट् ॥१०८॥

---

प्रि॒येषु॑ । [1]स॒म्म्राडिति॑स॒म् राट् ॥१०८॥

॥ इति श्री वाजसनेयिसंहितापदे द्वादशमो[2]ऽध्यायः ॥



---

१. द्रष्टव्याः पूर्वत्र ३७, ६६, ११६, १३६, १३७ पृष्ठेषु यथास्थानं टिप्पण्यः ।

२. द्र० पृष्ठ १७९ टि० १ । पाणिनिनाऽविहितोऽपि मुडागमः प्राचीनेषु प्रयोगेषूपलभ्यते ।

# त्रयोदशोऽध्यायः

मयि । गृह्णामि । अग्रे । अग्निम् । रायः । पोषाय । सुप्रजास्त्वायेतिसुप्रजाःत्वाय । सुवीर्य्यायेतिसु वीर्य्याय ॥ माम् । ऊँऽइत्यूँ । देवताः । सचन्ताम् ॥१॥

ब्रह्म । जज्ञानम् । प्रथमम् । पुरस्तात् । वि । सीमतः । सुरुचऽइतिसु रुचः । वेनः । आवरित्यावः ॥ सः । बुध्न्याः । उपमाऽइत्युप माः । अस्य । विष्ठाः । विस्थाऽइतिवि स्थाः । सतः । च । योनिम् । असतः । च । वि । वरितिवः ॥२॥

हिरण्यगर्भऽइतिहिरण्य गर्भः । सम् । अवर्त्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ॥ सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् ॥३॥

---

गृह्णामि । अग्रे । अग्निम् । सुप्रजास्त्वायेतिसुप्रजाः त्वाय । ऊँऽइत्यूँ ॥१॥

ब्रह्म । जज्ञानम् । आवरित्यावः । बुध्न्याः । उपमाऽइत्युप माः । विष्ठाः । विस्थाऽइतिवि स्थाः ॥२॥

हिरण्यगर्भऽइतिहिरण्य गर्भः । अग्रे ॥३॥

---

मयि । रायः । पोषाय । सुप्रजास्त्वायेतिसुप्रजाः त्वाय । सुवीर्य्यायेतिसु वीर्य्याय । ऊंऽइत्यूम् ॥१॥

[1]विस्थाऽइतिवि स्थाः । योनिम् ॥२॥

---

१. इमः पूर्वस्याः काण्डकाया पूर्वं गतत्वान्नेह पदानि पदपाठे पठ्यन्ते । अत इत आरभ्यैकस्याः मन्त्रकण्डिकासंख्याया भेदो ज्ञेयः ।

द्रप्सः । चस्कन्द । पृथिवीम् । अनु । द्याम् । इमम् । च । योनिम् । अनु । यः । च । पूर्वः ॥ समानम् । योनिम् । अनु । सञ्चरन्तमितिसम् चरन्तम् । द्रप्सम् । जुहोमि । अनु । सप्त । होत्राः ॥४॥

नमः । अस्तु । सर्प्पेभ्यः । ये । के । च । पृथिवीम् । अनु । ये । अन्तरिक्क्षे । ये । दिवि । तेभ्यः । सर्प्पेभ्यः । नमः ॥५॥

याः । इषवः । यातुधानानामितियातु धानानाम् । ये । वा । वनस्प्पतीन् । अनु ॥ ये । वा । अवटेषु । शेरते ॥६॥

ये । वा । अमीऽइत्यमी । रोचने । दिवः । ये । वा । सूर्य्यस्य । रश्मिषु ॥ येषाम् । अप्स्वित्यप् सु । सदः । कृतम् ॥७॥

---

द्रप्सः । चस्कन्द । द्रप्सम् । सप्त । होत्राः ॥४॥
अस्तु । सर्प्पेभ्यः अन्तरिक्षे । तेभ्यः । सर्प्पेभ्यः ॥५॥
वनस्पतीन् ॥६॥
अमीऽइत्यमी । रश्मिषु । अप्स्वित्यप् सु ॥७॥

---

य्योनिम् । य्यः । य्योनिम् ॥४॥
य्ये । य्ये । य्ये ॥५॥
य्याः । य्यातुधानानामितिय्यातु[1] धानानाम् । य्ये । [2]वा । य्ये । वा ॥६॥
य्ये । वा । य्ये । वा । य्येषाम् ॥७॥

---

१: अपपाठोऽयम्, '०य्यातु' इति शुद्धः पाठो ज्ञेयः ।

२. ककोशे 'वः वा वै' पदेषु संहितावदेव लघुवकारो ज्ञेयः । अग्रेप्येवमेव द्रष्टव्यम् ।

कृणुष्व । पाजः । प्रसितिमितिप्र सितिम् । न । पृथ्वीम् । याहि । राजेवेतिराजा इव । अमवानित्यम वान् । इभेन ॥ तृष्वीम् । अनु । प्रसितिमितिप्र सितिम् । द्रूणानः । अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥८॥

तव । भ्रमासः । आशुयेत्याशु या । पतन्ति । अनु । स्पृश । धृषता । शोशुचानः । तपूंषि । अग्ने । जुह्वा । पतङ्गान् । असन्दितऽइत्यसम् दितः । वि । सृज । विष्वक् । उल्काः ॥९॥

प्रति । स्पशः । वि । सृज । तूर्णितमऽइतितूर्णि तमः । भव । पायुः । विशः । अस्याः । अदब्धः ॥ यः । नः । दूरे । अघशंसऽइत्यघ शंसः । यः । अन्ति । अग्ने । माकिः । ते । व्यथिः । आ । दधर्षीत् ॥१०॥

---

कृणुष्व । प्रसितिमितिप्र सितिम् । पृथ्वीम् । अमवानित्यम वान् । तृष्वीम् । प्रासितिमितिप्र सितिम् । विध्य । रक्षसः । तपिष्ठैः ॥८॥

आशुयेत्याशु या । अग्ने । जुह्वा । असन्दितऽइत्यसम् दितः । विष्वक् । उल्काः ॥९॥

अदब्धः । अघशंसऽइत्यघ शंसः । अग्ने ॥१०॥

---

य्याहि । अमवानित्यम वान् ॥८॥

आशुय्नेत्याशु [1]य्या ॥९॥

पायुः । व्यः । व्यः । [2]व्यथः ॥१०॥

---

१. ककोशशैल्यनुसारमिह 'य्ना' इत्येवं शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयं, पाठान्तरं वेति विचार्यम् ।

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् । ओषतात् । तिग्महेतऽइतितिग्म हेते ॥ यः । नः । अरातिम् । समिधानेतिसम् इधान । चक्रे । नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥११॥

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने ॥ अव । स्थिरा । तनुहि । यातुजूनामितियातु जूनाम् । जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥ अग्नेः । त्वा । तेजसा । सादयामि ॥ इन्द्रस्य । त्वा । ओजसा । सादयामि ॥१२॥

भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुद्भिरितिनियुत् भिः । सचसे । शिवाभिः ॥ दिवि ।

---

अग्ने । तिष्ठ । तनुष्व । अमित्रान् । तिग्महेतऽइतितिग्म हेते । चक्रे । धक्षि । शुष्कम् ॥११॥

ऊर्ध्वः । विध्य । अस्मत् । कृणुष्व । दैव्यानि । अग्ने । शत्रून् । अग्नेः ॥१२॥

यज्ञस्य । यत्र । नियुद्भिरितिनियुत् भिः । जिह्वाम् । अग्ने ।

---

ध्यः ॥११॥

[1]ध्यातुजुनामितिय्यातु जूनाम् । सादय्यामि ॥१२॥

[2]य्यज्ञस्य । य्यत्र । नियुद्भिरितिनियुत् भिः । हव्यवाहमितिहव्य

---

१. अपपाठोऽयम्, 'ध्यातुजूनामितिध्यातु' इति शुद्धः पाठो ज्ञेयः ।

२. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठचन्ते । अत इत आरभ्य द्वयोर्मन्त्रकण्डिकयोः संख्ययोर्भेदो ज्ञेयः ।

मूर्द्धानम् । दधिषे । स्वर्षाम् । स्वःसामितिस्वः साम् । जिह्वाम् । अग्ने । चकृषे । हव्यवाहमितिंहव्य वाहम् ॥१३॥

ध्रुवा । असि । धरुणा । आस्तृतेत्या स्तृता । विश्वकर्म्मणेतिविश्व कर्म्मणा ॥ मा । त्वा । समुद्रः । उत् । वधीत् । मा । सुपर्णऽइतिंसु पर्णः । अव्यथमाना । पृथिवीम् । दृꣳह ॥१४॥

प्रजापतिरितिप्रजा पतिः । त्वा । सादयतु । अपाम् । पृष्ठे । समुद्रस्य । एमन् ॥ व्यचस्वतीम् । प्रथस्वतीम् । प्रथस्व । पृथिवी । असि ॥१५॥

भूः । भूमिः । अदितिः । विश्वधायाऽइतिविश्व धायाः । विश्वस्य । भुवनस्य । धर्त्री ॥ पृथिवीम् । यच्छ । दृꣳह । मा । हिꣳसीः ॥१६॥

---

हव्यवाहमितिहव्य वाहम् ॥१३॥

आस्तृतेत्या स्तृता । विश्वकर्म्मणेतिविश्व कर्म्मणा । समुद्रः । अव्यथमाना ॥१४॥

प्रजापतिरितिप्रजा पतिः । पृष्ठे । समुद्रस्य ॥१५॥

विश्वधायाऽइतिविश्व धायाः । विश्वस्य । धर्त्री । यच्छ ॥१६॥

---

वाहम् ॥१३॥

विश्वकर्म्मणेतिविश्व कर्म्मणा । [1]वधीत् ॥१४॥

सादयतु । व्यचस्वतीम् ॥१५॥

विश्वधायाऽइतिविश्व धायाः । यच्छ ॥१६॥

---

१. अपपाठोऽयं स्यात् ।

विश्वस्मै । प्राणाय । अपानायेत्यप आनाय । व्यानायेतिवि आनाय । उदानायेत्युत् आनाय । प्रतिष्ठायै । प्रतिस्थायाऽइतिप्रति स्थायै । चरित्राय ॥ अग्निः । त्वा । अभि । पातु । मह्या । स्वस्त्या । छर्दिषा । शन्तमेनेतिशम् तमेन ॥१७॥

काण्डात्काण्डादितिकाण्डात् काण्डात् । प्ररोहन्तीतिप्र रोहन्ती । परुषःपरुषऽइतिपरुषः परुषः । परि ॥ एव । नः । दूर्वे । प्र । तनु । सहस्रेण । शतेन । च ॥१८॥

या । शतेन । प्रतनोषीतिप्र तनोषि । सहस्रेण । विरोहसीतिवि रोहसि ॥ तस्याः । ते । देवि । इष्टके । विधेम । हविषा । वयम् ॥१९॥

याः । ते । अग्ने । सूर्ये । रुचः । दिवम् । आतन्वन्तीत्या तन्वन्ति । रश्मिभिरितिरश्मि भिः ॥

---

विश्वस्मै । अपानायेत्यप आनाय । उदानायेत्युत् आनाय । प्रतिष्ठायै । प्रतिस्थायाऽइतिप्रति स्थायै । चरित्राय । अग्निः ॥१७॥

काण्डात्काण्डादितिकाण्डात् काण्डात् । प्ररोहन्तीतिप्र रोहन्ती ॥१८॥

प्रतनोषीतिप्र तनोषि । इष्टके ॥१९॥

अग्ने । आतन्वन्तीत्या तन्वन्ति । रश्मिभिरितिरश्मि भिः ॥२०॥

---

प्राणाय । अपानायेत्यप आनाय । व्यानायेतिवि आनाय । उदानायेत्युत् आनाय । प्रतिष्ठायै । प्रतिस्थायाऽइतिप्रति स्थायै । चरित्राय । मह्या ॥१७॥

या? । विरोहसीतिवि रोहसि । वयम् ॥१९॥

या? । सूर्यै । जनाय ॥२०॥

ताभि॑÷ । नः॑ । अ॒द्य । सर्वा॑भिः॑ । रु॒चे । जना॑य । नः॑ । कृ॒धि ॥२०॥

या॒ः । वः॑ । दे॒वाः॑ । सूर्ये॑ । रुच॑÷ । गोषु॑ । अश्वे॑षु । या॒ः । रुच॑÷ ॥ इन्द्रा॑ग्नीऽइतीन्द्रा॑ग्नी । ताभि॑÷ । सर्वा॑भिः॑ । रुच॑म् । नः॑ । ध॒त्त । बृ॒ह॒स्प॒ते ॥२१॥

वि॒राडिति॑वि राट् । ज्योति॑÷ । अ॒धा॒र॒य॒त् । स्व॒रा-डिति॑स्व राट् । ज्योति॑÷ । अ॒धा॒र॒य॒त् ॥ पृ॒ष्ठे । पृ॒थि॒व्याः॒ । ज्योति॑ष्मतीम् ॥ वि॒श्वा॑म् । ज्योति॑÷ । य॒च्छ ॥ अ॒ग्निः॒ । ते॒ । अधि॑पति॒रित्यधि॑ पतिः॑ ॥२२॥

मधु॑÷ । च॒ । माध॑वः॑ । च॒ । वा॒स॑न्तिकौ । ऋ॒तू॒-ऽइत्यृ॒तू । अ॒ग्नेः॒ । अ॒न्तः॒श्ले॒षऽइत्य॑न्तः॑ श्ले॒षः॒ । अ॒सि । कल्पे॑ताम् । द्यावा॑पृथि॒वीऽइति॒द्यावा॑पृथि॒वी । कल्प॑न्ताम् ।

---

अश्वे॑षु । इन्द्रा॑ग्नीऽइतीन्द्रा॑ग्नी । बृ॒ह॒स्प॒ते ॥२१॥

पृ॒ष्ठे । पृ॒थि॒व्याः॒ । ज्योति॑ष्मतीम् । वि॒श्वा॑म् । य॒च्छ । अ॒ग्निः॒ । अधि॑पति॒-रित्यधि॑ पतिः॑ ॥२२॥

ऋ॒तू॒ऽइत्यृ॒तू । अ॒ग्नेः॒ । अ॒न्तः॒श्ले॒षऽइत्य॑न्तः॑ श्ले॒षः॒ । कल्पे॑ताम् ।

---

य्याः॒ । वः॑ । सूर्ये॑ । य्याः॒ ॥२१॥

वि॒राडिति॑वि राट् । अ॒धा॒र॒य॒त् । अ॒धा॒र॒य॒त् । [1]द्योति॑÷ । य्य॒च्छ ॥२२॥

---

१. लेखकप्रमादजोऽपपाठः । अस्मिन्नेव मन्त्रे पूर्वत्र 'ज्योति॑÷' इत्येवं साधु निर्दिश्यते ।

आपः । ओषधयः । कल्पन्ताम् । अग्नयः । पृथक् । मम । ज्यैष्ठ्याय । सव्रताऽइतिसव्रताः ॥ ये । अग्नयः । समनसऽइतिसमनसः । अन्तरा । द्यावापृथिवीऽइतिद्यावापृथिवी । इमेऽइतीमे ॥ वासन्तिकौ । ऋतूऽइत्यृतू । अभिकल्पमानाऽइत्यभि कल्पमानाः । इन्द्रमिवेतीन्द्रम् इव । देवाः । अभिसँविशन्त्वित्यभि सँविशन्तु । ध्रुवेऽइतिद्ध्रुवे । सीदतम् ॥२३॥

अषाढा । असि । सहमाना । सहस्व । अरातीः । सहस्व । पृतनायतऽइतिपृतनायतः ॥ सहस्रवीर्य्येतिसहस्र वीर्य्या । असि । सा । मा । जिन्व ॥२४॥

---

द्यावापृथिवीऽइतिद्यावापृथिवी । कल्पन्ताम् । कल्पन्ताम् । अग्नयः । ज्यैष्ठ्याय । अग्नयः । द्यावापृथिवीऽइतिद्यावापृथिवी । ऋतूऽइत्यृतू । अभिकल्पमानाऽइत्यभि कल्पमानाः । अभिसँविशन्त्वित्यभि सँविशन्तु ॥२३॥

जिन्व ॥२४॥

---

[1]कल्पेताम् । ओषधयः । [1]कल्पेताम् । अग्नयः । [2]ग्रैष्ठ्याय । सव्रताऽइतिस व्रताः । य्ये । अग्नयः । [3]अभिसम्बिशन्त्वित्यभि सम्बिशन्तु ॥२३॥

पृतनायतऽ[4]इतिपृतना य्यतः । सहस्रवीर्य्येतिसहस्र वीर्य्या ॥२४॥

---

१. अपपाठोऽयं लेखकप्रमादजः । 'कल्पन्ताम्' इति पाठेन भाव्यम् ।

२. अयमपि लेखकप्रमादजोऽपपाठः । 'ज्यैष्ठ्याय' इति भाव्यम् ।

३. अपपाठोऽयम्, 'अभिसँविशन्त्वित्यभि सँविशन्तु' इति शुद्धः पाठो ज्ञेयः ।

४. अपपाठोऽयम्, 'इतिपृतना यतः' इत्येवं पाठेन भाव्यम् ।

मधु । वाताः । ऋतायते । ऋतयतऽइत्यृत यते । मधु । क्षरन्ति । सिन्धवः ॥ माध्वीः । नः । सन्तु । ओषधीः ॥२५॥

मधु । नक्तम् । उत । उषसः । मधुमदिति मधु मत् । पार्थिवम् । रजः ॥ मधु । द्यौः । अस्तु । नः । पिता ॥२६॥

मधुमानिति मधु मान् । नः । वनस्पतिः । मधुमानिति मधु मान् । अस्तु । सूर्य्यः ॥ माध्वीः । गावः । भवन्तु । नः ॥२७॥

अपाम् । गम्भन् । सीद । मा । त्वा । सूर्य्यः । अभि । ताप्सीत् । मा । अग्निः । वैश्वानरः ॥ अच्छिन्नपत्राऽइत्यच्छिन्न पत्राः । प्रजाऽइतिप्र जाः । अनुवीक्षस्वेत्यनु वीक्षस्व । अनु । त्वा । दिव्या । वृष्टिः । सचताम् ॥२८॥

---

ऋतयतऽइत्यृत यते । माध्वीः ॥२५॥

नक्तम् । पार्थिवम् ॥२६॥

वनस्पतिः । माध्वीः ॥२७॥

ताप्सीत् । अग्निः । वैश्वानरः । अच्छिन्नपत्राऽइत्यच्छिन्न पत्राः । प्रजाऽइतिप्र जाः । अनुवीक्षस्वेत्यनु वीक्षस्व । दिव्या । वृष्टिः ॥२८॥

---

ऋतायते । ऋतयतऽइत्यृत [1]यते ॥२५॥

सूर्यः ॥२७॥

सूर्यः । [2]ताप्सीत् । अनुवीक्षस्वेत्यनु वीक्षस्व ॥२८॥

---

१. कशैल्यनुसारं 'यते' इत्येवं पाठेन भाव्यम् ।

२. अत्र सकारे परतो वर्गीयप्रथमस्य द्वित्वापत्तिः 'उत्स-वत्स' (पृष्ठ १८६ टि० ४) इव न दृश्यते, कारणं मृग्यम् । बम्बईमुद्रिते 'ताप्प्सीत्' इति दृश्यते ।

त्रीन् । समुद्रान् । सम् । असृपत् । स्वर्गानितिस्वःऽगान् । अपाम् । पतिः । वृषभः । इष्टकानाम् ॥ पुरीषम् । वसानः । सुकृतस्येतिसुऽकृतस्य । लोके । तत्र । गच्छ । यत्र । पूर्वे । परेताऽइतिपराऽइताः ॥२९॥

इतः । जज्ञे । प्रथमम् । एभ्यः । योनिभ्यऽइतियोनिऽभ्यः । अधि । जातवेदाऽइतिजातऽवेदाः ॥ सः । गायत्र्या । त्रिष्टुभा । त्रिस्तुभेतित्रिऽस्तुभा । अनुष्टुभा । अनुस्तुभेत्यनुऽस्तुभा । च । देवेभ्यः । हव्यम् । वहतु । प्रजानन्नितिप्रऽजानन् ॥३०॥

इषे । राये । रमस्व । सहसे । द्युम्ने । ऊर्जे । अपत्याय ॥ सम्राडितिसम्ऽराट् । असि । स्वराडितिस्वऽराट् । असि । सारस्वतौ । त्वा । उत्सौ । प्र । अवताम् ॥३१॥

---

समुद्रान् । इष्टकानाम् । तत्र । गछ । यत्व ॥२९॥

जज्ञे । एभ्यः । योनिभ्यऽइतियोनिऽभ्यः । गायत्र्या । त्रिष्टुभा । त्रिस्तुभेतित्रिऽस्तुभा । अनुष्टुभा । अनस्तुभेत्यनुऽस्तुभा । देवेभ्यः । हव्यम् । प्रजानन्नितिप्रऽजानन् ॥३०॥

द्युम्ने । अपत्याय । सम्राडितिसम्ऽराट् । उत्सौ ॥३१॥

---

य्यत्र ॥२९॥

[1]य्योनिभ्यऽइति य्योनिऽभ्यः । जातवेदाऽइतिजातऽवेदाः । गायत्र्या ॥३०॥

राय्ये । अपत्याय्य । [2]सम्म्राडितिसम्ऽराट् । [3]उत्सौ ॥३१॥

---

१. इतः पूर्वयोर्द्वयोर्मन्त्रकण्डियोः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठयन्ते । अत इत आरम्य चतसृणां कण्डिकासंख्यानां भेदो ज्ञेयः ।

२. द्र० पूर्वं पृष्ठ ३७ टि० १ ।

३. द्र० पूर्वं पृष्ठ १८६ टि० ४ । बम्बईमुद्रिते तु 'उत्थ्सौ' दृश्यते ।

अग्ग्नें । युक्क्ष्व । हि । ये । तवं । अश्श्वासंः । देव । साधवं᳖ ॥ अरंम् । वहंन्ति । मन्यवें ॥३२॥

युक्क्ष्व । हि । देवहूतमानितिंदेव हूतमान् । अश्श्वान् । अग्ग्ने । र्थीरिवेतिंरथीःऽइव ॥ नि । होता । पूर्व्यः । सदः ॥३३॥

सम्म्यक् । स्रवन्ति । सरितं᳖ । न । धेनाः । अन्तः । हृदा । मनंसा । पूयमानाः ॥ घृतस्यं । धाराः । अभि । चाकशीमि । हिरण्ययं᳖ । वेतसः । मद्ध्ये । अग्ग्नेः ॥३४॥

ऋचे । त्वा । रुचे । भासे । ज्योतिंषे ॥ अभूंत् । इदम् । विश्श्वंस्य । भुवंनस्य । वाजिंनम् । अग्ग्नेः । वैश्श्वानरस्यं । च ॥३५॥

अग्ग्निः । ज्योतिंषा । ज्योतिंष्म्मान् । रुक्क्मः । वर्चंसा ।

---

अग्ने । युक्ष्व । अश्वांस᳖ । मन्यवें ॥३२॥

युक्ष्व । अश्वान् । अग्ने ॥३३॥

सम्यक् । हिरण्ययं᳖ । मध्यें । अग्नेः ॥३४॥

विश्वंस्य । अग्नेः । वैश्वानरस्यं ॥३५॥

अग्निः । ज्योतिंष्मान् । रुक्मः ॥३६॥

---

व्युक्ष्व । व्ये ॥३२॥

व्युक्ष्व ॥३३॥

पूय्यमानाः । हिरण्ययं᳖ ॥३४॥

वर्चस्वान् ॥ सहस्रदाऽइतिसहस्र दाः । असि । सहस्राय । त्वा ॥३६॥

आदित्यम् । गर्भम् । पयसा । सम् । अङ्ग्ध । सहस्रस्य । प्रतिमामितिप्रति माम् । विश्वरूपमितिविश्व रूपम् ॥ परि । वृङ्ग्ध । हरसा । मा । अभि । मꣳस्थाः । शतायुषमितिशत आयुषम् । कृणुहि । चीयमानः ॥३७॥

वातस्य । जूतिम् । वरुणस्य । नाभिम् । अश्वम् । जज्ञानम् । सरिरस्य । मध्ये ॥ शिशुम् । नदीनाम् । हरिम् । अद्रिबुद्ध्नमित्यद्रि बुद्ध्नम् । अग्ने । मा । हिꣳसीः । परमे । व्योमन्नितिवि ओमन् ॥३८॥

अजस्रम् । इन्दुम् । अरुषम् । भुरण्युम् । अग्निम् ।

---

आदित्यम् । गर्भम् । अङ्ग्धि । प्रतिमामितिप्रति माम् । विश्वरूपमिति-विश्व रूपम् । वृङ्ग्धि । मꣳस्थाः ॥३७॥

अश्वम् । जज्ञानम् । मध्ये । अद्रिबुध्नमित्यद्रि बुध्नम् । अग्ने ॥३८॥

भुरण्युम् । अग्निम् । ऋतुशऽइत्यृतु शः । कल्पमानः ॥३९॥

---

सहस्राय ॥३६॥

पयसा । विश्वरूपमितिविश्व रूपम् । शतायुषमितिशत आयुषम् । चीयमानः ॥३७॥

व्योमन्नितिवि[1] ओमन् ॥३८॥

---

१. अत्र कर्मैल्यनुसारम् 'वि' इत्येवं शुद्धः पाठो ज्ञेयः ।

ई॒डे । पूर्व॑चि॒त्तिमि॒तिपूर्व॑ चि॑त्तिम् । नमो॑भि॒रि॒ति॒नम॑ः भि॑ः ॥
स॒ः । पर्व॑भि॒रि॒ति॒पर्व॑ भि॑ः । ऋ॒तु॒शऽइत्यृ॒तु श॒ः । कल्प॑-
मानः । गाम् । मा । हि॒ꣳसीः । अदि॑तिम् । वि॒राज॒मिति॑वि॒
राज॑म् ॥३९॥

व॒रू॑त्रीम् । त्वष्टुः॑ । वरु॑णस्य । नाभि॑म् । अवि॑म् ।
ज॒ज्ज्ञा॒नाम् । रज॑सः । पर॑स्म्मात् ॥ म॒हीम् । सा॒ह॒स्रीम् ।
असु॑रस्य । मा॒याम् ॥४०॥

य॒ः । अ॒ग्निः॒ । अ॒ग्नेः॒ । अधि॑ । अजा॑यत । शोका॑त् ।
पृ॒थि॒व्याः॒ । उ॒त । वा॒ । दि॒वः॒ । परि॑ ॥ येन॑ । प्र॒जाऽइति॑प्र॒
जाः॒ । वि॒श्वक॒र्म्मेति॑वि॒श्व कर्म्मा॑ । ज॒जान॑ । तम् । अ॒ग्ने॒ ।
हेडः॑ । परि॑ । ते॒ । वृ॒ण॒क्क्तु॒ ॥४१॥

---

व॒रू॑त्रीम् । त्वष्टुः॑ । ज॒ज्ञा॒नाम् । पर॑स्मात् ॥४०॥

अ॒ग्निः॒ । अ॒ग्नेः॒ । पृ॒थि॒व्याः॒ । प्र॒जाऽइति॑प्र जाः॒ । वि॒श्वक॒र्मेति॑वि॒श्व
कर्मा॑ । अ॒ग्ने॒ । वृ॒ण॒क्तु॒ ॥४१॥

---

[1] पू॒र्व॑चि॑त्त॒मिति॒पू॒र्व॑ चि॑त्तम् । ऋ॒तु॒शऽइत्यृ॒तु श॒ः । वि॒राज॒मिति॑वि॒
राज॑म् ॥३९॥

मा॒य्याम् ॥४०॥

य्य॒ः । अजा॑य्यत । य्येन॑ । वि॒श्वक॒र्म्मेति॑वि॒श्व कर्मा॑ ॥४१॥

---

१. ककोश एवायं पाठ उपलभ्यते । स्वरशास्त्रविरोधादयं पाठ-श्चिन्त्यः । क्तान्ते पाठ उत्तरपदान्तोदात्तत्वेन भाव्यम् (द्र० अष्टा० ६।२।१४५) । ककोशेऽन्यत्र (द्र० अ० १५ कं० १६; अ० २१, कं० ११, १२, ५३, ५४) सर्वत्र 'पूर्वचित्ति' पदमेव पठ्यते ।

इमम् । मा । हिꣳसीः । द्विपादमितिद्वि पादम् । पशुम् । सहस्राक्क्षऽइतिसहस्र अक्क्षः । मेधाय । चीयमानः ॥ मयुम् । पशुम् । मेधम् । अग्ने । जुषस्व । तेन । चिन्वानः । तन्वः । नि । सीद ॥ मयुम् । ते । शुक् । ऋच्छतु । यम् । द्विष्मः । तम् । ते । शुक् । ऋच्छतु ॥४२॥

एकशफमित्त्येक शफम् । कनिक्क्रदम् । वाजिनम् । वाजिनेषु ॥ गौरम् । आरण्यम् । अनु । ते । दिशामि ॥४३॥

साहस्रम् । शतधारमितिशत धारम् । उत्सम् । व्यच्यमानमितिवि अच्यमानम् । सरिरस्य । मद्ध्ये ॥ घृतम् । दुहानाम् । अदितिम् । जनाय ॥ गवयम् ॥४४॥

---

द्विपादमितिद्वि पादम् । सहस्राक्षऽइतिसहस्र अक्षः । अग्ने । चिन्वानः । तन्वः । ऋछतु । द्विष्मः । ऋछतु ॥४२॥

एकशफमित्येक शफम् । कनिक्रदम् । आरण्यम् ॥४३॥

उत्सम् । व्यच्यमानमितिवि अच्यमानम् । मध्ये ॥४४॥

---

[1]द्विपदमितिद्वि पदम् । मेधाय । चीयमानः । मयुम् । मयुम् ॥४२॥

[2]उत्सम् । जनाय । गवयम् ॥४४॥

---

१. ककोश एवायं पाठ उपलभ्यते । व्याकरणदृशा त्वत्र न पादः पद्भावः संभवति, तस्य भसंज्ञायां विधानात् । यदि स्वतन्त्रः पादशब्दसमानार्थकः पच्छब्द इष्येत हृच्छब्दवत् (द्र० हृद्विषये काशिका ६।३।५१) तर्ह्ययं पाठोऽपि साधुः स्यात् ।

२. द्र० पूर्वत्र पृष्ठ १८६ टि० ४ । 'उत्थ्सम्' इति बम्बईमुद्रिते पाठः ।

ऊर्ण्णायुम् । वरुणस्य । नाभिम् । त्वचम् । पशूनाम् । द्विपदामितिद्विद्वि पदाम् । चतुष्पदाम् । चतु÷पदामितिचतु÷ पदाम् ॥ त्वष्टुं÷ । प्रजानामितिप्प्र जानाम् । प्रथमम् । जनित्रम् । उष्ट्ट्रम् ॥४५॥

अजः । हि । अग्ग्नेः । अजनिष्ट्ट । शोकात् । सः । अपश्श्यत् । जनितारम् । अग्ग्ने ॥ तेन । देवाः । देवताम् । अग्ग्रम् । आयन् । तेन । रोहम् । आयन् । उप । मेद्ध्यासः । शरभम् ॥४६॥

त्वम् । यविष्ट्ठ । दाशुषं÷ । नॄन् । पाहि । शृणुधि । गिरं÷ ॥ रक्क्ष । तोकम् । उत । त्मना ॥४७॥

अपाम् । त्वा । एमन् । सादयामि । ओद्मन् । भस्म्मन् । ज्योतिंषि । अयने । अर्ण्णवे । सदने । समुद्रे ।

---

द्विपदामितिद्वि पदाम् । चतुष्पदाम् । त्वष्टुं÷ । प्रजानामितिप्र जानाम् । जनित्रम् । उष्ट्रम् ॥४५॥

अग्नेः । अजनिष्ट । अपश्यत् । अग्ने । अग्रम् । मेध्यासः ॥४६॥

यविष्ठ । रक्ष ॥४७॥

ओद्मन् । भस्मन् । समुद्रे । सधस्थऽइतिसध स्थे ।

---

ऊर्णायुम् ॥४५॥

आयन् । आयन् ॥४६॥

य्यविष्ठ । [1]नॄः ॥४७॥

सादयामि । [2]उद्मन् । अयने । क्षये । य्योनौ ॥४८॥

---

१. अपपाठोऽयं पाठान्तरं वेति विचारणीयम् । 'नॄन्' इत्यस्य 'नॄः' प्रयोगस्यापि छन्दसि सम्भवात् ।

२. अपपाठोऽयम् । 'ओद्मन्' इत्येवं पाठेन भाव्यम् ।

सरिरे । क्षये । सधिषि । सदने । सधस्त्थऽइतिसध स्थे । योनौ । पुरीषे । पार्थसि । पाङ्क्तेन ॥४८॥

अयम् । पुरः । भुवः । तस्य । प्राणः । भौवायन-ऽइतिभौव [1]आयनः । वसन्तः । प्राणायनऽइतिप्राण [1]आयनः । गायत्री । वासन्ती । गायत्र्यै । गायत्रम् । गायत्रात् । उपांशुरित्युप अंशुः । उपांशोरित्युप अंशोः । त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृतः । रथन्तरमितिरथम् तरम् । वसिष्ठः । ऋषिः । प्रजापति-गृहीतयेतिप्रजापति गृहीतया । त्वया । प्राणम् । गृह्णामि । प्रजाभ्यऽइतिप्र जाभ्यः ॥४९॥

दक्षिणा । विश्वकर्म्मेतिविश्व कर्म्मा । मनः । वैश्वकर्म्मणमितिवैश्व [2]कर्म्मणम् । ग्रीष्मः । मानसः ।

---

पाङ्क्तेन ॥४८॥

प्राणायनऽइतिप्राण आयनः । गायत्री । गायत्र्यै । गायत्रम् । गायत्रात् । उपांशुरित्युप अंशुः । उपांशोरित्युप अंशोः । त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृतः । वसिष्ठः । प्रजापतिगृहीतयेति-प्रजापति गृहीतया । गृह्णामि । प्रजाभ्यऽइतिप्र जाभ्यः ॥४९॥

दक्षिणा । विश्वकर्म्मेतिविश्व कर्मा । वैश्वकर्म्मणमितिवैश्व कर्मणम् ।

---

अयम् । भौवायनऽइतिभौव आयनः । प्राणायनऽइतिप्राण आयनः । गायत्री । गायत्र्यै । गायत्रम् । गायत्रात् । त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृतः । प्रजापतिगृहीतयेतिप्रजापति गृहीतया । त्वया ॥४९॥

विश्वकर्म्मेतिविश्व कर्म्मा । वैश्वकर्म्मणमितिवैश्व कर्म्मणम् । अन्तर्य्याम-

१. 'आयनः' इति काशिकः पाठः ।

२. 'कर्म्मणम्' इति काशिकः पाठः ।

त्रिष्टुप् । त्रिस्तुबितितित्रि स्तुप् । ग्रैष्म्मी । त्रिष्टुभ÷ । त्रिस्तुभऽइतितित्रि स्तुभ÷ । स्वारम् । स्वारात् । अन्तर्य्यामिऽइत्त्यन्तः यामः । अन्तर्य्यामादित्त्यन्तः यामात् । पञ्चदशऽइतिपञ्च दशः । पञ्चदशादितिपञ्च दशात् । बृहत् । भरद्द्वाजऽइतिभरत् वाजः । मनः ॥५०॥

पश्चात् । विश्श्वव्यचाऽइतिविश्श्व व्यचाः । चक्क्षुः । वैश्श्वव्यचसमितिवैश्श्व [1]व्यचसम् । वर्षाः । चाक्क्षुष्यः । जगती । वार्षी । जगत्त्याः । ऋक्क्समम्मित्त्यृक् समम् । ऋक्क्समादित्त्यृक् समात् । शुक्रः । शुक्रात् । सप्तदश-

---

ग्रीष्मः । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । ग्रैष्मी । त्रिष्टुभः । त्रिस्तुभऽइतित्रि स्तुभः । अन्तर्यामऽइत्यन्तः यामः । अन्तर्यामादित्यन्तः यामात् । भरद्वाजऽइतिभरत् वाजः ॥५०॥

पश्चात् । विश्वव्यचाऽइतिविश्व व्यचाः । चक्षुः । वैश्वव्यचसमितिवैश्व व्यचसम् । चाक्षुष्यः । जगत्याः । ऋक्समामित्यृक् समम् । ऋक्समादित्यृक् समात् । शुक्रः । शुक्रात् । सप्तदशऽइतिसप्त दशः । सप्तदशादितिसप्त

---

ऽइत्यन्तः [2]य्यामः । अन्तर्य्यामादित्यन्तः [3]य्यामात् । भरद्वाजऽइतिभरद् वाजः ॥५०॥

विश्वव्यचाऽइतिविश्व व्यचाः । वैश्वव्यचसमितिवैश्व व्यचसम् । [4]वर्षाः । [5]ऋक्समामित्यृक् समम् । [5]ऋक्समादित्यृक् समात् ।

---

१. 'व्यचसम्' इति काशिकः पाठः ।

२. ककोकाशैल्यनुसारमिह 'याम?' इति शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'यामात्' इति शुद्धः पाठो ज्ञेयः ।

४. अपपाठोऽयमेकवकारवान् । 'वर्षाः' इति पाठेन भाव्यम् ।

५. द्र० पूर्वत्र पृष्ठ ४५ टि० २ ।

ऽइतिसप्त दशः। सप्तदशादितिसप्त दशात्। वैरूपम्[1]।
जमदग्निरितिजमत् अग्निः। चक्षुः ॥५१॥

इदम्। उत्तरात्। स्वरितिस्वः। श्रोत्रम्। सौवम्[2]।
शरत्। श्रौत्री। अनुष्टुप्। अनुस्तुबित्यनु स्तुप्। शारदी।
अनुष्टुभः। अनुस्तुभऽइत्यनु स्तुभः। ऐडम्। ऐडात्।
मन्थी। मन्थिनः। एकविंशऽइत्येक विंशः। एकवि-
ंशादित्येक विंशात्। वैराजम्। विश्वामित्रः।
श्रोत्रम् ॥५२॥

इयम्। उपरि। मतिः। तस्यै। वाक्। मात्या।
हैमन्तः। वाच्यः। पङ्क्तिः। हैमन्ती[3]। पङ्क्त्यै। निधनवदिति-
निधन वत्। निधनवतऽइतिनिधन वतः। आग्रयणः।
आग्रयणात्। त्रिणवत्रयस्त्रिंशौ। त्रिनवत्रयस्त्रिंशाविति-

---

दशात्। जमदग्निरितिजमत् अग्निः। चक्षुः ॥५१॥

श्रोत्रम्। श्रौत्री। अनुष्टुप्। अनुस्तुबित्यनु स्तुप्। अनुष्टुभः।
अनुस्तुभऽइत्यनु स्तुभः। एकविंशऽइत्येक विंशः। एकविंशादित्येक
विंशात्। विश्वामित्रः। श्रोत्रम् ॥५२॥

मात्या। वाच्यः। आग्रयणः। आग्रयणात्। त्रिणवत्रयस्त्रिंशौ।

---

[1]वैरूपम् ॥५१॥

[2]शौवम् ॥५२॥

इयम्। [3]हैमम्। ती। निधनवदितिनिधन वत्। निधनवतऽइति-
निधन वतः। आग्रयणः। आग्रयणात्। त्रिणवत्रयस्त्रिंशौ। त्रिनवत्रयस्त्रिं-

१. अपपाठोऽयमेकवकारवान्। 'वैरूपम्' इति पाठेन भाव्यम्।

२. अपपाठोऽयं पाठान्तरं वेति चिन्त्यम्।

३. अपपाठोऽयमस्थानेऽवग्रहरूपः। 'हैमन्ती' इति साधुः पाठो ज्ञेयः।

त्रिनवत्त्रयस्त्रिꣳशौ। त्रिणवत्त्रयस्त्रिꣳशाभ्याम्। त्रिनवत्त्रयस्त्रिꣳशाभ्यामितित्रिनवत्त्रयस्त्रिꣳशाभ्याम्। शाक्वररैवते-ऽइतिशाक्वररैवते। विश्वकर्म्मेतिविश्व कर्म्मा। वाचम्॥ लोकम्। ताः। इन्द्रम्॥५३॥

॥ इति वाजसनेयिसंहितापदे त्रयोदशोऽध्यायः॥

---

त्रिनवत्रयस्त्रिꣳशाविर्तित्रिनवत्रयस्त्रिꣳशौ। त्रिणवत्रयस्त्रिꣳशाभ्याम्। त्रिनवत्रयस्त्रिꣳशाभ्यामितित्रिनवत्रयस्त्रिꣳशाभ्याम्। शाक्वररैवतेऽइतिशाक्वररैवते। विश्वकर्म्मेतिविश्व कर्म्मा॥५३॥

---

शावितित्रिनवत्रय्यस्त्रिꣳशौ। त्रिणवत्रय्यस्त्रिꣳशाभ्याम्। त्रिनवत्रय्यस्त्रि-ꣳशाभ्यामितित्रिनवत्रय्यस्त्रिꣳशाभ्याम्। विश्वकर्म्मेतिविश्व कर्म्मा॥५३॥

॥ इति श्रीवाजसनेयिसंहितापदे त्रयोदशमो[1]ऽध्यायः॥

●

---

१. द्र० पूर्वत्र पृष्ठ १७६ टि० १; पृष्ठ २१४ टि० २।

# चतुर्दशोऽध्यायः

ध्रुवक्क्षितिरितिध्रुवक्क्षितिः । ध्रुवयोनिरितिध्रुव योनिः । ध्रुवा । असि । ध्रुवम् । योनिम् । आ । सीद । साधुयेतिसाधु या ॥ उक्ख्यस्य । केतुम् । प्रथमम् । जुषाणा । अश्विना । अद्धर्य्यूऽइत्त्यद्धर्य्यू । सादयताम् । इह । त्वा ॥१॥

कुलायिनी । घृतवतीतिघृत वती । पुरन्धिरितिपुरम् धिः । स्योने । सीद । सदने । पृथिव्याः ॥ अभि । त्वा । रुद्राः । वसवः । गृणन्तु । इमा । ब्रह्म । पीपिहि । सौभगाय ॥२॥

स्वैः । दक्क्षैः । दक्क्षपितेतिदक्क्ष पिता । इह ।

---

ध्रुवक्षितिरितिध्रुव क्षितिः । ध्रुवयोनिरितिध्रुव योनिः । उख्यस्य । अश्विना । अध्वर्यूऽइत्यध्वर्यू ॥१॥

पृथिव्याः । रुद्राः । ब्रह्म ॥२॥

दक्षैः । दक्षपितेतिदक्ष पिता । सुम्ने । तन्वा ॥३॥

---

[1]ध्रुवय्योनिरितिध्रुव य्योनिः । य्योनिम् । साधुय्येतिसाधु [2]य्या । अध्वर्य्यूऽइत्यध्वर्य्यू । सादय्यताम् ॥१॥

कुलाय्यिनी । घृतवतीतिघृत वती । सौभगाय्य ॥२॥

---

१. अपपाठोऽयम्, कशैल्यनुसारं 'ध्रुवयोनिरितिध्रुव य्योनिः' इत्येवं पाठेन भाव्यम् ।

२. अपपाठोऽयम्, 'य्या' इत्येवं साधुना पाठेन भाव्यम् ।

सीद । देवानाम् । सुम्ने । बृहते । रणाय ॥ पितेवेतिपिता इव । एधि । सूनवे । आ । सुशेवेतिसु शेवा । स्वावेशेतिसु [1]आवेशा । तन्वा । सम् । विशस्व ॥३॥

पृथिव्याः । पुरीषम् । असि । अप्सः । नाम । ताम् । त्वा । विश्वे । अभि । गृणन्तु । देवाः ॥ स्तोमपृष्ठेतिस्तोम पृष्ठा । घृतवतीतिघृत वती । इह । सीद । प्रजावदितिप्रजा वत् । अस्मेऽइत्यस्मे । द्रविणा । आ । यजस्व ॥४॥

अदित्याः । त्वा । पृष्ठे । सादयामि । अन्तरिक्षस्य । धर्त्रीम् । विष्टम्भनीम् । दिशाम् । अधिपत्नीमित्यधि

---

पृथिव्याः । [2]अप्सः । विश्वे । स्तोमपृष्ठेतिस्तोम पृष्ठा । प्रजावदितिप्रजा वत् । अस्मेऽइत्यस्मे ॥४॥

अदित्याः । पृष्ठे । अन्तरिक्षस्य । धर्त्रीम् । विष्टम्भनीम् । [3]द्रप्सः ।

---

रणाय ॥३॥

[4]अप्सः । घृतवतीतिघृत वती । प्रजावदितिप्रजा वत् । यजस्व ॥४॥

सादयामि । [5]द्रप्सः । विश्वकर्मेतिविश्व कर्मा ॥५॥

---

१. 'आवेशा' इति काशिकः पाठः ।

२. मुम्बईमुद्रिते 'अप्फ्सः' इति द्वित्वं पकारस्य द्वितीयवर्णापत्तिश्च दृश्यते । एवमुत्तरमन्त्रे 'द्रप्फ्सः' इत्यत्रापि । १३।४ पदपाठे तु 'द्रप्सः द्रप्सम्' इत्यनयोः पकार एव श्रूयते ।

३. द्रष्टव्या पूर्वा १४।४ मुम्बईपाठस्था टिप्पणी २ ।

४. अत्र 'वत्सोत्स' वत् द्वितीयवर्णापत्तिर्न दृश्यते । द्र० पूर्वत्र पृष्ठ २१३ टि० २ ।

५. इहापि द्वितीयवर्णापत्तिर्न दृश्यते । द्र० पूर्वा १४।४ 'अप्सः' पदस्य टिप्पणी ४ ।

पत्नीम् । भुवनानाम् ॥ ऊर्म्मिः । द्रप्सः । अपाम् । असि । विश्वकर्म्मेतिविश्व कर्म्मा । ते । ऋषिः ॥ शुक्रः । शुचिः । ग्रैष्मौ ॥५॥

सजूरितिस जूः । ऋतुभिरित्यृतु भिः । विधाभिरितिविधा भिः । देवैः । देवैः । वयोनाधैरितिवयः नाधैः । अग्नये । त्वा । वैश्वानराय । वसुभिरितिवसु भिः । रुद्रैः । आदित्यैः । विश्वैः । देवैः ॥६॥

प्राणम् । मे । पाहि । अपानमित्यप आनम् । व्यानमितिवि आनम् । चक्षुः । उर्व्या । वि । भाहि । श्रोत्रम् । श्लोकय ॥ अपः । पिन्व । ओषधीः । जिन्व ।

---

विश्वकर्म्मेतिविश्व कर्म्मा । शुक्र? । ग्रैष्मौ ॥५॥

ऋतुभिरित्यृतु भिः । अग्नये । वैश्वानराय । रुद्रै? । आदित्यै? । विश्वैः ॥६॥

अपानमित्यप आनम् । चक्षुः । श्रोत्रम् । पिन्व । जिन्व ।

---

[1]विधाभिरितिविधा[1] भिः । वयोनाधैरितिवयः नाधै? । अग्नये । [2]वैश्वानराय । वसुभिरितिवसु[3] भिः ॥६॥

व्यानमितिवि[4] आनम् । [5]श्लोकाय । [6]इरय ॥७॥

---

१. कशैल्यनुसारमुभयत्र द्विवकारवता पाठेन भाव्यम् ।

२. इतः पूर्वमेकस्या मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पदपाठे पठ्यन्ते । अत इत आरभ्यैकस्यायाः कण्डिकासंख्याया भेदो द्रष्टव्यः ।

३. कशैल्यनुसारमिह '०वसु' इत्येवं पाठेन भाव्यम् ।

४. कशैल्यनुसारमिह 'वि' इत्येवं द्विवकारवता पाठेन भाव्यम् ।

५. अपपाठोऽयम्, 'श्लोकय' इति साधुपाठो ज्ञेयः ।

६. अपपाठोऽयम् 'ईरय' इत्येवं पाठेन भाव्यम् ।

द्विपादिति द्वि पात् । अव । चतुष्पात् । चतु÷पादितिचतु÷पात् । पाहि । दिवः । वृष्टिम् । आ । ईरय ॥७॥

मूर्द्धा । वयः । प्रजापतिरितिप्रजा पतिः । छन्दः । क्षत्रम् । मयन्दम् । विष्टम्भः । अधिपतिरित्यधि पतिः । विश्वकर्म्मेतिविश्व कर्म्मा । परमेष्ठी । परमेस्थीतिपरमे स्थी । वस्तः । विवलमितिवि वलम् । वृष्णिः । विशालमितिवि शालम् । पुरुषः । तन्द्रम् । व्याघ्रः । अनाधृष्टम् । सिंहः । छदिः । पष्ठवाडितिपष्ठ वाट् । बृहती । उक्षा । ककुप् । ऋषभः । सतोबृहतीतिसतः बृहती ॥८॥

अनड्वान् । पङ्क्तिः । धेनुः । जगती । त्र्यविरितित्रि अविः । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । दित्यवाडितिदित्य

---

द्विपादितिद्वि पात् । चतुष्पात् । वृष्टिम् ॥७॥

प्रजापतिरितिप्रजा पतिः । क्षत्रम् । विष्टम्भः । अधिपतिरित्यधि पतिः । विश्वकर्म्मेतिविश्व कर्म्मा । परमेष्ठी । परमेस्थीतिपरमे स्थी । वृष्णिः । व्याघ्रः । अनाधृष्टम् । पष्ठवाडितिपष्ठ वाट् । उक्षा ॥८॥

अनड्वान् । त्र्यविरितित्रि अविः । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् ।

---

वयः । मयन्दम् । विश्वकर्म्मेतिविश्व कर्म्मा । [1]विवलमितिवि [1]वलम् । विशालमितिवि[2] शालम् । पष्ठवाडितिपष्ठ वाट् ॥८॥

---

१. अत्रोभयत्र बकारपाठो लेखकप्रमादज उत पाठान्तरमिति विचारार्हम् । स्वामिदयानन्दोऽस्य (१४।९) मन्त्रस्य व्याख्याने 'विविधं बलं यस्मात्' इति व्याचक्षाणो बकारवन्तं पाठं स्वीकरोति । तथैव च तदीये पदपाठेऽपि दृश्यते ।

२. ककोघेत्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

वाट् । विराडितिवि राट् । पञ्चाविरितिपञ्च अविः । गायत्री । त्रिवत्सऽइतित्रि वत्सः । उष्णिक् । तुर्य्य-वाडितितुर्य्य वाट् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् ॥९॥

इन्द्राग्नीऽइतीन्द्राग्नी । अव्यथमानाम् । इष्टकाम् । दृंहुतम् । युवम् ॥ पृष्ठेन । द्यावापृथिवीऽइतिद्यावापृथिवी । अन्तरिक्षम् । च । वि । बाधसे ॥१०॥

विश्वकर्म्मेतिविश्व कर्म्मा । त्वा । सादयतु । अन्त-रिक्षस्य । अन्तरिक्षम् । वायुः ॥११॥

राज्ञी । असि । प्राची । दिक् । विराडितिवि राट् । दक्षिणा । सम्राडितिसम् राट् । प्रतीची । स्वराडितिस्व

---

दित्यवाडितिदित्य वाट् । गायत्री । त्रिवत्सऽइतित्रि वत्सः । उष्णिक् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् ॥९॥

इन्द्राग्नीऽइतीन्द्राग्नी । अव्यथमानाम् । इष्टकाम् । पृष्ठेन । द्यावापृथिवी-ऽइतिद्यावापृथिवी । अन्तरिक्षम् ॥१०॥

विश्वकर्म्मेतिविश्व कर्म्मा । अन्तरिक्षस्य । अन्तरिक्षम् ॥११॥

राज्ञी । दक्षिणा । सम्राडितिसम् राट् । अधिपत्नीत्यधि पत्नी ॥१२॥

---

दित्यवाडितिदित्य वाट् । विराडितिवि राट् । गायत्री । त्रिवत्स-[1] इतित्रि वत्सः । तुर्य्यवाडितितुर्य्य वाट् ॥९॥

उयुवम् ॥१०॥

[illegible]कर्म्मेतिविश्व कर्म्मा । सादयतु ॥११॥

[illegible]तिवि[2] राट् । [3]सम्[illegible]तिसम् राट् । [4]नभः ।

---

१. वत्सशब्दे द्वितीयवर्णापत्तिर्न दृश्यते । द्र० पृष्ठ २१३ टि० २ ।

२. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

३. द्र० पूर्वत्र पृष्ठ २१४ टि० १ ।

४. एतस्याः कण्डिकायास्त्रीण्येवापुनरुक्तानि पदानि पदपाठ एतस्यामेव कण्डिकायां पठितानि ।

राट् । उदीची । अधिपत्नीत्यधि पत्नी । बृहती ॥ नभः । नभस्यः । वार्षिकौ ॥ इषः । ऊर्जः । शारदौ ॥१२॥

आयुः । मे । पाहि । प्राणम् । अपानमित्यप आनम् । ब्यानमितिवि आनम् । चक्षुः । श्रोत्रम् । वाचम् । पिन्व । मनः । जिन्व । आत्मानम् । पाहि । ज्योतिः । यच्छ ॥१३॥

मा । छन्दः । प्रमेतिप्र मा । प्रतिमेतिप्रति मा । अस्त्रीवयः । पङ्क्तिः । उष्णिक् । बृहती । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । बिराडितिवि राट् । गायत्री । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् । जगती ॥१४॥

पृथिवी । अन्तरिक्षम् । द्यौः । समाः । नक्षत्राणि ।

---

अपानमित्यप आनम् । चक्षुः । श्रोत्रम् । पिन्व । जिन्व । आत्मानम् । यछ ॥१३॥

प्रमेतिप्र मा । प्रतिमेतिप्रति मा । उष्णिक् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । गायत्री । त्रिष्टुप् । त्रिस्तुबितित्रि स्तुप् ॥१४॥

अन्तरिक्षम् । नक्षत्राणि । हिरण्यम् । अश्वः ॥१५॥

---

[1]इषः ॥१२॥

आयुः । व्यानमितिवि[2] आनम् । व्यछ ॥१३॥

ब्विराडितिवि[3] राट् ॥१४॥

---

१. एतस्याः कण्डिकाया अपि त्रीण्येवापुनरुक्तानि पदानि पदपाठ एतस्यामेव कण्डिकायामन्ते पठितानि । अत इत उत्तरं चतसृणां मन्त्रकण्डिका-संख्यानां भेदो ज्ञेयः ।

२. ककोशशैल्यनुसारमिह 'ब्वि' इत्येवं पाठेन भाव्यम् ।

३. ककोशशैल्यनुसारमिह 'ब्वि' इत्येवं पाठेन भाव्यम् ।

वाक् । मनः । कृषिः । हिरण्यम् । गौः । अजा । अश्वः ॥१५॥

अग्निः । देवता । वातः । सूर्य्यः । चन्द्रमाः । वसवः । रुद्राः । आदित्याः । मरुतः । विश्वे । देवाः । बृहस्पतिः । इन्द्रः । वरुणः ॥१६॥

मूर्द्धा । असि । राट् । ध्रुवा । धरुणा । धर्त्री । धरणी ॥ आयुषे । त्वा । वर्चसे । कृष्यै । क्षेमाय ॥१७॥

यन्त्री । राट् । यन्त्री । यमनी । ध्रुवा । धरित्री ॥ इषे । ऊर्जे । रय्यै । पोषाय ॥१८॥

आशुः । त्रिवृदितित्रि वृत् । भान्तः । पञ्चदशऽइतिपञ्च दशः । व्योमेतिवि ओमा । सप्तदशऽइतिसप्त दशः । धरुणः । एकविंशऽइत्येक विंशः । प्रतूर्त्तिरितिप्र

---

अग्निः । रुद्राः । आदित्याः । विश्वे । बृहस्पतिः ॥१६॥

कृष्यै ॥१७॥

यन्त्री । यन्त्री । धरित्री ॥१८॥

त्रिवृदितित्रि वृत् । एकविंशऽइत्येक विंशः । प्रतूर्त्तिरितिप्र

---

सूर्य्यः ॥१६॥

आयुषे । क्षेमाय ॥१७॥

यन्त्री । यमनी । रय्यै । पोषाय ॥१८॥

त्रिवृदितित्रि वृत् । व्योमेतिवि[1] ओमा । अभिवर्त्तऽइत्यभि

---

१. ककोश्रुत्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

तूर्त्तिः । अष्टादशऽइत्त्यष्टा दश॒ । तपः । नवदश-ऽइतिनव दश॒ । अभीवर्त्त॒ । अभिवर्त्तऽइत्त्यभि ब्वर्त्त॒ । सविꣳशऽइतिस ब्विꣳश॒ । वर्च्चः । द्वाविꣳश॒ । सम्भरण-ऽइतिसम् भरणꣳ । त्रयोविꣳशऽइतित्त्रयꣳ ब्विꣳश॒ । योनिः । चतुर्व्विꣳशऽइतिचतुꣳ ब्विꣳश॒ । गर्ब्भाꣳ । पञ्चविꣳशऽइति-पञ्च ब्विꣳश॒ । ओजः । त्रिणव॒ । त्रिनवऽइतित्त्रि नव॒ । क्रतुः । एकत्त्रिꣳशऽइत्त्येक त्त्रिꣳश॒ । प्रतिष्ट्ठा । प्रतिस्त्थेतिप्प्रति स्था । त्रयस्त्त्रिꣳशऽइतित्त्रयꣳ त्त्रिꣳश॒ । ब्रद्ध्नस्य । ब्विष्टृपम् । चतुस्त्त्रिꣳशऽइतिचतुꣳ त्त्रिꣳश॒ । नाकः । षट्त्त्रिꣳशऽइतिषट् त्त्रिꣳश॒ । ब्विवर्त्तऽइतिव्वि ब्वर्त्त॒ । अष्टाचत्त्वारिꣳशऽइत्त्यष्टा [1]चत्त्वारिꣳश॒ । धर्त्रम् । चतुष्टोम॒ । चतुस्तोमऽइतिचतुꣳ स्तोम॒ ॥१९॥

अग्ग्ने॒ । भाग॒ । असि । दीक्क्षायाꣳ । आधिपत्त्य-मित्त्याधि पत्त्यम् । ब्रह्म । स्पृतम् । त्रिवृदितित्त्रि वृत् ।

---

तूर्त्तिः । अष्टादशऽइत्यष्टा दश? । अभिवर्त्तऽइत्यभि ब्वर्त्त? । त्रयोविꣳश-ऽइतित्रयꣳ विꣳश? । त्रिनवऽइतित्रि नव? । एकत्रिꣳशऽइत्येक त्रिꣳश? । प्रतिष्ठा । प्रतिस्थेतिप्रति स्था । त्रयस्त्रिꣳशऽइतित्रयꣳ त्रिꣳश? । ब्रध्नस्य । ब्विष्टपम् । चतुस्त्रिꣳशऽइतिचतुꣳ त्रिꣳश? । षट्त्रिꣳशऽइतिषट् त्रिꣳशꣳ । अष्टाचत्वारिꣳशऽइत्यष्टा चत्वारिꣳश? । चतुष्टोम? ॥१९॥

अग्ने? । दीक्षायाꣳ । आधिपत्यमित्याधि पत्यम् । ब्रह्म । त्रिवृदितित्रि

---

वर्त्त? । सविꣳशऽइतिस विꣳशꣳ । त्रयोविꣳशऽइतित्रयꣳ विꣳश? । चतुर्विꣳशऽइतिचतुꣳ विꣳश? । पञ्चविꣳशऽइतिपञ्च विꣳश? । त्रयस्त्रिꣳश-ऽइतित्रयꣳ त्रिꣳश? । ब्विवर्त्तऽइतिव्वि वर्त्त? ॥१९॥

दीक्षायाꣳ । त्रिवृदितित्रि वृत् । एकविꣳशऽइत्येक विꣳश? ॥२०॥

---

१. 'चत्त्वारिꣳश॒' इति काशिकः पाठः ।

स्तोमः । इन्द्रस्य । विष्णोः । क्षत्त्रम् । पञ्चदशऽइतिपञ्च दशः । नृचक्क्षसामितिनृ चक्क्षसाम् । धातुः । जनित्त्रम् । सप्तदशऽइतिसप्त दशः । मित्त्रस्य । वरुणस्य । दिवः । वृष्टिः । वातः । स्पृतः । एकविंशऽइत्येक विंशः ॥२०॥

वसूनाम् । रुद्राणाम् । चतुष्पात् । चतुःपादितिचतुः पात् । चतुर्विंशऽइतिचतुः विंशः । आदित्त्यानाम् । मरुताम् । गर्भाः । स्पृताः । पञ्चविंशऽइतिपञ्च विंशः । अदित्त्यै । पूष्णः । ओजः । त्रिणवः । त्रिनवऽइतित्रि नवः । देवस्य । सवितुः । बृहस्पतेः । समीचीः । दिशः । स्पृताः । चतुष्टोमः । चतुस्तोमऽइतिचतुः स्तोमः ॥२१॥

यवानाम् । अयवानाम् । प्रजाऽइतिप्र जाः । चतुश्चत्त्वारिंशऽइतिचतुः [1]चत्त्वारिंशः । ऋभूणाम् । विश्वे-

---

वृत् । विष्णोः । क्षत्रम् । जनित्रम् । सप्तदशऽइतिसप्त दशः । मित्रस्य । वृष्टिः । एकत्रिंशऽइत्येक त्रिंशः ॥२०॥

रुद्राणाम् । चतुष्पात् । आदित्यानाम् । अदित्यै । पूष्णः । त्रिनवऽइतित्रि नवः । बृहस्पतेः । चतुष्टोमः ॥२१॥

प्रजाऽइतिप्र जाः । चतुश्चत्वारिंशऽइतिचतुः चत्वारिंशः ।

---

चतुर्त्रिंशऽइतिचतुः त्रिंशः । पञ्चविंशऽइतिपञ्च विंशः । [2]आदित्यै ॥२१॥

यवानाम् । अयवानाम् । [3]सहः ॥२२॥

---

१. 'चत्वारिंशः' इति काशिकः पाठः ।

२. अपपाठोऽयं लेखकप्रमादजः, 'अदित्यै' इति साधुर्ज्ञेयः ।

३. इत आरभ्य पठितानि त्रीणि पदान्युत्तरस्याः कण्डिकाया इहैव पदपाठे पठितानि । अत इत आरभ्य पञ्चानां मन्त्रकण्डिकासंख्यानां भेदो ज्ञेयः ।

षाम् । देवानाम् । भूतम् । त्रयस्त्रिꣳशऽइतित्रयः त्रिꣳशः ॥
सहः । सहस्यः । हैमन्तिकौ ॥२२॥

एकया । अस्तुवत । प्रजाऽइतिप्र जाः । अधीयन्त ।
प्रजापतिरितिप्रजा पतिः । अधिपतिरित्यधि पतिः ।
आसीत् । तिसृभिरितितिसृ भिः । ब्रह्म । असृज्यत ।
ब्रह्मणः । पतिः । पञ्चभिरितिपञ्च भिः । भूतानि ।
असृज्यन्त । भूतानाम् । सप्तभिरितिसप्त भिः । सप्तऽऋषयऽइतिसप्त ऋषयः । धाता ॥२३॥

नवभिरितिनव भिः । पितरः । अदितिः । अधिपत्नीत्यधि पत्नी । एकादशभिरित्येकादश भिः ।
ऋतवः । आर्त्तवाः । अधिपतयऽइत्यधि पतयः । [illegible] ।
त्रयोदशभिरितित्रयोदश भिः । मासाः । संवत्सरः ।
पञ्चदशभिरितिपञ्चदश भिः । क्षत्रम् । इन्द्रः । सप्तदश-

---

विश्वेषाम् । त्रयस्त्रिꣳशऽइतित्रयः त्रिꣳशः ॥२२॥

प्रजाऽइतिप्र जाः । प्रजापतिरितिप्रजा पतिः । अधिपतिरित्यधि पतिः । ब्रह्म । असृज्यत । ब्रह्मणः । असृज्यन्त । सप्तभिरितिसप्त भिः । सप्तऽऋषयऽइतिसप्त ऋषयः ॥२३॥

अधिपत्नीत्यधि पत्नी । एकादशभिरित्येकादश भिः । अधिपतयऽइत्यधि पतयः । त्रयोदशभिरितित्रयोदश भिः । संवत्सरः क्षत्रम् । सप्तदशभिरितिसप्तदश भिः । ग्राम्याः । बृहस्पतिः ॥२४॥

---

एकया । अधीयन्त । सप्तऽऋषयऽइतिसप्त ऋषयः ॥२३॥

अधिपतयऽइत्यधि पतयः । त्रयोदशभिरितित्रयोदश भिः

भिरितिसप्तदश भिः । ग्राम्याः । पशवः । बृहस्पतिः ॥२४॥

नवदशभिरितिनवदश भिः । शूद्रार्यौ । असृज्येताम् । अहोरात्रेऽइत्यहोरात्रे । अधिपत्नीऽइत्यधि पत्नी । आस्ताम् । एकविंशत्येत्येक विंशत्या । एकशफाऽइत्येक शफाः । वरुणः । त्रयोविंशत्येतित्रयः विंशत्या । क्षुद्राः । पूषा । पञ्चविंशत्येतिपञ्च विंशत्या । आरण्याः । वायुः । सप्तविंशत्येतिसप्त विंशत्या । द्यावापृथिवीऽइतिद्यावापृथिवी । वि । ऐताम् । वसवः । रुद्राः । आदित्याः । अनुव्यायन्नित्यनु व्यायन् । ते । एव ॥२५॥

---

शूद्रार्यौ । असृज्येताम् । अहोरात्रेऽइत्यहोरात्रे । अधिपत्नीऽइत्यधि पत्नी । एकविंशत्येत्येक विंशत्या । एकशफाऽइत्येक शफाः । त्रयोविंशत्येतित्रयः विंशत्या । क्षुद्राः । पञ्चविंशत्येतिपञ्च विंशत्या । आरण्याः । सप्तविंशत्येतिसप्त विंशत्या । द्यावापृथिवीऽइतिद्यावापृथिवी । रुद्राः । आदित्याः । अनुव्यायन्नित्यनु व्यायन् ॥२५॥

---

[1]अधिपतयऽइत्यधि पतयः । [2]अधिपतयऽइत्यधि पतिः ॥२४॥

शूद्रार्यौ । एकविंशत्येत्येक विंशत्या । त्रयोविंशत्येतित्रयः विंशत्या । पञ्चविंशत्येतिपञ्च विंशत्या । वायुः । सप्तविंशत्येतिसप्त विंशत्या । अनुव्यायन्नित्यनु व्यायन् ॥२५॥

---

१. मन्त्रपाठे पुनः पठितं पदपाठे च परित्यक्तं पदमिह ककोशे बहुवचनान्तमशुद्धं पठ्यते, मन्त्र एकवचनान्तपाठो दृश्यते।

२. अत्रापि पूर्ववदपपाठः, इह तु इति करणात् पूर्वं बहुवचनान्तं पठ्यतेऽवग्रहादूत्तरं चैकवचनान्तम्।

नवविꣳशत्येतिनव विꣳशत्या । वनस्पतयꣳ । सोमः । एकत्रिꣳशतेत्येक त्रिꣳशता । प्रजाऽइतिप्र जाः । यवाः । च । अयवाꣳ । च । त्रयस्त्रिꣳशतेतित्रय त्रिꣳशता । भूतानि । अशाम्म्यन् । प्रजापतिरितिप्रजा पतिः । परमेष्ठी । परमेस्थीतिपरमे स्थी ॥२६॥

॥ इति वाजसनेयिसंहितापदे चतुर्दशोऽध्यायः ॥

---

नवविꣳशत्येतिनव विꣳशत्या । वनस्पतयꣳ । एकत्रिꣳशतेत्येक त्रिꣳशता । प्रजाऽइतिप्र जाः । त्रयस्त्रिꣳशतेतित्रय त्रिꣳशता । अशाम्म्यन् । प्रजापतिरितिप्रजा पतिः । परमेष्ठी । परमेस्थीतिपरमे स्थी ॥२६॥

---

नवविꣳशत्येतिनव विꣳशत्या । वनस्पतयꣳ । [1]अधिपतयऽइत्याधि पतयꣳ । यवाः । [2]अयवा । त्रयस्त्रिꣳशतेतित्रय त्रिꣳशता ॥२६॥

॥ इति श्रीवाजसनेयिसंहितापदे चतुर्दशमो[3]ऽध्यायः ॥

---

१. द्र० पूर्वत्र पृष्ठ २४४ टि० १ ।

२. अपपाठोऽयम्, 'अयवाꣳ' इति शुद्धेन पाठेन भाव्यम् ।

३. द्र० पूर्वत्र पृष्ठ २१४ टि० २ ।

# पञ्चदशोऽध्यायः

अग्ने । जातान् । प्र । नुद । नः । सपत्नानितिस पत्नान् । प्रति । अजातान् । नुद । जातवेदऽइतिजात वेदः ॥ अधि । नः । ब्रूहि । सुमनाऽइतिसु मनाः । अहेडन् । तव । स्याम । शर्म्मन् । त्रिवरूथऽइतित्रि वरूथे । उद्भा-विद्युत भौ ॥१॥

सहसा । जातान् । प्र । नुद । नः । सपत्नानितिस पत्नान् । प्रति । अजातान् । जातवेदऽइतिजात वेदः । नुदस्व ॥ अधि । नः । ब्रूहि । सुमनस्यमानऽइतिसु [1]मनस्यमानः ॥२॥

षोडशी । स्तोमः । ओजः । द्रविणम् । चतुश्चत्वारि-

---

अग्ने । सपत्नानितिस पत्नान् । त्रिवरूथऽइतित्रि वरूथे । उद्भा-विद्युत भौ ॥१॥

सपत्नानितिस पत्नान् ॥२॥

---

जातवेदऽइतिजात वेदः । त्रिवरूथऽइतित्रि वरूथे ॥१॥

जातवेदऽइतिजात वेदः ॥२॥

---

१. 'मनस्यमानः' इति काशिकः पाठः ।

४शऽइतिचतुः  [1]चत्वारिँशः । स्तोमः । वर्च्चः । द्रविणम् ॥ अग्नेः ॥३॥

एवः । छन्दः । वरिवः । शम्भूरितिशम् भूः । परिभूरितिपरि भूः । आच्छदित्या छत् । मनः । इयचः । सिन्धुः । समुद्रः । सरिरम् । ककुप् । त्रिककुबितित्रि ककुप् । काऽयम् । अङ्कुपम् । अक्कषरपङ्क्तिरित्यक्कषरं पङ्क्तिः । पदपङ्क्तिरितिपद पङ्क्तिः । विष्टारपङ्क्तिः । विस्तारपङ्क्तिरिति-विस्तार पङ्क्तिः । क्षुरः । भ्रजः ॥४॥

आच्छदित्या छत् । प्रच्छदितिप्र छत् । सय्यदिति-सम् यत् । वियदितिवि यत् । बृहत् । रथन्तरमितिरथम् तरम् । निकायऽइतिनि कायः । विवधऽइतिवि वधः ।

---

चतुश्चत्वारिँशऽइतिचतुः चत्वारिँशः । अग्नेः ॥३॥

आछदित्या छत् । समुद्रः । त्रिककुबितित्रि ककुप् । अक्षरपङ्क्तिरित्यक्षरं पङ्क्तिः । विष्टारपङ्क्तिः ॥४॥

आछदित्या छत् । प्रछदितिप्र छत् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् ।

---

[2]शम् । [2]भूः । [2]परिभूरितिभूः । [2]परि । विस्तारपङ्क्तिरितिविस्तार पङ्क्तिः ॥४॥

[3]संय्यदितिसम् य्यत् । विय्यदितिवि[4] य्यत् । निकायऽइतिनि

---

१. 'चत्वारिँशः' इति काशिकः पाठः ।

२. अपपाठोऽयं लेखकप्रमादजः । अत्र 'शम्भूरितिशम् भूः, परिभूरितिपरि भूः' इत्येवं शुद्धः पाठो ज्ञेयः ।

३. अपपाठोऽयम्, 'सय्यँदितिसम् यत्' इति शुद्धेन पाठेन भाव्यम् ।

४. अत्र इतिपदात् परं ककोशशैल्यनुसारं द्वित्वव्वकारेण भाव्यम् ।

गिरे÷ । भ्रजे÷ । सꣳस्तुबितिसम् स्तुप् । अनुष्टुप् । अनुस्तुबित्यनु स्तुप् । एवे÷ । वरिवꣳ । वये÷ । वयस्कृत् । वयꣳकृदितिवयꣳ कृत् । विष्पर्द्धाꣳ । विस्पर्द्धाऽइतिवि स्पर्द्धाꣳ । विशालमितिवि शालम् । छदि? । दूरोहणमितिदुꣳ [1]रोहणम् । तन्द्रम् । अङ्काङ्कमित्यङ्क अङ्कम् ॥५॥

रश्मिना । सत्याय । सत्यम् । जिन्व । प्रेतिनेतिप्र इतिना । धर्म्मणा । धर्म्मम् । अन्वित्येत्यनु इत्या । दिवा । दिवम् । सन्धिनेतिसम् धिना । अन्तरिक्क्षेण । अन्तरिक्क्षम् । प्रतिधिनेतिप्रति धिना । पृथिव्या । पृथिवीम् । विष्टम्भेन । वृष्ट्या । वृष्टिम् । प्रवयेतिप्र वया । अह्ना । अहः÷ । अनुयेत्यनु या । रात्र्या । रात्रीम् ।

---

विष्पर्द्धाꣳ । विस्पर्द्धाऽइतिवि स्पर्द्धाꣳ ॥५॥

रश्मिना । सत्याय । सत्यम् । जिन्व । प्रेतिनेतिप्र इतिना । अन्वित्येत्यनु इत्या । अन्तरिक्षेण । अन्तरिक्षम् । प्रतिधिनेतिप्रति धिना । पृथिव्या । विष्टम्भेन । वृष्ट्या । वृष्टिम् । प्रवयेतिप्र वया । अह्ना । अनुयेत्यनु या । रात्र्या । रात्रीम् । वसुभ्यऽइतिवसु भ्यꣳ । प्रकेतेनेतिप्र केतेन ।

---

काय? । विवधऽइतिवि[2] वध? । वय÷ । वयस्कृत् । वयꣳकृदितिवयꣳ कृत् । विस्पर्द्धाऽइतिवि[2] स्पर्द्धाꣳ । विशालमितिवि[2] शालम् ॥५॥

सत्याय । प्रवयेतिप्र वया । अनुयेत्यनु [3]या । वसुभ्यऽइतिवसु

1. 'रोहणम्' इति काशिकः पाठः ।
2. अत्र इतिपदात् परं ककोशशैल्यनुसारं द्वित्वव्वकारेण भाव्यम् ।
3. ककोशशैल्यनुसारमिह 'य्या' इत्येवं साधुः पाठः ।

उशिजा । वसुभ्य इतिवसु भ्यः । वसून् । प्रकेतेनेतिप्र केतेन । आदित्येभ्यः । आदित्यान् ॥६॥

तन्तुना । रायः । पोषेण । रायः । पोषम् । संसर्पेणेतिसम् सर्पेण । श्रुताय । श्रुतम् । ऐडेन । ओषधीभिः । ओषधीः । उत्तमेनेत्युत् तमेन । तनूभिः । तनूः । वयोधसेतिवयः धसा । आधीतेनेत्या धीतेन । आधीतमित्या धीतम् । अभिजितेत्यभि जिता । तेजसा । तेजः ॥७॥

प्रतिपदितिप्रति पत् । असि । प्रतिपद इतिप्रति पदे । त्वा । अनुपदित्यनु पत् । अनुपद इत्यनु पदे । सम्पदितिसम् पत् । सम्पद इतिसम् पदे । तेजः । तेजसे ॥८॥

आदित्येभ्यः । आदित्यान् ॥६॥

उत्तमेनेत्युत् तमेन । आधीतेनेत्या धीतेन । आधीतमित्या धीतम् । अभिजितेत्यभि जिता ॥७॥

प्रतिपदितिप्रति पत् । प्रतिपद इतिप्रति पदे । अनुपदित्यनु पत् । अनुपद इत्यनु पदे ॥८॥

---

भ्यः । [1]प्रकेतनेतिप्र केतना ॥६॥

राय? । राय? । श्रुताय । वयोधसेतिवयः धसा ॥७॥

[2]सम्पदितिसम् । [2]सम् । [2]पदे । [3]त्वा ॥८॥

---

१. अपपाठोऽयं पाठान्तरं वेति विचार्यम्, उभयथा सम्भवात् ।

२. अपपाठोऽयं लेखकप्रमादजः ।

३. अपपाठोऽयम्, 'त्वा' इति साधुः पाठो ज्ञेयः ।

त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृते । प्रवृदितिप्र वृत् । प्रवृतऽइतिप्र वृते । विवृदितिवि वृत् । विवृतऽइतिवि वृते । सवृदितिस वृत् । सवृतऽइतिस वृते । आक्रमऽइत्त्या क्रमः । आक्रमायेत्त्या क्रमाय । सङ्क्रमऽइतिसम् क्रमः । सङ्क्रमायेतिसम् क्रमाय । उत्क्रमऽइत्त्युत् क्रमः । उत्क्रमायेत्त्युत् क्रमाय । उत्क्रान्तिरित्त्युत् क्रान्तिः । उत्क्रान्त्याऽइत्त्युत् क्रान्त्यै । अधिपतिनेत्त्यधि पतिना । ऊर्जा । ऊर्जम् ॥९॥

राज्ञी । असि । प्राची । दिक् । वसवः । ते । देवाः । अधिपतयऽइत्त्यधि पतयः । अग्निः । हेतीनाम् । प्रतिधर्त्तेति-प्रति धर्त्ता । त्रिवृदितित्रि वृत् । त्वा । स्तोमः ।

---

त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृते । प्रवृदितिप्र वृत् । प्रवृत-ऽइतिप्र वृते । आक्रमऽइत्या क्रमः । आक्रमायेत्या क्रमाय । सङ्क्रमऽइतिसम् क्रमः । सङ्क्रमायेतिसम् क्रमाय । उत्क्रमऽइत्युत् क्रमः । उत्क्रमायेत्युत् क्रमाय । उत्क्रान्तिरित्युत् क्रान्तिः । उत्क्रान्त्याऽइत्युत् क्रान्त्यै । अधिपतिने-त्यधि पतिना । ऊर्जा । ऊर्जम् ॥९॥

राज्ञी । अधिपतयऽइत्यधि पतयः । अग्निः । प्रतिधर्त्तेतिप्रति धर्त्ता ।

---

त्रिवृदितित्रि वृत् । त्रिवृतऽइतित्रि वृते । प्रवृदितिप्र वृत् । प्रवृत-ऽइतिप्र वृते । विवृदितिवि[1] वृत् । विवृतऽइतिवि[1] वृते । सवृदितिस वृत् । सवृतऽइतिस वृते । आक्रमायेत्या क्रमाय । सङ्क्रमायेतिसम् क्रमाय । उत्क्रमायेत्युत् क्रमाय ॥९॥

अधिपतयऽइत्यधि पतयः । त्रिवृदितित्रि वृत् । श्रयतु । अव्यथायै ।

---

१. ककोशशैल्यनुसारमिह ✓वकारवता 'वि' इति पाठेन भाव्यम् ।

पृथिव्याम् । श्रयतु । आज्ज्यम् । उक्क्थम् । अव्यथायै । स्तभ्नातु । रथन्तरमितिरथम् तरम् । साम । प्रतिष्ठित्यै । प्रतिस्थित्त्याऽइतिप्रति स्थित्यै । अन्तरिक्क्षे । ऋषयः । त्वा । प्रथमजाऽइतिप्रथम जाः । देवेषु । दिवः । मात्त्रया । व्वरिम्मणा । प्रथन्तु । व्विधर्त्तेतिवि धर्त्ता । च । अयम् । अधिपतिरित्त्यधि पतिः । च । ते । त्वा । सर्व्वे । सर्व्वँविदानाऽइतिसम् [1]विदानाः । नाकस्य । पृष्ष्ठे । स्वर्ग्गऽइतिस्वः गे । लोके । यजमानम् । च । सादयन्तु ॥१०॥

व्विराडितिवि राट् । दक्क्षिणा । रुद्राः । इन्द्रः । पञ्चदशऽइतिपञ्च दशः । प्रऽउगम् । बृहत् ॥११॥

---

त्रिवृदितित्रि वृत् । पृथिव्याम् । आज्यम् । [2]उक्थम् । प्रतिष्ठित्यै । प्रतिस्थित्याऽइतिप्रति स्थित्यै । अन्तरिक्षे । प्रथमजाऽइतिप्रथम जाः । मात्रया । व्वरिम्णा । अधिपतिरित्यधि पतिः । पृष्ठे ॥१०॥

दक्षिणा । रुद्राः ॥११॥

---

ऋषयः । मात्रया । व्विधर्त्तेतिवि[3] धर्त्ता । अयम् । [4]सम्विदानाऽइतिसम् व्विदानाः । यजमानम् । सादयन्तु ॥१०॥

व्विराडितिवि[5] राट् ॥११॥

---

१. 'विदानाः' इति काशिकः पाठः ।

२. क्वचिद् 'उक्त्थम्', 'उत्थ्कम्' इति चापपाठः ।

३. ककोशशैल्यनुसारमिह द्विवकारवता 'व्वि' इति पाठेन भाव्यम् ।

४. अपपाठोऽयम्, 'सर्व्वँविदानाऽइतिसम् विदानाः' इति शुद्धः पाठो ज्ञेयः ।

५. कशैल्यनुसारमिह 'व्वि' इति पाठेन भाव्यम् ।

सम्म्राडितिसम् राट् । प्रतीची । आदित्याः । वरुणः । सप्तदशऽइतिसप्त दशः । मरुत्त्वतीयम् । वैरूपम् ॥१२॥

स्वराडितिस्व राट् । उदीची । मरुतः । सोमः । एकविंशऽइत्त्येक विंशः । निष्कैवल्ल्यम् । निःकैवल्ल्यमितिनिः कैवल्ल्यम् । वैराजम् ॥१३॥

अधिपत्नीत्त्यधि पत्नी । बृहती । विश्वे । देवाः । बृहस्प्पतिः । त्रिणवत्त्रयस्त्रिंशौ । त्रिनवत्त्रयस्त्रिंशावितित्रिनवत्त्रयस्त्रिंशौ । त्वा । स्तोमौ । श्रयताम् । वैश्वदेवाग्निमारुतेऽइतिवैश्श्वदेवाग्निमारुते । उक्क्थेऽइत्त्युक्क्थे । अव्व्यथायै । स्तब्भ्नीताम् । शाक्क्वररैवतेऽइतिशाक्क्वररैवते । सामनीऽइतिसामनी ॥१४॥

सम्राडितिसम् राट् । आदित्याः । सप्तदशऽइतिसप्त दशः । मरुत्वतीयम् ॥१२॥

एकविंशऽइत्येक विंशः । निष्कैवल्यम् । निःकैवल्यमितिनिः कैवल्यम् ॥१३॥

अधिपत्नीतयधि पत्नी । विश्वे । बृहस्पतिः । त्रिणवत्रयस्त्रिंशौ । त्रिनवत्रयस्त्रिंशावितित्रिनवत्रयस्त्रिंशौ । वैश्वदेवाग्निमारुतेऽइतिवैश्वदेवाग्निमारुते । [1] उक्थेऽइत्युक्थे । अव्यथायै । स्तभ्नीताम् । शाक्वररैवतेऽइतिशाक्वररैवते ॥१४॥

---

[2] सम्राडितिसम् राट् । मरुत्वतीयम् ॥१२॥

एकविंशऽइत्येक विंशः ॥१३॥

श्रयताम् । वैश्वदेवाग्निमारुतेऽइतिवैश्वदेवाग्निमारुते । अव्यथायै ॥१४॥

१. द्र० पूर्वत्र पृष्ठ २५१ टि० २ ।

२. द्र० पूर्वत्र पृष्ठ ३७ टि० १ ।

अयम् । पुरः । हरिकेशऽइतिहरि केशः । सूर्य्यरश्मिरितिसूर्य्य रश्मिः । तस्य । रथगृत्सऽइतिरथ गृत्सः । च । रथौजाऽइतिरथ ओजाः । च । सेनानीग्ग्रामण्यौ । सेनानीग्ग्रामन्न्यावितिसेनानीग्ग्रामन्न्यौ ॥ पुञ्जिकस्थलेतिपुञ्जिक स्थला । च । क्रतुस्थलेतिक्रतु स्थला । च । अप्सरसौ । दङ्क्ष्णवः । पशवः । हेतिः । पौरुषेयः । वधः । प्रहेतिरितिप्र हेतिः । तेभ्यः । नमः । अस्तु । ते । नः । अवन्तु । ते । नः । मृडयन्तु । ते । यम् । द्विष्मः । यः । च । नः । द्वेष्टि । तम् । एषाम् । जम्भे । दध्मः ॥१५॥

दक्षिणा । विश्वकर्म्मेतिविश्व कर्म्मा । रथस्वनऽइतिरथ स्वनः । रथेचित्रऽइतिरथे चित्रः । मेनका । सहजन्येतिसह जन्या । यातुधानाऽइतियातु धानाः । रक्षांसि ॥१६॥

सूर्य्यरश्मिरितिसूर्य्य रश्मिः । रथगृत्सऽइतिरथ गृत्सः । सेनानीग्रामण्यौ । सेनानीग्रामन्यावितिसेनानीग्रामन्यौ । पुञ्जिकस्थलेतिपुञ्जिक स्थला । क्रतुस्थलेतिक्रतु स्थला अप्सरसौ । दङ्क्ष्णवः । प्रहेतिरितिप्र हेतिः । तेभ्यः । द्विष्मः । द्वेष्टि । जम्भे । दध्मः ॥१५॥

दक्षिणा । विश्वकर्म्मेतिविश्व कर्म्मा । रथेचित्रऽइतिरथे चित्रः । सहजन्येतिसह जन्या । रक्षांसि ॥१६॥

---

अयम् । सूर्य्यरश्मिरितिसूर्य्य रश्मिः । रथगृत्स[1]ऽइतिरथगृत्सः[1] । पौरुषेयः । मृडयन्तु । यम् । यः ॥१५॥

विश्वकर्म्मेतिविश्व कर्म्मा । यातुधानाऽइतियातु धानाः ॥१६॥

---

१. 'गृत्स' शब्देऽपि 'उत्सवत्स'वद् द्वितीयवर्णापत्तिर्न दृश्यते । द्र० पृष्ठ २१३ टि० २ ।

पश्चात् । विश्वव्यंचाऽइतिविश्व इयंचाः । रथंप्रोत-ऽइतिरथं प्रोतः । असंमरथऽइत्यसंम रथः । प्रम्म्लो-चन्तीतिंप्र म्लोचंन्ती । अनुम्म्लोचन्तीत्यंनु म्लोचंन्ती । इयाग्ग्राः । सर्प्पाः ॥१७॥

उत्तरात् । सँय्यद्द्वसुरितिंसँय्यत् वंसुः । ताक्क्ष्यंः । अरिंष्टनेमिरित्यरिंष्ट नेमिः । विश्वाची । घृताची । आपंः । वातंः ॥१८॥

उपरि । अर्वाग्वसुरित्यर्वाक् वंसुः । सेनजिदितिसेन जित् । सुषेणंः । सुसेनऽइतिसु सेनंः । उर्वशी । पूर्व-चित्तिरितिंप्पूर्व चित्तिः । अवस्फूर्ज्जन्नित्यंव स्फूर्जन् । विद्युदितिवि द्युत् ॥१९॥

---

पश्चात् । विश्वव्यंचाऽइतिविश्व व्यंचाः । रथप्रोतऽइतिरथं प्रोतः । असंमरथऽइत्यसंम रथः । प्रम्लोचन्तीतिप्र म्लोचन्ती । अनुम्लोचन्तीत्यंनु म्लोचन्ती । व्याघ्राः ॥१७॥

सयँद्वसुरितिसयँत् वंसुः अरिंष्टनेमिरित्यरिंष्ट नेमिः । विश्वाची ॥१८॥

अर्वाग्वसुरित्यर्वाक् वंसुः । पूर्वचित्तिरितिपूर्व चित्तिः । अवस्फूर्ज्जन्नि-त्यंव स्फूर्ज्जन् । विद्युदितिवि द्युत् ॥१९॥

---

विश्वव्यंचाऽइतिविश्व व्यंचाः ॥१७॥

[1]संय्यद्वसुरितिसंय्यत् वंसुः ॥१८॥

अर्वाग्वसुरित्यर्वाक् [2]वंसुः । विद्युदितिवि[3] द्युत् ॥१९॥

---

१. इह 'सयँद्वसुरितिसयँत् वंसुः' इति शुद्धः पाठो ज्ञेयः ।

२. ककोशशैल्यनुसारमवग्रहादुत्तरो वकारो न गुरुभर्वति, तस्मात् 'वंसुः' इत्येव साधुः ।

३. ककोशशैल्यनुसारमिह 'वि' इत्येवं द्विवकारवता पाठेन भाव्यम् ।

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ॥ मूर्द्धा । कविः । रयीणाम् ॥२०॥

अबोधि । अग्निः । समिधेतिसम् इधा । जनानाम् । प्रति । धेनुमिवेतिधेनुम् इव । आयतीमित्त्या सतीम् । उषासम् । उषसमित्त्युषसम् । यह्वाऽइवेतियह्वाः इव । प्र । वयाम् । उज्जिहानाऽइत्त्युत् जिहानाः । प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥२१॥

अवोचाम । कवये । मेद्ध्याय । वचः । वन्दारु । वृषभाय । वृष्णे ॥ गविष्ठिरः । नमसा । स्तोमम् । अग्नौ ।

---

उग्निः ॥२०॥

अग्निः । आयतीमित्या सतीम् । यह्वाऽइवेतियह्वाः इव । उज्जिहाना-ऽइत्युत् जिहानाः । अछ ॥२१॥

मेध्याय । वृष्णे । गविष्ठिरः । अग्नौ । रुक्मम् ।

---

[1]अग्नम् । रय्रीणाम् ॥२०॥

[2]अबोधि । आय्रतीमित्या [3]य्यतीम् । य्यह्वाऽइवेतियह्वाः इव । वय्राम् ॥२१॥

कवय्रे । मेध्याय्र । [4]वन्दारुः । वृषभाय्रं ।

---

१. इतः पूर्वस्या एकस्या मन्त्रकण्डिकायाः पूर्वं गतत्वादित उत्तरं पदपाठ एकस्याः संख्याया भेदो ज्ञेयः ।

२. इतः पूर्वयोर्द्वयोः कण्डिकयोः पूर्वं गतत्वादित उत्तरं पदपाठे तिसृणां कण्डिकासंख्यानां भेदो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'य्रतीम्' इत्येव पाठः साधुर्ज्ञेयः ।

४. अपपाठोऽयं पाठान्तरं वेति विचार्यमुभयथा सम्भवात् ।

मद्ध्यम स्थाः । एधि । राज्ज्ञाम् । अग्ग्ने । व्विहव्व्युऽइतिवि हुव्व्य÷ । दीदिहि । इह ॥५॥

अति । निहः । अति । स्त्रिध÷ । अति । अचित्तिम् । अति । अरातिम् । अग्ग्ने ॥ व्विश्श्वा । हि । अग्ग्ने । दुरितेतिदुः इता । सहस्व । अथ । अस्म्मब्भ्यम् । सहवीरामितिसह वीराम् । रयिम् । दाः ॥६॥

अनाधृष्ष्यः । जातवेदाऽइतिजात वेदाः । अनिष्ट्टृतः । अनिस्तृतऽइत्त्यनि स्तृतः । व्विराडितिवि राट् । अग्ग्ने । क्षत्त्रभृदितिक्क्षत्त्र भृत् । दीदिहि । इह ॥ [1]व्विश्श्वा÷ । आशाः । प्रमुञ्चन्नितिप्प्र मुञ्चन् । मानुषीः । भियः । शिवेभि÷ । अद्द्य । परि । पाहि । नः । वृधे ॥७॥

बृहस्प्पते । सवितः । बोधय । एनम् । सश्शितमितिसम् शितम् । चित् । सन्तरामितिसम् तराम् । सम् । शिशाधि ॥ वर्द्धय । एनम् । महते । सौभगाय । व्विश्श्वे । एनम् । अनु । मदन्तु । देवाः ॥८॥

---

ऽइतिमध्यम स्थाः । राज्ञाम् । अग्ने । व्विहव्युऽइतिवि हव्य÷ ॥५॥

अग्ने । व्विश्वा । अग्ने । अस्मभ्यम् ॥६॥

अनाधृष्यः । अनिष्टृतः । अनिस्तृतऽइत्यनि स्तृतः । अग्ने । क्षत्रभृदितिक्षत्र भृत् । [1]व्विश्वाः । प्रमुञ्चन्नितिप्र मुञ्चन् । अद्य ॥७॥

बृहस्पते । व्विश्वे ॥८॥

---

व्विहव्युऽइतिवि हव्य÷ ॥५॥

सहवीरामितिसह वीराम् । रय्यिम् ॥६॥

जातवेदाऽइतिजात वेदाः । व्विराडितिवि राट् । [1]व्विश्वा÷ । भियः ॥७

बोधय्य । वर्द्धय्य । सौभगाय्य ॥८॥

---

१. द्र० ३२८ पृष्ठस्था टिप्पणी १ ।

अमुत्त्रभूयादित्त्यमुत्त्र भूयात् । अध । सत् । ग्यमस्य । बृहस्प्पते । अभिशस्त्तेरित्त्यभि शस्त्तेः । अमुञ्च्चः ॥ प्रति । औहताम् । अश्विना । मृत्त्युम् । अस्म्मात् । देवानाम् । अग्ग्ने । भिषजा । शचीभिः ॥९॥

ऊर्द्ध्वाः । अस्य । समिधऽइतिसम् इधः । भवन्ति । ऊर्द्ध्वा । शुक्क्रा । शोचीᳬंषि । [1]अग्ग्नेः ॥ द्युमत्तमेतिद्द्युमत् तमा । सुप्प्रतीकस्स्येतिसु प्रतीकस्य । सूनोः ॥१०॥

तनूनपादितितनू नपात् । असुरः । विश्श्ववेदाऽइतिविश्श्व वेदाः । देवः । देवेषु । देवः ॥ पथः । अनक्क्तु । मद्ध्वा । घृतेन ॥११॥

मद्ध्वा । यज्ज्ञम् । नक्क्षसे । प्रीणानः । नराशᳬंसः । अग्ग्ने ॥ सुकृदितिसु कृत् । देवः । सविता । विश्श्ववार-ऽइतिविश्श्व वारः ॥१२॥

---

अमुत्रभूयादित्यमुत्र भूयात् । बृहस्पते । अभिशस्तेरित्यभि शस्तेः । अश्विना । मृत्युम् । अस्मात् । अग्ने ॥९॥

शुक्रा । अग्नेः । द्युमत्तमेतिद्युमत् तमा । सुप्रतीकस्येतिसु प्रतीकस्य ॥१०॥

विश्ववेदाऽइतिविश्व वेदाः । अनक्तु । मध्वा ॥११॥

मध्वा । यज्ञम् । नक्षसे । अग्ने । विश्ववारऽइतिविश्व वारः ॥१२॥

---

अमुत्रभूयादित्यमुत्र भूयात् । य्यत् । य्यमस्य ॥९॥

[2]ऊद्ध्वाः ॥१०॥ विश्ववेदाऽइतिविश्व वेदाः ॥११॥

य्यज्ञम् । विश्ववारऽइतिविश्व वारः ॥१२॥

---

१. 'अग्ने' इत्यपपाठः काशीमुद्रिते ।

२. इत पूर्वस्या मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठचन्ते । अत इत आरभ्यैकस्याः कण्डिकासंख्याया भेदो जायते ।

अच्छे । अयम् । एति । शवसा । घृतेन । ईडानः । वह्निः । नमसा ॥ अग्निम् । स्रुचः । अध्वरेषु । प्रयत्स्वितिप्रयत् सु ॥१३॥

सः । यक्षत् । अस्य । महिमानम् । अग्नेः । सः । ईम् । मन्द्रा । सुप्रयस इति सु प्रयसः ॥ वसुः । चेतिष्ठः । वसुधातम इति वसु धातमः । च ॥१४॥

द्वारः । देवीः । अनु । अस्य । विश्वे । व्रता । ददन्ते । अग्नेः ॥ उरुव्यचस इत्युरु व्यचसः । धाम्ना । पत्यमानाः ॥१५॥

ते इति ते । अस्य । योषणे इति योषणे । दिव्ये इति दिव्ये । न । योनौ । उषासानक्ता । उषसानक्तेत्युषसानक्ता ॥ इमम् । यज्ञम् । अवताम् । अध्वरम् । नः ॥१६॥

अछे । बर्हिः । अग्निम् । अध्वरेषु । प्रयत्स्वितिप्रयत् सु ॥१३॥

यक्षत् । अग्ने? । सुप्रयस इति सु प्रयसः । चेतिष्ठः ॥१४॥

विश्वे । अग्ने? । उरुव्यचस इत्युरु व्यचसः । धाम्ना । पत्यमानाः ॥१५

दिव्ये इति दिव्ये । उषासानक्ता । उषसानक्तेत्युषसानक्ता । यज्ञम् । अध्वरम् ॥१६॥

---

अय्यम् । [1]प्रय्यत्स्वितिप्रय्यत सु ॥१३॥

य्यक्षत । सुप्रय्यस इति सु प्रय्यसः । व्वसुधातम इति व्वसु धातमः ॥१४

उरुव्यचस इत्युरु व्यचसः ॥१५॥

[2]य्योषण इति य्योषण । य्योनौ । य्यज्ञम् ॥१६॥

---

१. द्र० ४५ पृष्ठस्था टिप्पणी २ ।

२. अपपाठोऽयम्, 'य्योषणे इति य्योषणे' इति शुद्धः पाठो द्रष्टव्यः ।

दैव्या । होतारा । ऊर्द्ध्वम् । अद्धरम् । नः । अग्नेः । जिह्वाम् । अभि । गृणीतम् ॥ कृणुतम् । नः । स्विष्ट्रिमितिसु इष्ट्रिम् ॥१७॥

तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु । इडा । सरस्वती । भारती ॥ मही । गृणाना ॥१८॥

तत् । नः । तुरीपम् । अद्भुतम् । पुरुक्क्षु । त्वष्ट्रा । सुवीर्य्यमितिसु वीर्य्यम् ॥ रायः । पोषम् । वि । स्यतु । नाभिम् । अस्म्मेऽइत्त्यस्म्मे ॥१९॥

वनस्प्पते । अव । सृज । रराणः । त्मना । देवेषु ॥ अग्निः । हव्यम् । शमिता । सूदयाति ॥२०॥

अग्ने । स्वाहा । कृणुहि । जातवेदऽइतिजात वेदः । इन्द्राय । हव्यम् ॥ विश्वे । देवाः । हविः । इदम् । जुषन्ताम् ॥२१॥

---

दैव्या । अध्वरम् । अग्ने? । जिह्वाम् । स्विष्टिमितिसु इष्टिम् ॥१७॥

अद्भुतम् । पुरुक्षु । त्वष्टा । अस्मेऽइत्यस्मे ॥१९॥

वनस्पते । अग्निः । हव्यम् ॥२०॥

अग्ने । हव्यम् । विश्वे ॥२१॥

---

[1]अध्वरम् ॥१७॥

सुवीर्य्यमितिसु वीर्य्यम् । राय? ॥१९॥

सूदयाति ॥२०॥

जातवेदऽइतिजात वेदः । इन्द्राय । [2]जुषताम् ॥२१॥

---

१. अपपाठोऽयम्, 'अध्वरम्' इत्येवमन्तोदात्तेन भाव्यम् ।

२. अपपाठोऽयम्, 'जुषन्ताम्' इत्येवं शुद्धः पाठो द्रष्टव्यः ।

पीवोऽअन्नानितिपीवः॑ऽअन्नान् । रयिवृधऽइतिरयि वृधः॑ । सुमेधाऽइतिसु मेधाः॑ । श्वेतः॑ । सिषक्ति । सिसक्तीतिसिसक्ति । नियुतामितिनि युताम् । अभिश्रीरित्यभि श्रीः॑ ॥ ते । वायवे॑ । समनसऽइतिस मनसः॑ । वि । तस्थुः॑ । विश्वा॑ । इत् । नरः॑ । स्वपत्यानीतिसु [1]अप-त्यानि॑ । चक्रुः॑ ॥२२॥

राये । नु । यम् । जज्ञतुः॑ । रोदसीऽइतिरोदसी । इमेऽइतीमे । राये । देवी । धिषणा॑ । धाति । देवम् ॥ अध॑ । वायुम् । नियुतऽइतिनि युतः॑ । सश्चत । स्वाः॑ । उत । श्वेतम् । वसुधितिमितिवसु धितिम् । निरेके ॥२३॥

आपः॑ । ह । यत् । बृहतीः॑ । विश्वम् । आयन् । गर्भम् । दधानाः॑ । जनयन्तीः॑ । अग्निम् ॥ ततः॑ । देवानाम् । सम् । अवर्त्तत । असुः॑ । एकः॑ ॥२४॥

---

सिषक्ति । सिसक्तीतिसिसक्ति । अभिश्रीरित्यभि श्रीः । तस्थुः । विश्वा । स्वपत्यानीतिसु अपत्यानि॑ । चक्रुः ॥२२॥

जज्ञतुः॑ । सश्चत ॥२३॥ विश्वम् । गर्भम् । अग्निम् ॥२४॥

---

[2]रयिवृधऽइतिरयि [2]वृधः॑ । नियुतामितिनि [3]य्युताम् । वायवे २२

राये । य्यम् । राये । वायुम् । नियुतऽइतिनि [4]य्युतः॑ । वसुधितिमितिवसु धितिम् ॥२३॥

य्यत् । आयन् । जनयन्तीः ॥२४॥

---

१. 'अपत्त्यानि॑' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारमिह ऋकारपरो वकारो न गुरुर्भवति । तेन 'रयिवृधऽइतिरयि वृधः॑' इत्येवं शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'युताम्' इत्येवं शुद्धः पाठो ज्ञेयः ।

४. ककोशशैल्यनुसारम् 'युतः॑' इत्येवं शुद्धः पाठो ज्ञेयः ।

यः । चित् । आपः । महिना । पर्य्यपश्यदितिपरि अपश्यत् । दक्षम् । दधाना । जनयन्ती । यज्ञम् ॥ यः । देवेषु । अधि । देवः । एकः । आसीत् ॥२५॥

प्र । याभिः । यासि । दाश्वांसम् । अच्छ । नियुद्भिरितिनियुत् भिः । वायोऽइतिवायो । इष्टये । दुरोणे ॥ नि । नः । रयिम् । सुभोजसमितिसु भोजसम् । युवस्व । नि । वीरम् । गव्यम् । अश्व्यम् । च । राधः ॥२६॥

आ । नः । नियुद्भिरितिनियुत् भिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः । उप । याहि । यज्ञम् ॥ वायो-ऽइतिवायो । अस्मिन् । सवने । मादयस्व ॥२७॥

नियुत्वान् । वायोऽइतिवायो । आ । गहि । अयम् । शुक्रः । अयामि । ते ॥ गन्ता । असि । सुन्वतः । गृहम् ॥२८

---

पर्य्यपश्यदितिपरि अपश्यत् । दक्षम् । यज्ञम् ॥२५॥

दाश्वांसम् । अच्छ । नियुद्भिरितिनियुत भिः । इष्टये । गव्यम् । अश्व्यम् ॥२६॥

नियुद्भिरितिनियुत भिः । अध्वरम् । यज्ञम् । अस्मिन् ॥२७॥

नियुत्वान् । शुक्रः । सुन्वतः ॥२८॥

---

यः । पर्य्यपश्यदितिपरि अपश्यत । जनयन्ती । यज्ञम् । यः ॥२५

याभिः । यासि । नियुद्भिरितिनियुत भिः । वायोऽइतिवायो । इष्टये । रयिम् । युवस्व ॥२६॥

नियुद्भिरितिनियुत भिः । याहि । यज्ञम् । वायोऽइतिवायो । मादयस्व ॥२७॥

नियुत्वान् । वायोऽइतिवायो । अयम् । अयामि ॥२८॥

वायोऽइतिवायो । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ॥ आ । याहि । सोमपीतयऽइतिसोम पीतये । स्पार्हः । देव । नियुत्वता ॥२९॥

वायुः । अग्रेगाऽइत्यग्रे गाः । यज्ञप्रीरितियज्ञ प्रीः । साकम् । गन् । मनसा । यज्ञम् ॥ शिवः । नियुद्भिरितिनियुत् भिः । शिवाभिः ॥३०॥

वायोऽइतिवायो । ये । ते । सहस्रिणः । रथासः । तेभिः । आ । गहि ॥ नियुत्वान् । सोमपीतयऽइतिसोम पीतये ॥३१॥

एकया । च । दशभिरितिदश भिः । च । स्वभूतऽइतिस्व भूते । द्वाभ्याम् । इष्टये । विंशती । च ॥ तिसृभिरितितिसृ भिः । च । वहसे । त्रिंशता । च ।

---

शुक्रः । मध्वः । अग्रम् । दिविष्टिषु । नियुत्वता ॥२९॥

अग्रेगाऽइत्यग्रे गाः । यज्ञप्रीरितियज्ञ प्रीः । यज्ञम् । नियुद्भिरिति-नियुत भिः ॥३०॥

नियुत्वान् ॥३१॥

द्वाभ्याम् । इष्टये । नियुद्भिरितिनियुत भिः ॥३२॥

---

वाय्योऽइतिवाय्यो । अय्यामि । य्याहि । सोमपीतय्यऽइतिसोम पीतय्ये । नियुत्वता ॥२९॥

वायुः । य्यज्ञप्रीरितिय्यज्ञ प्रीः । य्यज्ञम् । नियुद्भिरितिनियुत् भिः ३०

वाय्योऽइतिवाय्यो । य्ये । [1]नियुत्वानितिनियु त्वान् । सोमपीतय्य-ऽइतिसोम पीतय्ये ॥३१॥

एकय्या । इष्टय्ये । नियुद्भिरितिनियुत भिः । वाय्योऽइतिवाय्यो ॥३२॥

---

१. अपपाठोऽयम्, 'नियुत्वान्' इत्येवमवग्रहरहितेन पाठेन भाव्यम् ।

नियुद्भिरितिनियुत् भिः । वायोऽइतिवायो । इह । ता । वि । मुञ्च ॥३२॥

तव । वायोऽइतिवायो । ऋतस्पते । ऋतपतऽइत्यृत पते । त्वष्टुः । जामातः । अद्भुत ॥ अवांसि । आ । वृणीमहे ॥३३॥

अभि । त्वा । शूर । नोनुमः । अदुग्धाऽइवेत्यदुग्धाः इव । धेनवः ॥ ईशानम् । अस्य । जगतः । स्वर्दृशमितिस्वः दृशम् । ईशानम् । इन्द्र । तस्थुषः ॥३४॥

न । त्वावानितित्वा वान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते ॥ अश्वायन्तः । अश्वयन्तऽइत्यश्व यन्तः । मघवन्नितिमघ वन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥३५॥

---

ऋतस्पते । ऋतपतऽइत्यृत पते । त्वष्टुः । अद्भुत ॥३३॥

अदुग्धाऽइवेत्यदुग्धाः इव । तस्थुषः ॥३४॥

त्वावानितित्वा वान् । अन्यः । दिव्यः । जनिष्यते । अश्वायन्तः । अश्वयन्तऽइत्यश्व यन्तः । गव्यन्तः ॥३५॥

---

वाय्योऽइतिवाय्यो । ऋतपतऽइत्यृत पते । वृणीमहे ॥३३॥

त्वावानितित्वा वान् । अश्वाय्यन्तः । अश्वय्यन्तऽइत्यश्व [1]य्यन्तः । मघवन्नितिमघ वन् ॥३५॥

---

१, ककोशशैल्यनुसारमिह 'य्यन्तः' इत्येवं शुद्धः पाठो ज्ञेयः ।

त्वाम् । इत् । हि । हवामहे । सातौ । वाजस्य । कारवः ॥ त्वाम् । वृत्रेषु । इन्द्र । सत्पतिमितिसत् पतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥३६॥

सः । त्वम् । नः । चित्र । वज्रहस्तेतिवज्र हस्त । धृष्णुयेतिधृष्णु या । महः । स्तवानः । अद्रिवऽइत्यद्रि वः ॥ गाम् । अश्वम् । रथ्यम् । इन्द्र । सम् । किर । सत्रा । वाजम् । न । जिग्युषे ॥३७॥

कया । नः । चित्रः । आ । भुवत् । ऊती । सदावृध-ऽइतिसदा वृधः । सखा ॥ कया । शचिष्ठया । वृता ॥३८॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः ॥ दृढा । चित् । आरुजऽइत्या रुजे । वसु ॥३९॥

---

वृत्रेषु । सत्पतिमितिसत् पतिम् । काष्ठासु ॥३६॥

चित्र । वज्रहस्तेतिवज्र हस्त । धृष्णुयेतिधृष्णु या । अद्रिवऽइत्यद्रि वः । अश्वम् । रथ्यम् । सत्रा । जिग्युषे ॥३७॥

चित्रः । शचिष्ठया ॥३८॥

सत्यः । मंहिष्ठः । मत्सत् । आरुजऽइत्या रुजे ॥३९॥

---

[1]वृत्रेषु ॥३६॥

वज्रहस्तेतिवज्र हस्त । धृष्णुयेतिधृष्णु [2]य्या । अद्रिवऽइत्यद्रि वः ॥३७

कय्या । [1]सदावृधऽइतिसदा वृधः । कय्या । शचिष्ठय्या । [1]वृता ॥३८॥

---

१. ककोशशैल्यनुसारमृकारपरो वकारो न द्विर्लिख्यते, अतः सर्वत्रैक-वकारवान् शुद्धः पाठो ज्ञेयः ।

२. ककोशशैल्यनुसारमिह 'य्या' इत्येवं युक्तः पाठो ज्ञेयः ।

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् ॥ शतम् । भवासि । ऊतये ॥४०॥

यज्ञायज्ञेतियज्ञा यज्ञा । वः । अग्नये । गिरा-गिरेतिगिरा गिरा । च । दक्क्षसे ॥ प्रप्रेतिप्र प्र । वयम् । अमृतम् । जातवेदसमितिजात वेदसम् । प्रियम् । मित्त्रम् । न । शꣳसिषम् ॥४१॥

पाहि । नः । अग्ने । एकया । उत । द्वितीयया ॥ गीर्भिरितिगीः भिः । तिसृभिरितितिसृ भिः । ऊर्ज्जाम् । पते । चतसृभिरितिचतसृ भिः । वसोऽइतिवसो ॥४२॥

ऊर्जः । नपातम् । सः । हिन । अयम् । अस्म्मयुरित्त्यस्म्म युः । दाशेम । हव्यदातयऽइतिहव्य दातये ॥ भुवत् । वाजेषु । अविता । भुवत् । वृधे । उत । त्राता । तनूनाम् ॥४३॥

---

यज्ञायज्ञेतियज्ञा यज्ञा । अग्नये । दक्षसे । प्रप्रेतिप्र प्र । मित्त्रम् ॥४१॥
अग्ने । गीर्भिरितिगीः भिः ॥४२॥
अस्मयुरित्यस्म युः । हव्यदातयऽइतिहव्य दातये ॥४३॥

---

ऊतय्यें ॥४०॥
य्यज्ञायज्ञेतियज्ञा[1] य्यज्ञा । अग्नय्यें । वय्यम् । जातवेदसमितिजात वेदसम् । प्रिय्यम् ॥४१॥
एकय्या । द्वितीय्यय्या । वसोऽइतिवसो ॥४२॥
अय्यम् । अस्मयुरित्यस्म [2]य्युः । हव्यदातय्यऽइतिहव्य दातय्ये । वृधे ॥४३॥

---

१. ककोशशैल्यनुसारमपपाठोऽयम् । इह '०य्यज्ञा यज्ञा' इत्येवं शुद्धः पाठो ज्ञेयः ।
२. ककोशशैल्यनुसारमिह 'युः' इत्येवं शुद्धः पाठो ज्ञेयः ।

सँव्वत्त्सरः । असि । परिवत्त्सरऽइतिपरि [1]वृत्त्सरः । इदावत्त्सरः । इदद्वत्त्सरऽइतीत् [1]वृत्त्सरः । वृत्त्सरः ॥ उषसः । ते । कल्प्पन्ताम् । अहोरात्त्राः । अर्द्धमासाऽइत्त्यर्द्ध मासाः । मासाः । ऋतवः । सँव्वत्त्सरः । ते । कल्प्पताम् ॥ प्रेत्त्याऽइतिप्प्र इत्त्यै । एत्त्याऽइत्त्या इत्त्यै । सम् । च । अञ्च । प्र । च । सारय । सुपर्ण्णचिदितिसुपर्ण्ण चित् । ध्रुवः । सीद ॥४४॥

॥ इति वाजसनेयिसंहितापदे सप्तविंशोऽध्यायः ॥

---

सँव्वत्सरः । परिवत्सरऽइतिपरि वृत्सरः । इदावत्सरः । इद्वत्सर-ऽइतीत् वृत्सरः । वृत्सरः । कल्पन्ताम् । अहोरात्राः । अर्द्धमासाऽइत्यर्ध मासाः । सँव्वत्सरः । कल्पताम् । प्रेत्याऽइतिप्र इत्यै । एत्याऽइत्या इत्यै ॥४४॥

---

परिवत्सरऽइतिपरि वत्सरः । इदावत्सरऽइतीत्[2] वत्सरः । इद्वत्सर-ऽइतीत् वत्सरः । सारय ॥४४॥

॥ इति श्रीवाजसनेयिसंहितायां पदेन सप्तविंशतिमो[3]ऽध्यायः ॥

---

१. 'वत्सरः' इति काशिकः पाठः ।

२. इहावग्रहनिर्देशः प्रामादिकः । 'इदावत्सरः' इत्येवमवग्रहरहितेन पाठेन भाव्यम् ।

३. द्रष्टव्याऽत्र पूर्वत्र ३६६ पृष्ठस्था टिप्पणी २ ।

# अष्टाविंशोऽध्यायः

इन्द्रम् । इडः । पदे । नाभा । पृथिव्याः । अधि ॥ दिवः । वर्ष्मन् । सम् । इद्ध्यते । ओजिष्ठः । चर्षणीसहाम् । चर्षणिसहामितिचर्षणि सहाम् । वेतु ॥१॥

तनूनपातमितितनू नपातम् । ऊतिभिरित्यूति भिः । जेतारम् । अपराजितमित्यपरा जितम् ॥ इन्द्रम् । देवम् । स्वर्विदमितिस्वः विदम् । पथिभिरितिपथि भिः । मधुमत्तमैरितिमधुमत् तमैः । नराशꣳसेन । तेजसा ॥२॥

इडाभिः । इन्द्रम् । ईडितम् । आजुह्वानमित्या जुह्वानम् । अमर्त्यम् ॥ देवः । देवैः । सवीर्य्यऽइतिस वीर्य्यः । वज्रहस्तऽइतिवज्र हस्तः । पुरन्दरऽइतिपुरम् दरः ॥३॥

बर्हिषि । इन्द्रम् । निषद्वरम् । निसद्वरमितिनिसत् वरम् । वृषभम् । नर्य्यापसमितिनर्य्य अपसम् ॥ वसुभिरिति-

---

पृथिव्याः । वर्ष्मन् । इध्यते । ओजिष्ठः ॥१॥

ऊतिभिरित्यूति भिः । अपराजितमित्यपरा जितम् ॥२॥

आजुह्वानमित्या जुह्वानम् । वज्रहस्तऽइतिवज्र हस्तः ॥३॥

निषद्वरम् । निसद्वरमितिनिसद् वरम् । रुद्रैः । आदित्यैः । स्वर्विदमितिस्वः विदम् ॥२॥

सवीर्य्यऽइतिस वीर्य्यः । वज्रहस्तऽइतिवज्र हस्तः ॥३॥

निसद्वरमितिनिसत् वरम् । वृषभम् । नर्य्यापसमितिनर्य्य अपसम् ।

वसु भिः । रुद्रैः । आदित्यैः । सयुग्भिरितिसयुक् भिः । बर्हिः । आ । असदत् ॥४॥

ओजः । न । वीर्यम् । सहः । द्वारः । इन्द्रम् । अवर्द्धयन् ॥ सुप्रायणाः । सुप्रायनाऽइतिसु [1]प्रायनाः । अस्मिन् । यज्ञे । वि । श्रयन्ताम् । ऋतावृधः । ऋतवृधऽइत्यृत वृधः । द्वारः । इन्द्राय । मीढुषे । इयन्तु ॥५॥

उषेऽइत्युषे । इन्द्रस्य । धेनूऽइतिधेनू । सुदुघेऽइतिसु दुघे । मातरा । महीऽइतिमही ॥ सवातराविति स व्रातरौ । न । तेजसा । वत्सम् । इन्द्रम् । अवर्द्धताम् । वीताम् ॥६॥

भिषजा । सखाया । हविषा । इन्द्रम् । भिषज्यतः ॥ कवीऽइतिकवी । देवौ । प्रचेतसाविति प्र चेतसौ । इन्द्राय । धत्तः । इन्द्रियम् ॥७॥

---

सयुग्भिरितिसयुक् भिः ॥४॥

सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः । अस्मिन् । यज्ञे । ऋतवृधऽइत्यृत वृधः ॥५॥

उषेऽइत्युषे । वत्सम् ॥६॥

भिषज्यतः । प्रचेतसाविति प्र चेतसौ ॥७॥

---

वसुभिरितिवसु भिः । सयुग्भिरितिसयुक् भिः ॥४॥

वीर्य्यम् । अवर्द्धयन् । सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः । यज्ञे । श्रयन्ताम् । ऋतवृधऽइत्यृत वृधः । इन्द्राय ॥५॥

सवातराविति स [2]व्रातरौ ॥६॥

सखाया । इन्द्राय । इन्द्रियम् ॥७॥

---

१. 'प्रायनाः' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारं 'वा' इत्येवं शुद्धः पाठो ज्ञेयः ।

इडा । सरस्वती । भारती । मही॒ऽ ॥ इन्द्रपत्नीरितीन्द्र पत्नीः । हविष्मतीः ॥८॥

त्वष्टारम् । इन्द्रम् । देवम् । भिषजम् । सुयजमितिसु यजम् । घृतश्श्रियमितिघृत श्रियम् । पुरुरूपमितिपुरु रूपम् । सुरेतसमितिसु रेतसम् । मघोनम् ॥९॥

धियऽ । जोष्टारम् । इन्द्रियम् ॥ मद्ध्वा । समञ्जन्नितिसम् अञ्जन् । पथिभिरितिपथि भिः । सुगेभिरितिसु गेभिः ॥१०॥

इन्द्रम् । स्वाहा । आज्ज्यस्य । मेदसः । स्तोकानाम् । स्वाहाकृतीनामितिस्वाहा कृतीनाम् । हव्यसूक्क्तीनामितिहव्य सूक्क्तीनाम् ॥ देवाऽ । आज्ज्यपाऽइत्त्याज्ज्य पाऽ । जुषाणाऽ । इन्द्रः ॥११॥

देवम् । बर्हिऽ । इन्द्रम् । सुदेवमितिसु देवम् । देवैऽ ।

---

इन्द्रपत्नीरितीन्द्र पत्नीः । हविष्मतीः ॥८॥

त्वष्टारम् । घृतश्रियमितिघृत श्रियम् ॥९॥

जोष्टारम् । मध्वा ॥१०॥

आज्यस्य । हव्यसूक्तीनामितिहव्य सूक्तीनाम् । आज्यपाऽइत्याज्य पाः ॥११॥

---

सुयजमितिसु [1]य्यजम् । घृतश्रियमितिघृत श्रियम् ॥९॥
धियः । इन्द्रियम् ॥१०॥

---

१. ककोशशैल्यनुसारमिह 'यजम्' इत्येवं युक्तः पाठो ज्ञेयः ।

वीरवदितिवीर वत् । स्तीर्णम् । वेद्याम् । अवर्द्धयत् ॥
वस्तोः । वृतम् । प्र । अक्तोः । भृतम् । राया । बर्हिष्मतः ।
अति । अगात् ॥१२॥

इन्द्रम् । सङ्घातऽइतिसम् घाते । वीडुवीः । यामन् ।
अवर्द्धयन् ॥ आ । वत्सेन । तरुणेन । कुमारेण । च । मीवता ।
अप । अर्वाणम् । रेणुककाटमितिरेणु ककाटम् । नुदन्ताम् ॥१३

इन्द्रम् । यज्ञे । प्रयतीतिप्र यति । अह्वेताम् ॥
दैवीः । विशः । प्र । अयासिष्टाम् । सुप्रीतेऽइतिसु प्रीते ।
सुधितेऽइतिसु धिते । वीताम् ॥१४॥

वसुधितीऽइतिवसु धिती । देवम् । इन्द्रम् । अवर्द्धताम् ॥
अयावि । अन्या । अघा । द्वेषांसि । आ । अन्या ।
वक्षत् । वसु । वार्य्याणि । यजमानाय । शिक्षिते-
ऽइतिशिक्षिते ॥१५॥

---

वेद्याम् । वस्तोः । अक्तोः । बर्हिष्मतः ॥१२॥
वीड्वीः । वत्सेन ॥१३॥
यज्ञे । प्रयतीतिप्र यति । अह्वेताम् । अयासिष्टाम् । सुप्रीतेऽइतिसु
प्रीते ॥१४॥
अन्या । अन्या । वक्षत् । शिक्षितेऽइतिशिक्षिते ॥१५॥

---

[1]वीरवदितिवीर वत् । अवर्द्धयत् । वृतम् । राया ॥१२॥
यामन् । अवर्द्धयन् ॥१३॥
यज्ञे । प्रयतीतिप्र [2]यति । अयासिष्टाम् ॥१४॥
वसुधितीऽइतिवसु धिती । अयावि । वार्य्याणि । यजमानाय ॥१५॥

---

१. अपपाठोऽयम्, ककोशशैल्यनुसारं 'वीरवदितिवीर वत्' इत्येवं शुद्धः पाठो ज्ञेयः ।
२. ककोशशैल्यनुसारमिह 'यति' इत्येवं युक्तः पाठो द्रष्टव्यः ।

सुदुघेऽइतिसु दुघे । पयसा ॥ इषम् । ऊर्ज्जम् । अन्न्या । व्रुक्क्षत् । सग्ग्धिम् । सपीतिमितिस पीतिम् । अन्न्या । नवेन । पूर्व्वम् । दयमानेऽइतिदयमाने । पुराणेन । नवम् । अधाताम् । ऊर्ज्जम् । ऊर्ज्जाहुतीऽइत्यूर्ज्जा आहुती । ऊर्ज्जयमानेऽइत्यूर्ज्जयमाने ॥१६॥

हुताघशꣳसाविविति हुत अघशꣳसौ । आ । अभार्ष्टाम् । शिक्क्षितौ ॥१७॥

पतिम् । इन्द्रम् । अवर्द्धयन् ॥ अस्पृक्क्षत् । भारती । दिवम् । रुद्रैः । यज्ञम् । सरस्वती । इडा । वसुमतीतिवसु मती । गृहान् ॥१८॥

त्रिवरूथऽइतित्रि [1]वरूथः । त्रिबन्धुरऽइतित्रि

---

अन्या । व्रक्षत् । सग्धिम् । अन्या । ऊर्ज्जाहुतीऽइत्यूर्ज्जा आहुती । ऊर्ज्जयमानेऽइत्यूर्ज्जयमाने ॥१६॥

अभार्ष्टाम् । शिक्षितौ ॥१७॥

अस्पृक्षत् । रुद्रैः । यज्ञम् ॥१८॥

त्रिवरूथऽइतित्रि व्ररूथः । त्रिबन्धुरऽइतित्रि···

---

पय्यसा । दय्यमानेऽइतिदय्यमाने । ऊर्ज्जय्यमानेऽइत्यूर्ज्जय्यमाने ॥१६॥

[2]अभाऽइष्टाम् ॥१७॥

अवर्द्धय्यन् । य्यज्ञम् ।व्रसुमतीतिव्रसु मती ॥१८॥

त्रिवरूथऽइतित्रि [3]व्ररूथः । त्रिवन्धुरऽइतित्रि···

---

१. 'व्ररूथः' इति काशिकः पाठः ।

२. अपपाठोऽयं लेखकप्रमादजः, 'अभार्ष्टाम्' इत्येवं युक्तः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'वरूथः' इत्येवं पाठेन भाव्यम् ।

[1]बन्धुर॑ः ॥ शतेन॑ । शितिपृष्ठानामितिशिति पृष्ठाना॑म् । आहित॒ऽइत्या हि॑तः । सहस्रे॑ण । प्र । वर्त्तते । मित्रावरु॑णा । इत् । अस्य । होत्रम् । अर्ह॑तः । बृहस्पति॑ः । स्तोत्रम् । अश्विना॑ । आद्ध्वर्य्यवम् ॥१९॥

मधु॑शाख॒ऽइति॒मधु॑ शाखः । सुपिप्पल॒ऽइति॒सु [2]पिप्पल॑ः ॥ दिव॑म् । अग्रे॑ण । अस्पृक्षत् । आ । अन्तरि॑क्षम् । पृथिवीम् । अदृ॑ꣳहीत् ॥२०॥

स्वासस्थमिति॑सु [3]आसस्थम् । इन्द्रे॑ण । आस॑न्नमित्या स॑न्नम् । अन्या । बर्हीꣳषि । अभि । अभूत् ॥२१॥

---

[1]बन्धुर॑ः । शितिपृष्ठानामिति॑शिति पृष्ठाना॑म् । आहित॒ऽइत्या हि॑तः । मित्रावरु॑णा ।
होत्रम् । बृहस्पति॑ः । स्तोत्रम् । अश्विना॑ । आध्वर्य्यवम् ॥१९॥

अग्रे॑ण । अस्पृक्षत् । अन्तरि॑क्षम् ॥२०॥

स्वासस्थमिति॑सु आसस्थम् । आस॑न्नमित्या स॑न्नम् । अन्या ॥२१॥

---

[1]बन्धुर॑ः । आद्ध्वर्य्यवम् ॥१९॥

[4]आस॑नमित्या स॑नम् ॥२१॥

---

१. 'बन्धुर॑ः' इति काशिकः पाठः ।

अत्रेदमप्यवधेयम्—कतिपयेषु कोशेषु 'त्रिवन्धुर॒ऽइति॑त्रि वन्धुर॑ः' इत्येव बकारस्थाने दन्त्योष्ठ्यो वकारः, अवग्रहात्परं तस्य द्वित्वं (गुरुत्वं) च दृश्यते । ककोशेऽपि दन्त्योष्ठ्यो वकार एव । ऋग्वेदे च दन्त्योष्ठ्यवकारवान् एव सर्वत्र पाठः । कृष्णयजुष्षु ओष्ठ्यो बकारो दृश्यते । तदेवमत्रोभयथा पाठे मूलं मृग्यम् ।

२. 'पिप्पल॑ः' इति काशिकः पाठः ।

३. 'आसस्थम्' इति काशिकः पाठः ।

४. अपपाठोऽयं लेखकप्रमादजः । 'आस॑न्नमित्या स॑न्नम्' इत्येवं शुद्धः पाठो ज्ञेयः ।

स्विष्टमितिसु इष्टम् । कुर्वन् । स्विष्टकृदितिस्विष्ट कृत् । स्विष्टमितिसु इष्टम् । अद्य । करोतु । नः ॥२२॥

पुरोडाशम् । बध्नन् । इन्द्राय । छागम् ॥ इन्द्राय । छागेन ॥ अघत् । तम् । अग्रभीत् । अवीवृधत् । पुरोडाशेन ॥२३॥

समिधानमितिसम् [1]इधानम् । महत् । यशः । सुसमिद्धमितिसु समिद्धम् । वरेण्यम् । अग्निम् । इन्द्रम् । वयोधसमितिवयः धसम् ॥ गायत्रीम् । छन्दः । इन्द्रियम् । त्र्यविमितित्रि अविम् । गाम् । वयः । दधत् ॥२४॥

तनूनपातमितितनू नपातम् । उद्भिदमित्युत् भिदम् । यम् । गर्भम् । अदितिः । दधे । शुचिम् ॥ उष्णिहम् । दित्यवाहमितिदित्य वाहम् ॥२५॥

---

स्विष्टमितिसु इष्टम् । स्विष्टकृदितिस्विष्ट कृत् । स्विष्टमितिसु इष्टम् । अद्य ॥२२॥

बध्नन् । अग्रभीत् ॥२३॥

सुसमिद्धमितिसु समिद्धम् । वरेण्यम् । अग्निम् । गायत्रीम् । त्र्यविमितित्रि अविम् ॥२४॥

उद्भिदमित्युत् भिदम् । गर्भम् । उष्णिहम् । दित्यवाहमितिदित्य वाहम् ॥२५॥

---

इन्द्राय । इन्द्राय ॥२३॥

यशः । वयोधसमितिवयः धसम् । गायत्रीम् । इन्द्रियम् । वयः ॥२४॥

यम् । दित्यवाहमितिदित्य वाहम् ॥२५॥

१. 'इधानम्' इति काशिकः पाठः ।

ईडेन्यम् । ईडितम् । वृत्रहन्तममितिवृत्रहन् तमम् । इडाभिः । ईड्यम् । सहः । सोमम् ॥ अनुष्टुभम् । अनुस्तुभमित्यनु स्तुभम् । पञ्चाविमितिपञ्च अविम् ॥२६॥

सुबर्हिषमितिसु बर्हिषम् । पूषण्वन्तमितिपूषण् वन्तम् । अमर्त्यम् । सीदन्तम् । बर्हिषि । प्रिये । अमृता ॥ बृहतीम् । त्रिवत्समितित्रि वत्सम् ॥२७॥

व्यचस्वतीः । सुप्रायणाः । सुप्रायनाऽइतिसु [1]प्रायनाः । ऋतावृधः । ऋतवृधऽइत्यृत वृधः । द्वारः । देवीः । हिरण्ययीः । ब्रह्माणम् ॥ पङ्क्तिम् । इह । तुर्य्य- वाहमितितुर्य्य वाहम् ॥२८॥

---

ईडेन्यम् । वृत्रहन्तममितिवृत्रहन् तमम् । ईड्यम् । अनुष्टुभम् । अनुस्तुभमित्यनु स्तुभम् ॥२६॥

पूषण्वन्तमितिपूषण् वन्तम् । त्रिवत्समितित्रि वत्सम् ॥२७॥

सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः । ऋतवृधऽइत्यृत वृधः । हिरण्ययीः । ब्रह्माणम् ॥२८॥

---

[2]वृत्रहन्तममितिवृत्रहन् तमम् ॥२६॥

पूषण्वन्तमितिपूषण् वन्तम् । प्रिये । त्रिवत्समितित्रि वत्सम् ॥२७॥

सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः । ऋतवृधऽइत्यृत वृधः । हिरण्ययीः । तुर्य्यवाहमितितुर्य्य वाहम् ॥२८॥

---

१. 'प्रायनाः' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारमृकारपरो वकारो न गुरुर्भवति, अत उभयत्र 'वृ' इत्येवमेकवकारवान् पाठो युक्तः ।

सुपेशसेतिसु पेशसा । सुशिल्पेऽइतिसु शिल्पे । बृहतीऽइतिबृहती । उभेऽइत्युभे । नक्तोषासा । नक्तोषसेति- नक्तोषसा । न । दर्शतेऽइतिदर्शते । विश्वम् ॥ त्रिष्टुभम् । त्रिस्तुभमितित्रि स्तुभम् । पष्ठवाहमितिपष्ठ वाहम् ॥२९॥

प्रचेतसेतिप्र चेतसा । देवानाम् । उत्तममित्युत् तमम् । यशः । होतारा । दैव्या । कवीऽइतिकवी । सयुजेतिस युजा ॥ जगतीम् । अनड्वाहम् ॥३०॥

पेशस्वतीः । तिस्रः । देवीः । हिरण्ययीः । भारतीः । बृहतीः । महीः । पतिम् ॥ विराजमितिवि राजम् । धेनुम् । गाम् । न ॥३१॥

---

सुशिल्पेऽइतिसु शिल्पे । उभेऽइत्युभे । नक्तोषासा । नक्तोषसेति- नक्तोषसा । विश्वम् । त्रिष्टुभम् । त्रिस्तुभमितित्रि स्तुभम् । पष्ठवाहमितिपष्ठ वाहम् ॥२९॥

प्रचेतसेतिप्र चेतसा । उत्तममित्युत् तमम् । दैव्या । अनड्वाहम् ॥३०॥

हिरण्ययीः ॥३१॥

---

[1]नक्तोषसेऽइतिनक्तोषसा । पष्ठवाहमितिपष्ठ वाहम् ॥२९॥

[2]प्रचेतसामितिप्र चेतसा । यशः । सयुजेतिस [3]युजा ॥३०॥

हिरण्ययीः । विराजमितिवि राजम् ॥३१॥

---

१. अपपाठोऽयम्, 'नक्तोषसेतिनक्तोषसा' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम्, 'प्रचेतसेतिप्र चेतसा' इत्येव शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'युजा' इत्येवं युक्तः पाठो ज्ञेयः ।

सुरेतसमितिसु रेतसम् । त्वष्टारम् । पुष्टिवर्द्धनमितिपुष्टि वर्द्धनम् । रूपाणि । बिभ्रतम् । पृथक् । पुष्टिम् ॥ द्विपदमितिद्वि पदम् । उक्षाणम् ॥३२॥

हिरण्यपर्णमितिहिरण्य पर्णम् । उक्थिनम् । रशनाम् । बिभ्रतम् । वशिम् । भगम् ॥ ककुभम् । वशाम् । बृहतम् ॥३३॥

स्वाहाकृतीरितिस्वाहा कृतीः । अग्निम् । गृहपतिमितिगृह पतिम् । पृथक् । वरुणम् । भेषजम् । कविम् । क्षत्रम् ॥ अतिच्छन्दसमित्यति छन्दसम् । बृहत् । ऋषभम् ॥३४॥

देवम् । बर्हिः । वयोधसमितिवयः धसम् । देवम् । इन्द्रम् । अवर्द्धयत् ॥ गायत्र्या । छन्दसा । इन्द्रियम् । चक्षुः । इन्द्रे । वयः । दधत् ॥३५॥

---

त्वष्टारम् । पुष्टिवर्द्धनमितिपुष्टि वर्द्धनम् । बिभ्रतम् । पुष्टिम् । द्विपदमितिद्वि पदम् । उक्षाणम् ॥३२॥

हिरण्यपर्णमितिहिरण्य पर्णम् । उक्थिनम् । बिभ्रतम् ॥३३॥

अग्निम् । क्षत्रम् । अतिछन्दसमित्यति छन्दसम् ॥३४॥

गायत्र्या । चक्षुः ॥३५॥

---

पुष्टिवर्द्धनमितिपुष्टि वर्द्धनम् ॥३२॥

वयोधसमितिवयः[1] धसम् । अवर्द्धयत । गायत्र्या । इन्द्रियम् । वयः ॥३५॥

१. ककोशशैल्यनुसारमिह गुरुणा धकारेण 'वयः' इत्येवं भाव्यम् ।

शुचिम् । उष्णिहा । प्राणम् ॥ अनुष्टुभा । अनुस्तुभेत्यनु स्तुभा । बलम् ॥ बृहत्या । श्रोत्रम् ॥ पङ्क्त्या । शुक्रम् ॥ देगौ । त्रिष्टुभा । त्रिस्तुभेतित्रि स्तुभा । त्विषिम् ॥ जगत्या । शूषम् ॥ विराजेतिवि राजा । रूपम् ॥ द्विपदेतिद्वि पदा । भर्गम् ॥ ककुभा । यशः ॥ अतिच्छन्दसेत्यति छन्दसा । क्षत्रम् ॥ वयोधस इतिवयः धसे । छागम् ॥ वयोधस इतिवयः धसे । छागेन ॥३६॥

॥ इति वाजसनेयिसंहितापदे अष्टाविंशोऽध्यायः ॥

उष्णिहा । अनुष्टुभा । अनुस्तुभेत्यनु स्तुभा । बृहत्या । श्रोत्रम् । शुक्रम् । त्रिष्टुभा । त्रिस्तुभेतित्रि स्तुभा । जगत्या । द्विपदेतिद्वि पदा । अतिछन्दसेत्यति छन्दसा । क्षत्रम् ॥३६॥

विराजेतिवि राजा । यशः । वयोधसऽइतिवयः धसे । वयोधसऽइतिवयः धसे ॥३६॥

॥ इति श्रीवाजसनेयिसंहितायां पदेन अष्टाविंशतिमो[1]ऽध्यायः ॥

१. द्रष्टव्याऽत्र पूर्वत्र ३९६ पृष्ठस्था टिप्पणी २ ।

# एकोनत्रिंशोऽध्यायः

समिद्ध्ऽइतिसम् इद्धः। अञ्जन्। कृदरम्। मतीनाम्। घृतम्। अग्ने। मधुमदितिमधु मत्। पिन्वमानः॥ वाजी। वहन्। वाजिनम्। जातवेदऽइतिजात वेदः। देवानाम्। वक्षि। प्रियम्। आ। सधस्थमितिसध स्थम्॥१॥

घृतेन। अञ्जन्। सम्। पथः। देवयानानितिदेव यानान्। प्रजानन्नितिप्र जानन्। वाजी। अपि। एतु। देवान्॥ अनु। त्वा। सप्ते। प्रदिशऽइतिप्र दिशः। सचन्ताम्। स्वधाम्। अस्मै। यजमानाय। धेहि॥२॥

ईड्यः। च। असि। वन्द्यः। च। वाजिन्। आशुः। च। असि। मेध्यः। च। सप्ते॥ अग्निः। त्वा। देवैः। वसुभिरितिवसु भिः। सजोषाऽइतिस जोषाः। प्रीतम्। वह्निम्। वहतु। जातवेदाऽइतिजात वेदाः॥३॥

---

समिद्धऽइतिसम् इद्धः। अग्ने। पिन्वमानः। वक्षि। सधस्थमितिसध स्थम्॥१॥

प्रजानन्नितिप्र जानन्। सप्ते। प्रदिशऽइतिप्र दिशः। अस्मै॥२॥

ईड्यः। मेध्यः। सप्ते। अग्निः। वह्निम्॥३॥

जातवेदऽइतिजात वेदः। प्रियम्॥१॥

देवयानानितिदेव [1]यानान्। यजमानाय॥२॥

वसुभिरितिवसु भिः। जातवेदाऽइतिजात वेदाः॥३॥

---

१. ककोशशैल्यनुसारमिह 'यानान्' इत्येवं लघुना यकारेण भाव्यम्।

स्तीर्णम् । बर्हिः । सुष्टरीम । सुस्तरीमेतिसु स्तरीम । जुषाणा । उरु । पृथु । प्रथमानम् । पृथिव्याम् ॥ देवेभिः । युक्तम् । अदितिः । सजोषाऽइतिस जोषाः । स्योनम् । कृण्वाना । सुविते । दधातु ॥४॥

एताः । ऊँऽइत्यूँ । वः । सुभगाऽइतिसु भगाः । विश्वरूपाऽइतिविश्व रूपाः । वि । पक्षोभिरितिपक्षः भिः । श्रयमाणाः । उत् । आतैः ॥ ऋष्वाः । सतीः । कवषः । शुम्भमानाः । द्वारः । देवीः । सुप्रायणाः । सुप्रायनाऽइतिसु [1]प्रायनाः । भवन्तु ॥५॥

अन्तरा । मित्रावरुणा । चरन्तीऽइतिचरन्ती । मुखम् । यज्ञानाम् । अभि । सवँविदानेऽइतिसम् [2]विदाने ॥ उषासा ।

---

सुष्टरीम । सुस्तरीमेतिसु स्तरीम । पृथिव्याम् । युक्तम् । कृण्वाना ॥४॥
ऊँऽइत्यूँ । विश्वरूपाऽइतिविश्व रूपाः । पक्षोभिरितिपक्षः भिः । ऋष्वाः । सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः ॥५॥
मित्रावरुणा । यज्ञानाम् । उषसेत्युषसा । सुहिरण्येऽइतिसु हिरण्ये ।

---

[3]सुष्टरीम । [4]सुस्तुरीमेतिसु स्तुरीम । य्युक्तम् ॥४॥
वः[5] । विश्वरूपाऽइतिविश्व रूपाः । [6]विपक्षभिरितिविपक्ष भिः । श्रयमाणाः । सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः ॥५॥
य्यज्ञानाम् । [7]सम्विदानेऽइतिसम् विदाने । वाम् । य्योनौ ।

---

१. 'प्रायनाः' इति काशिकः पाठः ।
२. 'विदाने' इति काशिकः पाठः ।
३. अपपाठोऽयम्, 'सुष्टरीम' इत्येवं पाठेन भाव्यम् ।
४. अपपाठः, स्वरदोषोऽपि । 'सुस्तरीमेतिसु स्तरीम' इति साधुः ।
५. कपाठे संहितावद् 'वः' गुरुर्न भवत्यतः 'वः' इत्येव साधुः ।
६. अपपाठः, 'वि । पक्षोभिरितिपक्षः भिः' इत्येवं पाठेन भाव्यम् ।
७. कशैल्यनुसारमिह 'सवँविदानेऽइतिसम् विदाने' इत्येवं साधुर्ज्ञेयः ।

उषसेत्युषसा । वाम् । सुहिरण्येऽइतिसु 'हिरण्ये । सुशिल्पे-ऽइतिसु शिल्पे । ऋतस्य । योनौ । इह । सादयामि ॥६॥

प्रथमा । वाम् । सरथिनेतिस रथिना । सुवर्णेतिसु वर्णा । देवौ । पश्यन्तौ । भुवनानि । विश्वा ॥ अपि-प्रयम् । चोदना । वाम् । मिमाना । होतारा । ज्योतिः । प्रदिशेतिप्र दिशा । दिशन्ता ॥७॥

आदित्यैः । नः । भारती । वष्टु । यज्ञम् । सरस्वती । सह । रुद्रैः । नः । आवीत् ॥ इडा । उपहूतेत्युप हूता । वसुभिरितिवसु भिः । सजोषाऽइतिस जोषाः । यज्ञम् । नः । देवीः । अमृतेषु । धत्त ॥८॥

त्वष्टा । वीरम् । देवकाममितिदेव कामम् । जजान । त्वष्टुः । अर्वा । जायते । आशुः । अश्वः ॥ त्वष्टा । इदम् । विश्वम् । भुवनम् । जजान । बहोः । कर्त्तारम् । इह । यक्षि । होतरितिहोतः ॥९॥

---

सुशिल्पेऽइतिसु शिल्पे ॥६॥

पश्यन्तौ । विश्वा । अपिप्रयम् । प्रदिशेतिप्र दिशा ॥७॥

आदित्यैः । वष्टु । यज्ञम् । रुद्रैः । उपहूतेत्युप हूता । यज्ञम् ॥८॥

त्वष्टा । त्वष्टुः । अश्वः । त्वष्टा । विश्वम् । यक्षि ॥९॥

---

सादयामि ॥६॥

वाम् । सुवर्णेतिसु वर्णा । अपिप्रयम् । वाम् ॥७॥

यज्ञम् । वसुभिरितिवसु भिः । यज्ञम् ॥८॥

जायते । यक्षि ॥९॥

---

१. 'हिरण्ये' इति काशिकः पाठः ।

अश्व॑÷ । घृतेन॑ । त्मन्या॑ । सम॑क्क्तऽइति॒सम् अ॑क्क्तꣳ । उप॑ । दे॒वान् । ऋ॒तु॒श॒ऽइत्यृ॑तु॒ शः॒ । पाथः॑÷ । ए॒तु ॥ व॒न॒स्प्पतिः॑÷ । दे॒व॒लो॒कमिति॑दे॒व लो॒कम् । प्र॒जा॒नन्निति॑प्र जा॒नन् । अ॒ग्निना॑ । ह॒व्या । स्व॒दि॒तानि॑ । व॒क्क्ष॒त् ॥१०॥

प्र॒जाप॑ते॒रिति॑प्र॒जा प॑तेः । तप॑सा । वा॒वृ॒धा॒नः । व॒वृ॒धा॒नऽइति॑व॒वृ॒धा॒नः । स॒द्य॒ः । जा॒तः । द॒धि॒षे॒ । य॒ज्ज्ञम् । अ॒ग्ने॒ ॥ स्वाहा॑कृते॒नेति॒स्वाहा॑ कृतेन । ह॒विषा॑ । पु॒रो॒गा॒ऽइति॑पु॒रः गाः । या॒हि । सा॒द्ध्या । ह॒विः । अ॒द॒न्तु॒ । दे॒वाः ॥११॥

यत् । अक्र॑न्दः । प्र॒थ॒मम् । जाय॑मानः । उ॒द्यन्नित्यु॑त् यन् । स॒मु॒द्रात् । उ॒त । वा॒ । पुरी॑षात् ॥ श्ये॒नस्य॑ । प॒क्क्षा । ह॒रि॒णस्य॑ । बा॒हूऽइति॑बा॒हू । उ॒प॒स्तु॒त्त्य॒मित्त्यु॑प॒ स्तु॒त्त्य॑म् । महि॑ । जा॒तम् । ते॒ । अ॒र्व॒न् ॥१२॥

---

अश्वः॑÷ । त्मन्या॑ । सम॑क्तऽइति॒सम् अ॑क्तः । ऋ॒तु॒श॒ऽइत्यृ॑तु॒ शः । व॒न॒स्पतिः॑÷ । प्र॒जा॒नन्निति॑प्र जा॒नन् । अ॒ग्निना॑ । ह॒व्या । व॒क्ष॒त् ॥१०॥

प्र॒जाप॑ते॒रिति॑प्र॒जा प॑तेः । स॒द्यः । य॒ज्ञम् । अ॒ग्ने॒ । सा॒ध्या ॥११॥

अक्र॑न्दः । उ॒द्यन्नित्यु॑त् यन् । स॒मु॒द्रात् । प॒क्षा । उ॒प॒स्तु॒त्य॒मित्यु॑प स्तु॒त्य॑म् ॥१२॥

---

ऋ॒तु॒श॒ऽइत्यृ॑तु॒ शः ॥१०॥

व॒वृ॒धा॒नऽइति॑व॒वृ॒धा॒नः । य्य॒ज्ञम् । य्या॒हि ॥११॥

य्यत् । जाय्य॑मानः । उ॒द्यन्नित्यु॑त् [1]य्यन् ॥१२॥

---

१. ककोशशैल्यनुसारमिह 'य्यन्' इत्येवं लघुयकारेण भाव्यम् ।

यमेन । दत्तम् । त्रितः । एनम् । आयुनक् । अयुनगित्त्ययुनक् । इन्द्रः । एनम् । प्रथमः । अधि । अतिष्ठत् ॥ गन्धर्वः । अस्य । रशनाम् । अगृभ्णात् । सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥१३॥

असि । यमः । असि । आदित्त्यः । अर्वन् । असि । त्रितः । गुह्येन । व्रतेन ॥ असि । सोमेन । समया । विपृक्क्तऽइतिवि पृक्क्तः । आहुः । ते । त्रीणि । दिवि । बन्धनानि ॥१४॥

त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्स्वित्त्यप् सु । त्रीणि । अन्तरित्त्यन्तः । समुद्रे ॥ उतेवेत्त्युत इव । मे । वरुणः । छन्त्सि । अर्वन् । यत्र । ते । आहुः । परमम् । जनित्त्रम् ॥१५॥

---

अयुनगित्ययुनक् । अतिष्ठत् । अगृभ्णात् । अश्वम् । अतष्ट ॥१३॥

आदित्यः । गुह्येन । विपृक्तऽइतिवि पृक्तः ॥१४॥

अप्स्वित्यप् सु । अन्तरित्यन्तः । समुद्रे । उतेवेत्युत इव । यत्र । जनित्रम् ॥१५॥

---

व्यमेन । आयुनक् । अयुनगित्ययुनक् ॥१३॥

व्यमः । गुह्येन । समया । विपृक्तऽइतिवि[1] पृक्तः ॥१४॥

[2]आहुः । व्यत्र ॥१५॥

---

१. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

२. अपपाठोऽयम्, मन्त्रे सर्वानुदात्तत्वदर्शनात् निघाताभावनिमित्तस्य चाविद्यमानत्वात्, 'आहुः' इत्येवं युक्तः पाठो ज्ञेयः ।

इमा । ते । वाजिन् । अवमार्ज्जनानीत्त्यव मार्ज्जनानि । इमा । शफानाम् । सनितुरिति । निधानेतिनि धाना ॥ अत्त्र । ते । भद्राः । रशनाः । अपश्श्यम् । ऋतस्य । याः । अभिरक्क्षन्तीत्त्यभि रक्क्षन्ति । गोपाः ॥१६॥

आत्त्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा । पतयन्तम् । पतङ्गम् ॥ शिरः । अपश्श्यम् । पथिभिरितिपथि भिः । सुगेभिरितिसु गेभिः । अरेणुभिरित्त्यरेणु भिः । जेहमानम् । पतत्त्री ॥१७॥

अत्त्र । ते । रूपम् । उत्तममित्त्युत् तमम् । अपश्श्यम् । जिगीषमाणम् । इषः । आ । पदे । गोः ॥ यदा । ते । मर्त्तः । अनु । भोगम् । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरित्त्यजीगः ॥१८॥

---

अवमार्ज्जनानीत्यव मार्ज्जनानि । अत्र । भद्राः । अपश्यम् । अभिरक्षन्तीत्यभि रक्षन्ति ॥१६॥

आत्मानम् । अपश्यम् । अरेणुभिरित्यरेणु भिः । पतत्री ॥१७॥

अत्र । उत्तममित्युत् तमम् । अपश्यम् । ग्रसिष्ठः । अजीगरित्यजीगः ॥१८॥

---

ष्याः ॥१६॥

[1]आ । [1]त्मानम् । पतय्यन्तम् । [2]जेह । मानम् । [3]पतत्रि ॥१७॥

ष्यदा । [4]भागम् ॥१८॥

---

१. 'आत्मानम्' इत्येवमेकपदेऽप्यस्थाने विच्छेदरूपोऽपपाठः ।

२. 'जेहमानम्' इत्येवमेकपदेऽप्यस्थाने विच्छेदरूपोऽपपाठः ।

३. दीर्घकारस्य स्थाने ह्रस्वेकारनिर्देशरूपोऽपपाठः ।

४, 'भोगम्' इत्यस्य स्थाने 'भागम्' इत्यपपाठो लेखकप्रमादजः ।

अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु । भगः । कनीनाम् ॥ अनु । व्रातासः । तव । सख्यम् । ईयुः । अनु । देवाः । ममिरे । वीर्यम् । ते ॥१९॥

हिरण्यशृङ्गऽइतिहिरण्य शृङ्गः । अयः । अस्य । पादाः । मनोजवाऽइतिमनः जवाः । अवरः । इन्द्रः । आसीत् ॥ देवाः । इत् । अस्य । हविरद्यमितिहविः अद्यम् । आयन् । यः । अर्वन्तम् । प्रथमः । अध्यतिष्ठदित्यधि अतिष्ठत् ॥२०॥

ईर्मान्तासऽइतीर्म अन्तासः । सिलिकमध्यमासऽइतिसिलिक मध्यमासः । सम् । शूरणासः । दिव्यासः । अत्याः ॥ हंसाऽइवेतिहंसाः इव । श्रेणिशऽइतिश्रेणि शः । यतन्ते । यत् । आक्षिषुः । दिव्यम् । अज्मम् । [1]अश्वाः ॥२१॥

---

सख्यम् ॥१९॥

हिरण्यशृङ्गऽइतिहिरण्य शृङ्गः । हविरद्यमितिहविः अद्यम् । अध्यतिष्ठदित्यधि अतिष्ठत् ॥२०॥

सिलिकमध्यमासऽइतिसिलिक मध्यमासः । दिव्यासः । अत्याः । आक्षिषुः । दिव्यम् । अज्मम् । [1]अश्वाः ॥२१॥

---

मर्यः । ईयुः । वीर्यम् ॥१९॥

अयः । आयन् । यः ॥२०॥

यतन्ते । यत् । [2]अज्मम् । [1]अश्वाः ॥२१॥

---

१. अत्रापि दीर्घात् स्वरितात् परस्य विसर्गस्याङ्कने चिह्नभेदो ज्ञेयः, यथा 'यवाः' आदिषु (द्र० पृष्ठ ३२२) ।

२. यकारस्य जकारोच्चारणनिमित्ताभेदकारणजोऽपपाठः ।

तव॑ । शरी॑रम् । प॒त॒यि॒ष्णु । अ॒र्व॒न् । तव॑ । चि॒त्तम् । वात॑ऽइ॒वेति॒ वात॑ः इव । ध्रजी॑मान् ॥ तव॑ । शृङ्गा॑णि । विष्ठि॑ता । वि॒स्थि॒तेति॑ वि स्थि॑ता । पु॒रु॒त्रेति॑ पु॒रु त्रा । अर॑ण्येषु । जर्भु॑राणा । च॒र॒न्ति॒ ॥२२॥

श॒सन॑म् । वा॒जी । अर्वा॑ । दे॒व॒द्रीचा॑ । मन॑सा । दीध्या॑नः ॥ अ॒जः । पु॒रः । नी॒य॒ते॒ । नाभि॑ः । अ॒स्य॒ । अनु॑ । प॒श्चात् । क॒वय॑ः । य॒न्ति॒ । रे॒भाः ॥२३॥

प॒र॒मम् । यत् । स॒धस्थ॒मिति॑ स॒ध स्थम् । अर्वा॑न् । अच्छ॑ । पि॒तर॑म् । मा॒तर॑म् । च॒ ॥ अ॒द्य । दे॒वान् । जुष्ट॑तम॒ऽइति॒ जुष्ट॑ तमः । हि । ग॒म्याः । अथ॑ । आ । शा॒स्ते॒ । दा॒शुषे॑ । वार्या॑णि ॥२४॥

समि॑द्ध॒ऽइति॒ सम् इद्धः । अ॒द्य । मनु॑षः । दु॒रो॒णे । दे॒वः । दे॒वान् । य॒ज॒सि॒ । जा॒त॒वे॒द॒ऽइति॑ जा॒त वे॑दः ॥ आ ।

---

प॒त॒यि॒ष्णु । विष्ठि॑ता । वि॒स्थि॒तेति॑ वि स्थि॑ता । पु॒रु॒त्रेति॑ पु॒रु त्रा । अर॑ण्येषु । जर्भु॑राणा ॥२२॥

दे॒व॒द्रीचा॑ । दीध्या॑नः । प॒श्चात् ॥२३॥

स॒धस्थ॒मिति॑ स॒ध स्थम् । अच्छ॑ । अ॒द्य । जुष्ट॑तम॒ऽइति॒ जुष्ट॑ तमः । ग॒म्याः । शा॒स्ते॒ ॥२४॥

समि॑द्ध॒ऽइति॒ सम् इद्धः । अ॒द्य । मि॒त्र॒म॒ह॒ऽइति॑ मित्र महः । चि॒कि॒त्वान् ।

---

प॒त॒यि॒ष्णु । वात॑ऽइ॒वेति॒ वात॑ः इव । वि॒स्थि॒तेति॑ वि[1] स्थि॑ता ॥२२॥

नी॒य॒ते॒ । क॒वय॑ः । य॒न्ति॒ ॥२३॥

यत् । वार्या॑णि ॥२४॥

य॒ज॒सि॒ । जा॒त॒वे॒द॒ऽइति॑ जा॒त वे॑दः ॥२५॥

---

१. ककोशशैल्यनुसारमिह 'वि' इत्येवं गुरुवकारेण भाव्यम् ।

च । वर्हं । मित्रमहुऽइतिंमित्र महद्ं । चिकित्त्वान् । त्वम् । दूतः । कुविः । असि । प्रचेताऽइतिप्र चेताद्ं ॥२५॥

तनूंनपादितितनू नपात् । पथः । ऋतस्यं । यानांन् । मद्ध्वां । समुञ्जन्नितिंसम् अञ्जन् । स्वदय । सुजिह्वेतिंसु जिह्व ॥ मन्मांनि । धीभिः । उत । यज्ञम् । ऋन्धन् । देवत्रेतिंदेव त्रा । च । कृणुहि । अद्ध्वरम् । नद्ं ॥२६॥

नराशंसंस्य । महिमानंम् । एषाम् । उपं । स्तोषाम । यजतस्यं । यज्ञैः ॥ ये । सुक्रतवऽइतिंसु क्रतवद्ं । शुचयद्ं । धियन्धाऽइतिंधियम् धाः । स्वदंन्ति । देवाः । उभयांनि । हुव्या ॥२७॥

आजुह्वानऽइत्त्या जुह्वानद्ं । ईड्यं÷ । वन्द्यं÷ । च । आ । याहि । अग्ने । वसुभिरितिवसु भिद्ं । सजोषा-ऽइतिंस जोषाद्ं ॥ त्वम् । देवानांम् । असि । यह्व । होतां । सः । एनान् । यक्षि । इषितः । यजीयान् ॥२८॥

---

प्रचेताऽइतिप्र चेताद्ं ॥२५॥

मध्वा । सुजिह्वेतिंसु जिह्व । मन्मांनि । यज्ञम् । देवत्रेतिंदेव त्रा । अध्वरम् ॥२६॥

यज्ञैः । सुक्रतवऽइतिंसु क्रतवद्ं । हुव्या ॥२७॥

आजुह्वानऽइत्या जुह्वानद्ं । ईड्यं÷ । अग्ने । यह्व । यक्षि ॥२८॥

---

य्यानांन् । स्वदय्य । य्यज्ञम् ॥२६॥

य्यजतस्यं । य्यज्ञैः । य्ये । शुचय्यद्ं । धिय्यम्धाऽइतिंधिय्यम् धाः । उभय्यानि ॥२७॥

य्याहि । वसुभिरितिवसु भिद्ं । य्यह्व । य्यक्षि । य्यजीय्यान् ॥२८॥

प्राचीनम् । बर्हिः । प्रदिशेतिप्र दिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ॥ वि । ऊँऽइत्यूँ । प्रथते । वितरमितिवि तरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥२९॥

इयचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिभ्यऽइतिपति भ्यः । न । जनयः । शुम्भमानाः ॥ देवीः । द्वारः । बृहतीः । विश्वमिन्वाऽइतिविश्वम् इन्वाः । देवेभ्यः । भवत । सुप्रायणाः । सुप्रायनाऽइतिसु [1]प्रायनाः ॥३०॥

आ । सुष्वयन्ती । [2]सुस्वयन्तीऽइतिसुस्वयन्ती ।

---

प्रदिशेतिप्र दिशा । पृथिव्याः । वस्तोः । वृज्यते । अग्रे । अह्नाम् । ऊँऽइत्यूँ । देवेभ्यः ॥२९॥

पतिभ्यऽइतिपति भ्यः । विश्वमिन्वाऽइतिविश्वम् इन्वाः । देवेभ्यः । सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः ॥३०॥

सुष्वयन्ती । उपाकेऽइत्युपाके । उषासानक्ता । उषसानक्तेत्युषसानक्ता ।

---

वृज्यते । वितरमितिवि तरम् । वरीयः । अदितये ॥२९॥

उर्विया । श्रयन्ताम् । जनयः । विश्वमिन्वाऽइतिविश्वम् इन्वाः । सुप्रायणाः । सुप्रायनाऽइतिसु प्रायनाः ॥३०॥

सुष्वयन्ती । [2]सुस्वयन्तीऽइतिसु स्वयन्ती ।...

---

१. 'प्रायनाः' इति काशिकः पाठः ।

२. अत्र ककोशेऽन्येषु च केषुचित् कोशेषु दयानन्दभाष्येण सह मुद्रिते च पदपाठे 'सुस्वयन्तीऽइतिसु स्वयन्ती' इत्येवमवग्रहो दृश्यते । स अपपाठ एव स्यात् । यतः पदकाराः सन्दिग्धव्युत्पत्तिपदेष्ववग्रहं न कुर्वन्ति (द्र० कात्या० प्राति० ५।३८) । तथा चोक्तम्—"आदिमध्यान्तलुप्तानि समासान्यायभाञ्जि च । नावगृह्णन्ति कवयः पदान्यागमवन्ति च ।।" (का० प्रा० ५।४५ व्याख्या-

यजतेऽइतियजते । उपाकेऽइत्युपाके । उषासानक्ता । उषसानक्तेत्युषसानक्ता । सदताम् । नि । योनौ ॥ दिव्येऽइतिदिव्ये । योषणेऽइतियोषणे । बृहतीऽइतिबृहती । सुरुक्मेऽइतिसु रुक्मे । अधि । श्रियम् । शुक्रपिशमिति-शुक्र पिशम् । दधानेऽइतिदधाने ॥३१॥

दैव्या । होतारा । प्रथमा । सुवाचेतिसु वाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ॥ प्रचोदयन्तेतिप्र चोदयन्ता । विदथेषु । कारूऽइतिकारू ॥३२॥

आ । नः । यज्ञम् । भारती । तूयम् । एतु । इडा । मनुष्वत् । इह । चेतयन्ती ॥ तिस्रः । देवीः । बर्हिः । आ । इदम् । स्योनम् । सरस्वती । स्वपसऽइतिसु अपसः । सदन्तु ॥३३॥

---

दिव्येऽइतिदिव्ये । सुरुक्मेऽइतिसु रुक्मे । शुक्रपिशमितिशुक्र पिशम् ॥३१॥

दैव्या । यज्ञम् । यजध्यै । प्रचोदयन्तेतिप्र चोदयन्ता ॥३२॥

यज्ञम् । मनुष्वत् ॥३३॥

---

य्यजतेऽइतिय्यजते[1] । य्योनौ । य्योषणेऽइतिय्योषणे । श्रिय्यम् ॥३१॥

सुवाचेतिसु वाचा । मिमानाः[2] । य्यज्ञम् । य्यजध्यै । प्रचोदय्यन्तेतिप्र चोदय्यन्ता ॥३२॥

य्यज्ञम् । तूय्यम् । चेतय्यन्ती ॥३३॥

---

यामुद्धृतं प्राचीनं वचनम्) । मन्त्रोऽयमृग्वेदेऽपि १०।११०।६श्रूयते, तत्रापि पदमिदं नावगृह्यते । अस्य पदस्य विविधा व्युत्पत्तयस्तत्तद्भाष्यग्रन्थेषु द्रष्टव्याः ।

१. ककोशशैल्यनुसारं 'य्यजते' इत्येवं पाठेन भाव्यम् ।

२. अपपाठोऽयम् स्यात् ।

यः । इमेऽइतीमे । द्यावापृथिवीऽइतिद्यावापृथिवी । जनित्रीऽइतिजनित्री । रूपैः । अपिंशत् । भुवनानि । विश्वा ॥ तम् । अद्य । होतः । इषितः । यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥३४॥

उपावसृजेत्युप अवसृज । त्मन्या । समञ्जन्निति सम् अञ्जन् । देवानाम् । पाथः । ऋतुथेत्यृतु था । हवींषि ॥ वनस्पतिः । शमिता । देवः । अग्निः । स्वदन्तु । हव्यम् । मधुना । घृतेन ॥३५॥

सद्यः । जातः । वि । अमिमीत । यज्ञम् । अग्निः । देवानाम् । अभवत् । पुरोगाऽइतिपुरः गाः ॥ अस्य । होतुः । प्रदिशीतिप्र दिशि । ऋतस्य । वाचि । स्वाहाकृतमितिस्वाहा कृतम् । हविः । अदन्तु । देवाः ॥३६॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ॥ सम् । उषद्भिरित्युषत् भिः । अजायथाः ॥३७॥

---

द्यावापृथिवीऽइतिद्यावापृथिवी । जनित्रीऽइतिजनित्री । विश्वा । अद्य । त्वष्टारम् । यक्षि । विद्वान् ॥३४॥

उपावसृजेत्युप अवसृज । त्मन्या । ऋतुथेत्यृतु था । वनस्पतिः । अग्निः । हव्यम् ॥३५॥

सद्यः । यज्ञम् । अग्निः । प्रदिशीतिप्र दिशि ॥३६॥

कृण्वन् । उषद्भिरित्युषत् भिः ॥३७॥

---

द्यः । य्यजीग्यान् । य्यक्षि ॥३४॥

ऋतुथेत्यृतु था ॥३५॥ य्यज्ञम् ॥३६॥

मर्याः । अजायथाः ॥३७॥

जीमूतस्येवेतिजीमूतस्य इव । भवति । प्रतीकम् । यत् । वर्म्मी । याति । समदामितिस मदाम् । उपस्थऽइत्युप स्थे ॥ अनाविद्धया । तन्वा । जय । त्वम् । सः । त्वा । वर्म्मणः । महिमा । पिपर्त्तु ॥३८॥

धन्वना । गाः । धन्वना । आजिम् । जयेम । धन्वना । तीव्राः । समदऽइतिस मदः । जयेम ॥ धनुः । शत्रोः । अपकाममित्यप कामम् । कृणोति । धन्वना । सर्वाः । प्रदिशऽइतिप्र दिशः । जयेम ॥३९॥

वक्क्ष्यन्तीवेतिवक्क्ष्यन्ती इव । इत् । आ । गनीगन्ति । कर्णम् । प्रियम् । सखायम् । परिषस्वजाना । परिसस्वजानेतिपरि [1]सस्वजाना ॥ योषेवेतियोषा इव । शिङ्क्ते । विततेतिवि तता । अधि । धन्वन् । ज्या । इयम् । समने । पारयन्ती ॥४०॥

---

उपस्थऽइत्युप स्थे । अनाविद्धया । तन्वा ॥३८॥

धन्वना । धन्वना । धन्वना । तीव्राः । शत्रोः । अपकाममित्यप कामम् । धन्वना । प्रदिशऽइतिप्र दिशः ॥३९॥

वक्षयन्तीवेतिवक्षयन्ती इव । धन्वन् ॥४०॥

---

य्यत् । य्याति । अनाविद्धय्या । जय्य ॥३८॥

जय्येम । जय्येम । जय्येम ॥३९॥

वक्षयन्तीवेतिवक्षयन्ती इव । प्रिय्यम् । सखाय्यम् । य्योषेवेतिय्योषा[2] इव । विततेतिवि तता । इय्यम् । पारय्यन्ती ॥४०॥

---

१. 'सस्वजाना' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारं 'य्योषा' इति साधुः ।

तेऽइतिते । आचरन्तीऽइत्या चरन्ती । समनेवेतिसमना इव । योषा । मातेवेतिमाता इव । पुत्रम् । बिभृताम् । उपस्थऽइत्युप स्थे ॥ अप । शत्रून् । विद्ध्यताम् । सवँविदानेऽइतिसम् [1]विदाने । आर्त्नीऽइत्यार्त्नी । इमेऽइतीमे । विष्फुरन्ती । विस्फुरन्तीऽइतिवि स्फुरन्ती । अमित्रान् ॥४१॥

बह्वीनाम् । पिता । बहुः । अस्य । पुत्रः । चिश्चा । कृणोति । समना । अवगत्येत्यव गत्य ॥ इषुधिरितीषु धिः । सङ्काः । पृतनाः । च । सर्वाः । पृष्ठे । निनद्धऽइतिनि नद्धः । जयति । प्रसूतऽइतिप्र सूतः ॥४२॥

रथे । तिष्ठन् । नयति । वाजिनः । पुरः । यत्र-यत्रेतियत्र यत्र । कामयते । सुषारथिः । सुसारथिरितिसु

---

आचरन्तीऽइत्या चरन्ती । पुत्रम् । उपस्थऽइत्युप स्थे । शत्रून् । विध्यताम् । आर्त्नीऽइत्यार्त्नी । विष्फुरन्ती । अमित्रान् ॥४१॥

बह्वीनाम् । पुत्रः । चिश्चा । अवगत्येत्यव गत्य । पृष्ठे । निनद्धऽइतिनि नद्धः । प्रसूतऽइतिप्र सूतः ॥४२॥

तिष्ठन् । यत्रयत्रेतियत्र यत्र । पश्चात् । यच्छन्ति । रश्मयः ॥४३॥

---

य्योषा । [2]सम्विदानेऽइतिसम् विदाने । विस्फुरन्तीऽइतिवि[3] स्फुरन्ती ॥४१॥

चिश्च्या[4] । जय्यति ॥४२॥

नय्यति । य्यत्रय्यत्रेतिय्यत्र[5] य्यत्र । कामय्यते । पनाय्यत । य्यछन्ति ।

---

१. 'विदाने' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'सवँविदानेऽइतिसम् विदाने' इत्येवं शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारं 'वि' इति साधुः ।

४. पाठान्तरं स्यात् । इह 'घृतश्चुता मधुश्चुता' इत्यस्य (पृष्ठ २८८) टिप्पणी द्रष्टव्या ।

५. अपपाठोऽयम्, कशैल्यनुसारं '०य्यत्र य्यत्र' इत्येवं पाठेन भाव्यम् ।

[1]सारथिः ॥ अभीशूनाम् । महिमानम् । पनायत । मनः । पश्चात् । अनु । यच्छन्ति । रश्मयः ॥४३॥

तीव्रान् । घोषान् । कृण्वते । वृषपाणयऽइतिवृष पाणयः । [2]अश्वाः । रथेभिः । सह । वाजयन्तः ॥ अवक्रामन्तऽइत्यव क्रामन्तः । प्रपदैरितिप्र पदैः । अमित्रान् । क्षिणन्ति । शत्रून् । अनपव्ययन्तऽइत्यनप व्ययन्तः ॥४४॥

रथवाहनम् । रथवाहनमितिरथ वाहनम् । हविः । अस्य । नाम । यत्र । आयुधम् । निहितमितिनि हितम् । अस्य । वर्म ॥ तत्र । रथम् । उप । शग्मम् । सदेम । विश्वाहा । वयम् । सुमनस्यमानाऽइतिसु [3]मनस्यमानाः ॥४५॥

स्वादुषंसदः । स्वादुसंसदऽइतिस्वादु संसदः ।

---

तीव्रान् । कृण्वते । [2]अश्वाः । अवक्रामन्तऽइत्यव क्रामन्तः । प्रपदैरितिप्र पदैः । अमित्रान् । शत्रून् । अनपव्ययन्तऽइत्यनप व्ययन्तः ॥४४॥

यत्र । तत्र । शग्मम् । विश्वाहा ॥४५॥

---

रश्मयः ॥४३॥

[4]वृषपाणयऽइतिवृष[5] पाणयः । [2]अश्वाः । वाजयन्तः । अनपव्ययन्तऽइत्यनप व्ययन्तः ॥४४॥

रथवाहनमितिरथ वाहनम् । यत्र । आयुधम् । वयम् ॥४५॥

---

१. 'सारथिः' इति काशिकः पाठः ।

२. द्र० एतत्पदविषयका टिप्पणी २६।२१ ॥

३. 'मनस्यमानाः' इति काशिकः पाठः ।

४. ककोशशैल्यनुसारमिह 'वृषपाणयः०' इत्येव पाठेन भाव्यम् ।

पितरं॑ः । व॒यो॒धाऽइति॑वयः॒ऽधाः । कृ॒च्छ्रे॒श्रि॒तऽइति॑कृच्छ्रे॒ऽश्रितं॑ः । शक्ती॑वन्तः । शक्ति॑वन्त॒ऽइति॒शक्ति॑ऽवन्तः । ग॒भी॒राः ॥ चि॒त्रसे॑ना॒ऽइति॑चि॒त्रऽसे॑नाः । इषु॑ब॒ला॒ऽइती॒षु॑ऽबलाः । अमृ॑ध्राः । स॒तोवी॑रा॒ऽइति॑स॒तःऽवी॑राः । उ॒रवं॑ः । व्रा॒त॒सा॒हाः । व्रा॒त॒स॒हाऽइति॑व्रात॒ऽस॒हाः ॥४६॥

ब्राह्म॑णासः । पित॑रः । सोम्म्या॑सः । शि॒वेऽइति॑शि॒वे । नः । द्यावा॑पृथि॒वीऽइति॒द्यावा॑पृथि॒वी । अ॒ने॒हसा॑ ॥ पूषा । नः । पा॒तु । दु॒रि॒तादिति॑दुः॒ऽइ॒तात् । [1]ऋ॒ता॒वृ॒धः । [1]ऋ॒त॒वृ॒ध॒ऽइत्यृ॒त॒ऽवृ॒धः । रक्ष॑ । माकिः॑ । नः । अ॒घ-शं॑स॒ऽइत्य॒घऽशं॑सः । ई॒श॒त ॥४७॥

सु॒प॒र्ण्णमिति॑सु॒ऽप॒र्ण्णम् । व॒स्ते॒ । मृ॒गः । अ॒स्याः । दन्तः॑ । गोभिः॑ । सन्न॑द्धे॒ति॒सम्ऽन॑द्धा । प॒त॒ति ।

---

कृ॒च्छ्रे॒श्रि॒तऽइति॑कृच्छ्रे॒ऽश्रितः॑ । शक्ती॑वन्तः । शक्ति॑वन्त॒ऽइति॒शक्ति॑ऽवन्तः । चि॒त्रसे॑ना॒ऽइति॑चि॒त्रऽसे॑नाः । अमृ॑ध्राः ॥४६॥

ब्राह्म॑णासः । सोम्या॑सः । द्यावा॑पृथि॒वीऽइति॒द्यावा॑पृथि॒वी । ऋ॒त॒वृ॒ध॒ऽइत्यृ॒त॒ऽवृ॒धः । रक्ष॑ । अ॒घश॑ंस॒ऽइत्य॒घऽशं॑सः ॥४७॥

व॒स्ते॒ । सन्न॑द्धे॒ति॒सम्ऽन॑द्धा । प्रसू॑ते॒ति॒प्रऽसू॑ता । यत्र॑ । तत्र॑ ।

---

व॒यो॒धा॒ऽइति॑व॒यः॒ऽधाः । शक्ति॑वन्त॒ऽइति॒शक्ति॑ऽवन्तः । स॒तोवी॑रा॒ऽइति॑स॒तःऽवी॑राः । व्रा॒त॒सा॒हा[2]ऽइति॑व्रात॒ऽस॒हाः ॥४६॥

ऋ॒त॒वृ॒ध॒ऽइत्यृ॒त॒ऽवृ॒धः ॥४७॥

---

१. काशीमुद्रिते 'ऋ॒ता॒वृ॒धः॑ । ऋ॒त॒वृ॒ध॒ऽइत्यृ॒त॒ऽवृ॒धः॑' इत्येवं पाठः । मन्त्रे सर्वानुदात्तस्वरदर्शनात् उत्तरस्य 'रक्ष' क्रियापदस्य पादादिस्वरदर्शनाच्चापपाठ एव स्यात् ।

२. अपपाठोऽयम्, 'व्रा॒त॒स॒हा' इत्येवं साधुः ।

प्रसूतेतिप्र सूता ॥ यत्र । नरः । सम् । च । वि । च । द्रवन्ति । तत्र । अस्मभ्यम् । इषवः । शर्म्म । यꣳसन् ॥४८॥

ऋजीते । परि । वृङ्धि । नः । अश्मा । भवतु । नः । तनूः ॥ सोमः । अधि । ब्रवीतु । नः । अदितिः । शर्म्म । यच्छतु ॥४९॥

आ । जङ्घन्ति । सानु । एषाम् । जघनान् । उप । जिघ्नते ॥ अश्वाजनीत्यश्व अजनि । प्रचेतसऽइतिप्र चेतसः । अश्वान् । समत्स्वितिसमत् सु । चोदय ॥५०॥

अहिरिवेत्यहिः इव । भोगैः । परि । एति । बाहुम् । ज्यायाः । हेतिम् । परिबाधमानऽइतिपरि बाधमानः ॥ हस्तघ्नऽइतिहस्त घ्नः । विश्वा । वयुनानि । विद्वान् । पुमान् । पुमाꣳसम् । परि । पातु । विश्वतः ॥५१॥

---

अस्मभ्यम् ॥४८॥

अश्मा । यच्छतु ॥४९॥

जिघ्नते । अश्वाजनीत्यश्व अजनि । प्रचेतसऽइतिप्र चेतसः । अश्वान् । समत्स्वितिसमत् सु ॥५०॥

अहिरिवेत्यहिः इव । हस्तघ्नऽइतिहस्त घ्नः । विश्वा । विद्वान् । विश्वतः ॥५१॥

---

य्यत्र । य्यꣳसन् ॥४८॥

य्यच्छतु ॥४९॥

[1] समत्स्वितिसमत् सु । चोदय ॥५०॥

ज्यायाः । व्वयुनानि ॥५१॥

---

१. द्र० पूर्वत्र ४५ पृष्ठस्था टिप्पणी २ ।

वनस्पते । वीड्वङ्गऽइतिवीडु अङ्गः । हि । भूयाः । अस्मत्सखेत्यस्मत् सखा । प्रतरणऽइतिप्र तरणः । सुवीरऽइतिसु वीरः ॥ गोभिः । सन्नद्धऽइतिसम् नद्धः । असि । वीडयस्व । आस्थातेत्या स्थाता । ते । जयतु । जेत्वानि ॥५२॥

दिवः । पृथिव्याः । परि । ओजः । उद्भृतमित्युत् भृतम् । वनस्पतिभ्यऽइतिवनस्पति भ्यः । परि । आभृतमित्या भृतम् । सहः ॥ अपाम् । ओज्मानम् । परि । गोभिः । आवृतमित्या वृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥५३॥

इन्द्रस्य । वज्रः । मरुताम् । अनीकम् । मित्रस्य । गर्भः । वरुणस्य । नाभिः ॥ सः । इमाम् । नः ।

---

वनस्पते । वीड्वङ्गऽइतिवीडु अङ्गः । अस्मत्सखेत्यस्मत् सखा । प्रतरणऽइतिप्र तरणः । सन्नद्धऽइतिसम् नद्धः । आस्थातेत्या स्थाता । जेत्वानि ॥५२॥

पृथिव्याः । उद्भृतमित्युत् भृतम् । वनस्पतिभ्यऽइतिवनस्पति भ्यः । आभृतमित्या भृतम् । ओज्मानम् । आवृतमित्या वृतम् । वज्रम् ॥५३॥

वज्रः । मित्रस्य । हव्यदातिमितिहव्य दातिम् । हव्या ॥५४॥

---

वीड्वङ्गऽइतिवीडु[1] अङ्गः । भूयाः । [2]अस्मत्सखेत्यस्मत् सखा । सुवीरऽइतिसु वीरः । वीडयस्व । जयतु ॥५२॥

वनस्पतिभ्यऽइतिवनस्पति भ्यः । [3]ओज्मानम् । आवृतमित्या वृतम् । यज ॥५३॥

---

१. ककोशशैल्यनुसारमिह 'वी' इत्येवं पाठेन भाव्यम् ।

२. द्र० पूर्वत्र ४५ पृष्ठस्था टिप्पणी २ ।

३. यकारस्य जकारोच्चारणजोऽपपाठः ।

हृङ्यदा॑तिमिति॑हृङ्य दा॑तिम् । जुषाणः॑ । देव॑ । रथ । प्रति॑ । हृङ्या । गृभाय ॥५४॥

उप॑ । श्वासय । पृथिवीम् । उत । द्याम् । पुरुत्रेति॑पुरु त्रा । ते । मनुताम् । विष्ठितम् । विस्थितमितिवि स्थितम् । जग॑त् ॥ सः॑ । दुन्दुभे । सजूरिति॑सजूः॑ । इन्द्रे॑ण । देवैः॑ । दूरात् । दवी॑यः॑ । अप॑ । सेध । शत्रू॑न् ॥५५॥

आ । क्रन्दय । बल॑म् । ओजः॑ । नः॑ । आ । धाः॑ । निः॑ । स्तनिहि । दुरितेति॑दुः॑ इता । बाध॑मानः॑ ॥ अप॑ । प्रोथ। दुन्दुभे । दुच्छुनाः॑ । इतः॑ । इन्द्रस्य । मुष्टिः॑ । असि । वीडय॑स्व ॥५६॥

आ । अमूः॑ । अज । प्रत्यावर्त्तयेति॑प्रति आवर्त्तय । इमाः॑ । केतुमदिति॑केतु मत् । दुन्दुभिः॑ । वावदीति ॥ सम् । अश्ववपर्णाऽइत्यश्ववपर्णाः॑ । चरन्ति । नः॑ । नरः॑ । अस्माकम् । इन्द्र । रथिनः॑ । जयन्तु ॥५७॥

---

पुरुत्रेति॑पुरु त्रा । विष्ठितम् । विस्थितमितिवि स्थितम् । शत्रू॑न् ॥५५॥

दुच्छुनाः॑ । मुष्टिः॑ ॥५६॥

प्रत्यावर्त्तयेति॑प्रति आवर्त्तय । अश्वपर्णाऽइत्यश्व पर्णाः॑ । अस्माकम् ॥५७

---

गृभाय ॥५४॥

श्वासय । विस्थितमितिवि[1] स्थितम् । दवी॑यः॑ ॥५५॥

क्रन्दय । वीडयस्व ॥५६॥

प्रत्यावर्त्तयेति॑प्रति आवर्त्तय । [2][जयन्तु] ॥५७॥

---

१. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

२. ककोश इह पदलेखनाय स्थानं रिक्तं वर्तते ।

आग्नेयः । कृष्णग्रीवऽइतिकृष्ण ग्रीवः । सारस्वती । मेषी । बभ्रुः । सौम्यः । पौष्णः । श्यामः । शितिपृष्ठऽइतिशिति पृष्ठः । बार्हस्पत्यः । शिल्पः । वैश्वदेवऽइतिवैश्व देवः । ऐन्द्रः । अरुणः । मारुतः । कल्माषः । ऐन्द्राग्नः । सꣳहितऽइतिसम् हितः । अधोरामऽइत्यधः रामः । सावित्रः । वारुणः । कृष्णः । एकशितिपादित्येक शितिपात् । पेत्वः ॥५८॥

अग्नये । अनीकवतऽइत्यनीक वते । रोहिताञ्जिरितिरोहित अञ्जिः । अनड्वान् । अधोरामावित्यधः रामौ । सावित्रौ । पौष्णौ । रजतनाभीऽइतिरजत नाभी । वैश्वदेवावितिवैश्व देवौ । पिशङ्गौ । तूपरौ । मारुतः । कल्माषः ।

---

आग्नेयः । कृष्णग्रीवऽइतिकृष्ण ग्रीवः । बभ्रुः । सौम्यः । पौष्णः । शितिपृष्ठऽइतिशिति पृष्ठः । बार्हस्पत्यः । शिल्पः । वैश्वदेवऽइतिवैश्व देवः । कल्माषः । ऐन्द्राग्नः । अधोरामऽइत्यधः रामः । सावित्रः । कृष्णः । एकशितिपादित्येक शितिपात् । पेत्वः ॥५८॥

अग्नये । अनीकवतऽइत्यनीक वते । अनड्वान् । अधोरामावित्यधः रामौ । सावित्रौ । पौष्णौ । वैश्वदेवावितिवैश्व देवौ । कल्माषः । आग्नेयः ।

---

आग्नेयः । [1]सारस्वती । वैश्वदेवऽइतिवैश्व देवः ॥५८॥

अग्नये । अनीकवतऽइत्यनीक वते । रोहिताञ्जिरितिरोहित [2]अञ्जिः ।

---

१. अपपाठोऽयं स्वरदोषात् । अन्यत्र (२४।१; २९।५९) च शुद्धस्यैव स्वरस्योपलम्भाच्च ।

२. अपपाठोऽयं स्वरदोषात् । यद्वा यथा ककोशे तैत्तिरीयवत् सकारेपरतः प्रथमस्य द्वितीयापत्तिः प्रायेण दृश्यते, तथैवात्र तैत्तिरीयपदस्वरनियमानुराधेनायं स्वरो ज्ञेयः ।

आग्नेयः । कृष्णः । अजः । सारस्वती । मेषी । बभ्रुः । पेत्वः ॥५९॥

अग्नये । गायत्राय । त्रिवृतऽइतित्रि वृते । राथन्तरायेतिराथम् तराय । अष्टाकपालऽइत्यष्टा कपालः । इन्द्राय । त्रैष्टुभाय । त्रैस्तुभायेतित्रैस्तुभाय । पञ्चदशायेतिपञ्च दशाय । बार्हताय । एकादशकपालऽइत्येकादश कपालः । विश्वेभ्यः । देवेभ्यः । जागतेभ्यः । सप्तदशेभ्यऽइतिसप्त दशेभ्यः । वैरूपेभ्यः । द्वादशकपालऽइतिद्वादश कपालः । मित्रावरुणाभ्याम् । आनुष्टुभाभ्याम् । आनुस्तुभाभ्यामित्यानु स्तुभाभ्याम् । एकविंशाभ्यामित्येक विंशाभ्याम् । वैराजाभ्याम् । पयस्या । बृहस्पतये । पाङ्क्ताय । त्रिणवाय । त्रिनवायेतित्रि नवाय । शाक्वराय ।

---

कृष्णः । पेत्वः ॥५९॥

अग्नये । गायत्राय । त्रिवृतऽइतित्रि वृते । अष्टाकपालऽइत्यष्टा कपालः । त्रैष्टुभाय । त्रैस्तुभायेतित्रैस्तुभाय । एकादशकपालऽइत्येकादश कपालः । विश्वेभ्यः । देवेभ्यः । जागतेभ्यः । सप्तदशेभ्यऽइतिसप्त दशेभ्यः । वैरूपेभ्यः । द्वादशकपालऽइतिद्वादश कपालः । मित्रावरुणाभ्याम् । आनुष्टुभाभ्याम् । आनुस्तुभाभ्यामित्यानु स्तुभाभ्याम् । एकविंशाभ्यामित्येक विंशाभ्याम् । वैराजाभ्याम् । बृहस्पतये । त्रिनवायेतित्रि नवाय । शाक्वराय । सवित्रे । औष्णिहाय । त्रयस्त्रिंशायेतित्रयः त्रिंशाय ।

---

वैश्वदेवावितिवैश्व देवौ । आग्नेयः । ५९॥

अग्नये । गायत्राय । त्रिवृतऽइतित्रि वृते । राथन्तरायेतिराथम् तराय । इन्द्राय । त्रैष्टुभाय । त्रैस्तुभायेतित्रैस्तुभाय । पञ्चदशायेतिपञ्च दशाय । बार्हताय । एकविंशाभ्यामित्येक विंशाभ्याम् । पयस्या । बृहस्पतये । पाङ्क्ताय । त्रिणवाय । त्रिनवायेतित्रि नवाय । शाक्वराय ।

चरुः । सवित्रे । औष्णिहाय । त्रयस्त्रिंशायेतित्रयः त्रिंशायं । रैवताय । द्वादशकपालऽइतिद्वादश कपालं । प्राजापत्त्यऽइतिप्राजा पत्त्यः । चरुः । अदित्यै । विष्णु-पत्न्याऽइतिविष्णु पत्न्यै । चरुः । अग्नये । वैश्वानराय । द्वादशकपालऽइतिद्वादश कपालं । अनुमत्त्याऽइत्यनु मत्त्यै । अष्टाकपालऽइत्यष्टा कपालं ॥६०॥

॥ इति वाजसनेयिसंहितापदे एकोनत्रिंशोऽध्यायः ॥

---

द्वादशकपालऽइतिद्वादश कपालं । प्राजापत्यऽइतिप्राजा पत्यः । अदित्यै । विष्णुपत्न्याऽइतिविष्णु पत्न्यै । अग्नये । वैश्वानराय । द्वादशकपालऽइतिद्वादश कपालं । अनुमत्याऽइत्यनु मत्यै । अष्टाकपालऽइत्यष्टा कपालं ॥६०॥

॥ इतिवाजसनेयसंहितापदे एकोनत्रिंशतिमो[1]ऽध्यायः ॥

---

औष्णिहाय । त्रयस्त्रिंशायेतित्रयः त्रिंशाय । रैवताय । विष्णुपत्न्या-ऽइतिविष्णु पत्न्यै । अग्नये । वैश्वानराय ॥६०॥

॥ इति श्रीवाजसनेयिसंहितायां पदेन नवविंशतिमो[2]ऽध्यायः ॥



---

१. अयं मुम्बईमुद्रिते ककोशशैलीवत् विशिष्टः पाठः । प्राचीन-संस्कृत-भाषायां त्रिंशच्छब्दसमानार्थक इकारान्तः 'त्रिंशति' शब्दोऽप्यासीत् (द्र० अस्माकीनं 'सं० व्याकरणशास्त्र का इतिहास, भाग १ पृष्ठ ४० द्वि० सं०) । उत्तराध्यायान्तपाठोऽप्यनुसन्धेयः ।

२. द्रष्टव्याऽत्र पूर्वत्र ३९६ पृष्ठस्था टिप्पणी २ ।

# त्रिंशोऽध्यायः

विश्वा॑नि । देव॒ । स॒वि॒तः॒ । दु॒रि॒तानी॒ति॑दुः॒ इ॒तानि॑ । परा॑ । सु॒व॒ ॥ यत् । भ॒द्रम् । तत् । नः॒ । आ । सु॒व॒ ॥१॥

वि॒भ॒क्ता॒र॒मि॑ति॑वि भ॒क्ता॒र॑म् । ह॒वा॒म॒हे॒ । वसोः॑ । चि॒त्रस्य॑ । राध॑सः ॥ स॒वि॒तार॑म् । नृ॒चक्ष॑स॒मि॑ति॑नृ चक्ष॑सम् ॥२॥

ब्रह्म॑णे । ब्रा॒ह्म॒णम् । क्ष॒त्राय॑ । रा॒ज॒न्य॑म् । म॒रुद्भ्य॒ऽइति॑म॒रुत् भ्यः॑ । वैश्य॑म् । तप॑से । शू॒द्रम् । तम॑से । तस्क॑रम् । ना॒र॒काय॑ । वी॒र॒हण॑म् । वी॒र॒ह॒न॒मि॑ति॑वीर॒ ह॒न॑म् ।

---

वि॒श्वा॑नि । भ॒द्रम् ॥१॥

वि॒भ॒क्ता॒र॑मि॑ति॑वि भ॒क्ता॑र॑म् । चि॒त्रस्य॑ । नृ॒चक्ष॑स॒मि॑ति॑नृ चक्ष॑सम् ॥२॥

ब्रह्म॑णे । ब्रा॒ह्म॒णम् । क्ष॒त्राय॑ । रा॒ज॒न्य॑म् । म॒रुद्भ्य॒ऽइति॑म॒रुत् भ्यः॑ । वैश्य॑म् । शू॒द्रम् । तस्क॑रम् । पा॒प्मने॑ । आ॒क्र॒या॒या॒ऽइ॒त्या॑ क्र॒यायै॑ । पुँ॒श्च॒लू॒म् ।

---

[1] यत् ॥१॥

वि॒भ॒क्ता॒र॑मि॑ति॑वि[2] भ॒क्तार॑म् ॥२॥

क्ष॒त्राय॑ । ना॒र॒काय॑ । वी॒र॒ह॒न॒मि॑ति॑वीर॒[3] ह॒न॑म् । आ॒क्र॒या॒या॒ऽइ॒त्या॑

---

१. इतः पूर्वयोर्मन्त्रयोः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्य द्वयोः मन्त्रकण्डिकासंख्ययोर्भेदो जायते ।

२. ककोशशैल्यनुसारं 'वि' इत्यपेक्षते ।

३. ककोशशैल्यनुसारं 'वीर' इत्यपेक्षते ।

पाप्मने । क्लीबम् । आक्रयायाऽइत्त्या क्रयायै । अयोगूम् । कामाय । पुँश्चलूम् । अतिक्रुष्टायेत्त्यति क्रुष्टाय । मागधम् ॥३॥

नृत्ताय । सूतम् । गीताय । शैलूषम् । धर्म्माय । सभाचरमितिसभा चरम् । नरिष्ठायै । भीमलम् । नर्म्माय । रेभम् । हसाय । कारिम् । आनन्दायेत्त्या नन्दाय । स्त्रीषखम् । स्त्रीसखमितिस्त्री सखम् । प्रमदऽइतिप्र मदे । कुमारीपुत्त्रमितिकुमारी पुत्त्रम् । मेधायै । रथकारमितिरथ कारम् । धैर्य्याय । तक्क्षाणम् ॥४॥

तपसे । कौलालम् । मायायै । कर्म्मारम् । रूपाय । मणिकारमितिमणि कारम् । शुभे । वपम् । शरव्यायै । इषुकारमितीषु कारम् । हेत्यै । धनुष्कारम् । धनुर्कारमितिधनुर् कारम् । कर्म्मणे । ज्याकारमितिज्ज्या कारम् ।

---

अतिक्रुष्टायेत्यति क्रुष्टाय ॥३॥

नरिष्ठायै । आनन्दायेत्या नन्दाय । प्रमदऽइतिप्र मदे । कुमारीपुत्रमिति-कुमारी पुत्रम् । तक्षाणम् ॥४॥

शरव्यायै । हेत्यै । धनुष्कारम् । ज्याकारमितिज्या कारम् । दिष्टाय ।

---

क्रय्यायै । अय्योगूम् । कामाय्य । [1]पुँश्चलूम् । अतिक्रुष्टाय्येत्यति क्रुष्टाय्य ॥३॥

नृत्ताय्य । गीताय्य । धर्म्माय्य । [2]नरीष्ठाय्यै । नर्म्माय्य । हसाय्य । आनन्दाय्येत्या नन्दाय्य । मेधाय्यै । धैर्य्याय्य ॥४॥

माय्यायै । रूपाय्य । शरव्याय्यै । दिष्टाय्य । मृगयुमितिमृग [3]य्युम् ।

---

१. काशीमुद्रिते पदपाठे वै० य० मु० मुद्रिते मूलपाठे चायं पाठः । ककोश उत्तरत्र ३०।१८ (मन्त्र ३०।२०) 'पुँश्चलूम्' इत्येव पाठो दृश्यते ।

२. अपपाठोऽयं लेखकप्रमादजः, 'नरिष्ठाय्यै' इति शुद्धः पाठः ।

३. ककोशशैल्यनुसारमिह 'युम्' इत्येवं पाठो द्रष्टव्यः ।

दि॒ष्ट्राय॑ । र॒ज्जु॒स॒र्ज्जमिति॑रज्जु स॒र्ज्जम् । मृ॒त्यवे॑ । मृ॒ग॒युमिति॑-मृग॒ युम् । अन्त॑काय । श्व॒नि॒नमिति॑श्व॒ नि॒नम् ॥५॥

न॒दीभ्य॑ः । पौ॒ञ्जि॒ष्ठम् । ऋ॒क्षीका॑भ्यः । नैषा॑-दम् । नैसा॒द॒मिति॒नैसा॑दम् । पु॒रु॒ष॒व्या॒घ्राये॑ति॒पुरुष व्या॒घ्राय॑ । दु॒र्म्म॒द॒मिति॑दुः मदम् । ग॒न्ध॒र्व्वा॒प्स॒रोभ्य॒ऽइति॑गन्धर्वाप्स॒रः भ्य॑ः । व्रा॒त्य॑म् । प्र॒यु॒ग्भ्य॒ऽइति॑प्र॒यु॒क् भ्य॑ः । उ॒न्म॑त्त॒मि-त्युत् म॑त्तम् । स॒र्प्प॒दे॒व॒ज॒ने॒भ्य॒ऽइति॑सर्प्प [1]दे॒व॒ज॒ने॒भ्य॑ः । अ॒प्प्र॒ति॒प॒द॒मित्य॒प्र॒ति प॒द॒म् । अ॒यै॒भ्य॑ः । कि॒त॒वम् । ई॒र्ष्य॒ता॑यै । अ॒कि॒त॒वम् । पि॒शा॒चेभ्य॑ः । बि॒द॒ल॒का॒री॒मिति॑-बिदल का॒रीम् । या॒तु॒धा॒ने॒भ्य॒ऽइति॑यातु धा॒ने॒भ्य॑ः । क॒ण्ट॒की॒-का॒री॒मिति॑कण्टकी का॒रीम् ॥६॥

---

मृ॒त्यवे॑ । श्व॒नि॒नमिति॑श्व॒ नि॒नम् ॥५॥

न॒दीभ्य॑ः । पौ॒ञ्जि॒ष्ठम् । ऋ॒क्षीका॑भ्यः । पु॒रु॒ष॒व्या॒घ्राये॑ति॒पुरुष व्या॒घ्राय॑ । ग॒न्ध॒र्व्वा॒प्स॒रोभ्य॒ऽइति॑गन्धर्वाप्स॒रः भ्य॑ः । व्रा॒त्य॑म् । प्र॒यु॒ग्भ्य॒-ऽइति॑प्र॒यु॒क् भ्य॑ः । उ॒न्म॑त्त॒मित्युत् म॑त्तम् । स॒र्प्प॒दे॒व॒ज॒ने॒भ्य॒ऽइति॑सर्प्प दे॒व॒ज॒ने॒भ्य॑ः । अ॒प्र॒ति॒प॒द॒मित्य॒प्र॒ति प॒द॒म् । अ॒यै॒भ्य॑ः । पि॒शा॒चेभ्य॑ः । या॒तु॒धा॒ने॒भ्य॒ऽइति॑यातु धा॒ने॒भ्य॑ः ॥६॥

---

अन्त॑काय ॥५॥

पु॒रु॒ष॒व्या॒घ्राये॑ति॒पुरुष व्या॒घ्राय॑ । प्र॒यु॒ग्भ्य॒ऽइति॑प्र॒यु॒क् भ्य॑ः । अ॒यै॒-भ्य॑ः । ई॒र्ष्य॒ता॑यै । य्या॒तु॒धा॒ने॒भ्य॒ऽइति॑य्या॒तु[2] धा॒ने॒भ्य॑ः ॥६॥

---

१. 'दे॒व॒ज॒ने॒भ्य॑ः' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारं 'य्या॒तु' इत्यपेक्षते ।

सुन्धयऽइतिसम् धर्यै । जारम् । गेहायं । उपपतिमित्त्युंप पतिम् । आर्त्त्यौऽइत्त्या ऋत्त्यै । परिवित्तमितिपरिं वित्तम् । निर्ऋत्त्याऽइतिनिः ऋत्त्यै । परिविविदानमितिपरि 'विविदानम् । अरांध्यै । एदिधिषुःपतिमित्त्यैदिधिषुः पतिम् । निष्क्कृत्त्यै । निःकृत्त्याऽइतिनिः कृत्त्यै । पेशस्क्कारीम् । पेशःकारीमितिपेशः कारीम् । सञ्ज्ञानायेतिसम् ज्ञानाय । स्मरकारीमितिस्मर कारीम् । प्रकामोद्द्यायेतिप्रकाम उद्द्याय । उपसदमित्त्युप सदम् । वर्णाय । अनुरुधमित्त्यनु रुधम् । बलाय । उपदामित्त्युप दाम् ॥७॥

उत्त्सादेभ्यऽइत्त्युत् सादेभ्यः । कुब्जम् । प्रमुदऽइतिप्र मुदे । वामनम् । द्वार्भ्यऽइतिद्वाः भ्यः । स्रामम् ।

---

उपपतिमित्युप पतिम् । आर्त्याऽइत्या ऋत्यै । निर्ऋत्याऽइतिनिः ऋत्यै । अराध्यै । एदिधिषुःपतिमित्यैदिधिषुः पतिम् । निष्कृत्यै । निःकृत्याइतिनिः कृत्यै । पेशस्कारीम् । स्मरकारीमितिस्मर कारीम् । प्रकामोद्यायेतिप्रकाम उद्याय । उपसदमित्युप सदम् । अनुरुधमित्यनु रुधम् । उपदामित्युप दाम् ॥७॥

उत्सादेभ्यऽइत्युत् । सादेभ्यः । कुब्जम् । प्रमुदऽइतिप्र मुदे । द्वार्भ्यऽइतिद्वाः भ्यः । स्वप्नाय । पवित्राय । प्रज्ञानायेतिप्र ज्ञानाय ।

---

सन्धयऽइतिसम् धर्यै । गेहायं । परिवित्तमितिपरि [2]वित्तम् । परिविविदानमितिपरि [3]विविदानम् । संज्ञानायेतिसम् ज्ञानाय । प्रकामोद्यायेतिप्रकाम उद्याय । वर्णाय बलाय ॥७॥

---

१. 'विविदानम्' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारमिह 'वित्तम्' इत्येवं पाठेन भाव्यम् ।

३. ककोशशैल्यनुसारमिह 'विविदानम्' इत्येवं पाठेन भाव्यम् ।

स्वप्नाय । अन्धम् । अधर्म्माय । बधिरम् । पवित्राय । भिषजम् । प्रज्ञानायेतिप्र ज्ञानाय । नक्क्षत्त्रदर्शमितिनक्क्षत्र दर्शम् । आशिक्क्षायाऽइत्त्या शिक्क्षायै । प्रश्निनम् । उपशिक्क्षायाऽइत्त्युप शिक्क्षायै । अभिप्रश्निनमित्त्यभि प्रश्निनम् । मर्य्यादायै । प्रश्नविवाकमितिप्रश्न [1]विवाकम् ॥८॥

अर्म्मेभ्यः । हस्तिपमितिहस्ति पम् । जवाय । अश्वपमित्यश्व पम् । पुष्ट्यै । गोपालमितिगो पालम् । वीर्य्याय । अविपालमित्त्यवि पालम् । तेजसे । अजपालमित्त्यज पालम् । इरायै । कीनाशम् । कीलालाय । सुराकारमितिसुरा कारम् । भद्राय । गृहपमितिगृह पम् । श्रेयसे । वित्तधमितिवित्त धम् । आद्ध्यक्क्ष्यायेत्याधि अक्क्ष्याय । अनुक्क्षत्तारमित्त्यनु क्षत्तारम् ॥९॥

---

नक्षत्रदर्शमितिनक्षत्र दर्शम् । आशिक्षायाऽइत्या शिक्षायै । प्रश्निनम् । उपशिक्षायाइत्युप शिक्षायै । अभिप्रश्निनमित्यभि प्रश्निनम् । प्रश्नविवाकमितिप्रश्न विवाकम् ॥८॥

अर्म्मेभ्यः । हस्तिपमितिहस्ति पम् । अश्वपमित्यश्व पम् । पुष्ट्यै । अविपालमित्यवि पालम् । अजपालमित्यज पालम् । भद्राय । आध्यक्ष्यायेत्याधि अक्ष्याय । अनुक्षत्तारमित्यनु क्षत्तारम् ॥९॥

---

स्वप्नाय । अधर्म्माय । पवित्राय । प्रज्ञानायेतिप्र ज्ञानाय । आशिक्षायाऽइत्या शिक्षायै । उपशिक्षायाऽइत्युप शिक्षायै । मर्य्यादायै । प्रश्नविवाकमितिप्रश्न विवाकम् ॥८॥

जवाय । वीर्य्याय । इरायै । कीलालाय । भद्राय । श्रेयसे । वित्तधमितिवित्त धम् । आध्यक्ष्यायेत्याधि अक्ष्याय ॥९॥

---

१. विवाकम्' इति काशिकः पाठः ।

भार्यै । दार्वाहारमितिदारु [1]आहारम् । प्रभायाऽइतिप्र भार्यै । अग्न्येधमित्यग्नि एधम् । ब्रध्नस्य । विष्टपाय । अभिषेक्क्तारम् । अभिसेक्क्तारमित्यभि सेक्क्तारम् । वर्षिष्ठाय । नाकाय । परिवेष्टारमितिपरि वेष्टारम् । देवलोकायेतिदेव लोकाय । पेशितारम् । मनुष्यलोकायेतिमनुष्य लोकाय । प्रकरितारमितिप्र [2]करितारम् । सर्वेभ्यः । लोकेभ्यः । उपसेक्क्तारमित्युप सेक्क्तारम् । अवऽऋत्याऽइत्यव ऋत्यै । बुधाय । उपमन्थितारमित्युप [3]मन्थितारम् । मेधाय । वासःपल्पूलीमितिवासः [4]पल्पूलीम् । प्रकामायेतिप्र कामाय । रजयित्रीम् ॥१०॥

---

प्रभायाऽइतिप्र भार्यै । अग्न्येधमित्यग्नि एधम् । ब्रध्नस्य । विष्टपाय । अभिषेक्तारम् । अभिसेक्तारमित्यभि सेक्तारम् । वर्षिष्ठाय । परिवेष्टारमितिपरि वेष्टारम् । मनुष्यलोकायेतिमनुष्य लोकाय । प्रकरितारमितिप्र करितारम् । सर्वेभ्यः । लोकेभ्यः । उपसेक्तारमित्युप सेक्तारम् । अवऽऋत्याऽइत्यव ऋत्यै । उपमन्थितारमित्युप मन्थितारम् । वासःपल्पूलीमितिवासः पल्पूलीम् । प्रकामायेतिप्र कामाय । रजयित्रीम् ॥१०॥

---

भार्य्यै । प्रभाय्याऽइतिप्र भार्य्यै । विष्टपाय्य । वर्षिष्ठाय्य । नाकाय्य । परिवेष्टारमितिपरि वेष्टारम् । देवलोकाय्येतिदेव लोकाय्य । मनुष्यलोकाय्येतिमनुष्य लोकाय्य । बुधाय्य । मेधाय्य । वासःपल्पूलीमितिवासः पल्पूलीम् । प्रकामाय्येतिप्र कामाय्य । रजयित्रीम् ॥१०॥

---

१. 'आहारम्' इति काशिकः पाठः ।

२. 'करितारम्' इति काशिकः पाठः ।

३. 'मन्थितारम्' इति काशिकः पाठः ।

४. 'पल्पूलीम्' इति काशिकः पाठः ।

ऋतये । स्तेनहृदयमितिस्तेन हृदयम् । वैरहत्त्यायेतिवैर हत्त्याय । पिशुनम् । विविक्क्त्याऽइतिवि विक्क्त्यै । क्षत्तारम् । औपद्रष्ट्यायेत्त्यौप द्रष्ट्याय । अनुक्क्षत्तारमित्त्यनु क्षत्तारम् । बलाय । अनुचरमित्त्यनु चरम् । भूम्म्ने । परिष्कन्दम् । परिस्कन्दमितिपरि स्कन्दम् । प्रियाय । प्रियवादिनमितिप्रिय वादिनम् । अरिष्ट्यै । अश्श्वसादमित्त्यश्श्व सादम् । स्वर्ग्गायेतिस्वꣳ गाय । लोकाय । भागदुघमितिभाग दुघम् ॥११॥

मन्यवे । अयस्तापमित्त्ययꣳ तापम् । क्रोधाय । निसरमितिनि सरम् । योगाय । योक्क्तारम् । शोकाय । अभिसर्त्तारमित्त्यभि सर्त्तारम् । क्षेमाय । विमोक्क्तारमितिवि मोक्क्तारम् । उत्कूलनिकूलेब्भ्यऽइत्त्युत्कूल [1]निकूलेब्भ्यः । त्रिष्ठिनम् । त्रिस्थिनमितित्रि स्थिनम् । वपुषे । मानस्कृतम् ।

---

वैरहत्यायेतिवैर हत्याय । विविक्त्याऽइतिवि विक्त्यै । क्षत्तारम् । औपद्रष्ट्यायेत्यौप द्रष्ट्याय । अनुक्षत्तारमित्यनु क्षत्तारम् । अनुचरमित्यनु चरम् । भूम्ने । परिष्कन्दम् । परिस्कन्दमितिपरि स्कन्दम् । प्रियवादिनमितिप्रिय वादिनम् । अरिष्ट्यै । अश्वसादमित्यश्व सादम् ॥११॥

मन्यवे । अयस्तापमित्ययꣳ तापम् । योक्तारम् । अभिसर्त्तारमित्यभि सर्त्तारम् । विमोक्तारमितिवि मोक्तारम् । उत्कूलनिकूलेभ्यऽइत्युत्कूल निकूलेभ्यः । त्रिष्ठिनम् । त्रिस्थिनमितित्रि स्थिनम् । आञ्जनीकारीमित्याञ्जनी

---

ऋतये । स्तेनहृदयमितिस्तेन हृदयम् । वैरहत्यायेतिवैर हत्याय । विविक्त्याऽइतिवि विक्त्यै । औपद्रष्ट्यायेत्यौप द्रष्ट्याय । बलाय । प्रियाय । प्रियवादिनमितिप्रिय वादिनम् । स्वर्गायेतिस्वꣳ गाय । लोकाय ॥११॥

अयस्तापमित्ययꣳ तापम् । क्रोधाय । योगाय । योक्तारम् ।

---

१. 'निकूलेब्भ्यः' इति काशिकः पाठः ।

मानद्वकृतमितिमानद्व कृतम् । शीलायं । आञ्जनीकारीमित्यां-ञ्जनी कारीम् । निर्ऋत्याऽइतिनिः ऋत्यै । कोशकारीमिति-कोश कारीम् । यमायं । असूम् ॥१२॥

यमायं । यमसूमितियम सूम् । अथर्वभ्यऽइत्यथर्व भ्यः । अवतोकामित्यव तोकाम् । सँवत्सरायं । पर्य्यायिणीम् । पर्य्यायिनीमितिपरि आयिनीम् । परिवत्सरायेतिपरि [1]वत्स-रायं । अविजातामित्यवि जाताम् । इदावत्सरायं । अती-त्वरीमित्यति इत्वरीम् । इद्वत्सरायेतीत् [1]वत्सरायं । अति-ष्कद्वरीम् । अतिस्कद्वरीमित्यति स्कद्वरीम् । वत्सरायं । विर्जर्जरामितिवि जर्जराम् । सँवत्सरायं । पलिक्नीम् ।

---

कारीम् । निर्ऋत्याऽइतिनिः ऋत्यै ॥१२॥

अथर्वभ्यऽइत्यथर्व भ्यः । अवतोकामित्यव तोकाम् । सँवत्सरायं । परिवत्सरायेतिपरि वत्सराय । अविजातामित्यवि जाताम् । इदावत्सरायं । अतित्वरीमित्यति इत्वरीम् । इद्वत्सरायेतीत् वत्सरायं । अतिष्कद्वरीम् । अतिस्कद्वरीमित्यति स्कद्वरीम् । वत्सरायं । सँवत्सरायं । पलिक्नीम् । ऋभुभ्य-ऽइत्यृभु भ्यः । अजिनसन्धमित्यजिन सन्धम् । साध्येभ्यः । चर्मम्न-

---

शोकांय । क्षेमांय । विमोक्तारमितिवि[2] मोक्तारम् । शीलायं । व्यमायं ॥१२॥

व्यमायं । व्यमसूमितिव्यम[3] सूम् । [4]सम्वत्सरायं । पर्य्यायिणीम् । पर्य्यायिनीमितिपरि आयिनीम् । परिवत्सरायेतिपरि वत्सरायं । इदावत्सरायं । इद्वत्सरायेतीत् वत्सरायं । वत्सरायं । विजर्जरामितिवि जर्जराम् । [4]सम्वत्सरायं ।

---

१. 'वत्सरायं' इति काशिकः पाठः ।

२. ककोशशैल्यनुसारं 'वि' इत्येवं पाठेन भाव्यम् ।

३. ककोशशैल्यनुसारमिह 'व्यम' इत्येवं पाठेन भाव्यम् ।

४. अनुस्वारपरसवर्णाभावरूपोऽयमपपाठः ।

ऋभुभ्य॒ऽइत्यृ॒भु भ्यः॑ । अ॒जि॒न॒स॒न्ध॒विच्चर्यजिन स॒न्धम् । सा॒द्ध्येभ्यः॑ । च॒र्म्म॒म्न॒मि॒ति॑चर्म्म॒ म्नम् ॥१३॥

सरो॑भ्य॒ऽइ॒ति॒सरः॑ भ्यः । धै॒व॒रम् । उ॒प॒स्थ॒ाव॑रा॒भ्य॒ऽइत्यु॑प॒ स्थाव॑राभ्यः । दाशम् । बै॒श॒न्ताभ्यः॑ । बैन्दम् । न॒ड्व॒लाभ्यः॑ । शौष्क॑लम् । पा॒रा॒य॑ । मा॒र्ग्गा॒रम् । अ॒वा॒रा॒य॑ । कै॒वर्त्त॑म् । ती॒र्थेभ्यः॑ । आ॒न्दम् । वि॒ष॑मेभ्यः । वि॒स॑मेभ्य॒ऽइ॒ति॒वि स॑मेभ्यः । मै॒ना॒लम् । स्वनेभ्यः । पर्ण्ण॑कम् । गुहा॑भ्यः । किरा॑तम् । सानु॑भ्य॒ऽइ॒ति॒सानु॑ भ्यः । जम्भ॑कम् । पर्व॑तेभ्यः । कि॒म्पू॒रु॒षम् । कि॒म्पु॒रु॒ष॒मि॒ति॑किम् [1]पु॒रु॒षम् ॥१४॥

बी॒भ॒त्सायै॑ । पौ॒ल्क॒सम् । वर्ण्णा॑य । हि॒र॒ण्य॒का॒र॒मि॒ति॑-हिरण्य का॒रम् । तु॒लायै॑ । वा॒णि॒जम् । प॒श्चा॒दो॒षा॒ये॒ति॑प॒श्चा दो॒षाय॑ । ग्लावि॑नम् । विश्वे॑भ्यः । भू॒तेभ्यः॑ । सि॒द्ध्म॒लम् । भूत्यै॑ । जा॒ग॒र॒णम् । अभू॑त्यै । स्व॒प॒नम् । आर्त्यै॒ऽइत्या

मि॒ति॑चर्म्म॒ म्नम् ॥१३॥

सरो॑भ्य॒ऽइ॒ति॒सरः॑ भ्यः । उ॒प॒स्था॒व॑रा॒भ्य॒ऽइत्यु॑प॒ स्थाव॑राभ्यः । बै॒श॒न्ताभ्यः॑ । न॒ड्व॒लाभ्यः॑ । शौष्क॑लम् । ती॒र्थेभ्यः॑ । वि॒ष॑मेभ्यः । वि॒स॑मेभ्य॒ऽइ॒ति॒वि स॑मेभ्यः । स्वनेभ्यः । गुहा॑भ्यः । सानु॑भ्य॒ऽइ॒ति॒सानु॑ भ्यः । पर्व॑तेभ्यः ॥१४॥

बी॒भ॒त्सायै॑ । पौ॒ल्क॒सम् । हि॒र॒ण्य॒का॒र॒मि॒ति॑हिरण्य का॒रम् । प॒श्चा॒-दो॒षा॒ये॒ति॑प॒श्चा दो॒षाय॑ । विश्वे॑भ्यः । भू॒तेभ्यः॑ । सि॒ध्म॒लम् । भू॒त्यै॑ । अभू॑त्यै ।

ऋ॒भुभ्य॒ऽइत्यृ॒भु भ्यः॑ ॥१३॥

पा॒रा॒य॑ । अ॒वा॒रा॒य॑ । वि॒स॑मेभ्य॒ऽइ॒ति॒वि स॑मेभ्यः ॥१४॥

बी॒भ॒त्सा॒यै॑ । वर्ण्णा॑य । तु॒ला॒यै॑ । प॒श्चा॒दो॒षा॒ये॒ति॑प॒श्चा [2]दो॒षा॒यः ।

१. 'पुरुषम्' इति काशिकः पाठः ।

२. अपपाठोऽयम्, अन्ते विसर्गो नेष्यते ।

ऋद्ध्यै । जनवादिनमितिंजन वादिनम् । व्यृद्ध्याऽइतिवि ऋद्ध्यै । अपगल्भमित्यप गल्भम् । सꣳशरायेतिंसम् शराय । प्रच्छिदमितिप्र छिदम् ॥१५॥

अक्षराजायेत्यक्ष राजाय । कितवम् । कृताय । आदिनवदर्शमित्यादिनव दर्शम् । त्रेतायै । कल्पिनम् । द्वापराय । अधिकल्पिनमित्यधि कल्पिनम् । आस्कन्दायेत्या स्कन्दाय । सभास्थाणुमितिसभा स्थाणुम् । मृत्यवे । गोव्यच्छमितिगो व्यच्छम् । अन्तकाय । गोघातमितिगो घातम् । क्षुधे । यः । गाम् । विकृन्तन्तमितिवि कृन्तन्तम् । भिक्षमाणꣳ । उपतिष्ठतीत्युप तिष्ठति । दुष्कृताय । दुꣳकृतायेतिदुꣳ कृताय । चरकाचार्यमितिचरक आचार्यम् । पाप्मने । सैलगम् ॥१६॥

---

आर्त्याऽइत्या ऋत्यै । व्यृध्याऽइतिवि ऋध्यै । अपगल्भमित्यप गल्भम् । प्रछिदमितिप्र छिदम् ॥१५॥

अक्षराजायेत्यक्ष राजाय । आदिनवदर्शमित्यादिनव दर्शम् । कल्पिनम् । अधिकल्पिनमित्यधि कल्पिनम् । आस्कन्दायेत्या स्कन्दाय । सभास्थाणुमितिसभा स्थाणुम् । मृत्यवे । गोव्यछमितिगो व्यछम् । भिक्षमाणꣳ । उपतिष्ठतीत्युप तिष्ठति । दुष्कृताय । पाप्मने ॥१६॥

---

जनवादिनमितिजन [1]वादिनम् । व्यृद्ध्याऽइतिवि[2] ऋद्ध्यै । सꣳशरायेतिसम् शराय ॥१५॥

अक्षराजायेत्यक्ष राजाय । कृताय । त्रेतायै । द्वापराय । आस्कन्दायेत्या स्कन्दाय । गोव्यच्छमितिगो व्यच्छम् । अन्तकाय । यः । विकृन्तन्तमितिवि[2] कृन्तन्तम् । दुष्कृताय । दुꣳकृतायेतिदुꣳ कृताय । चरकाचार्यमितिचरक आचार्यम् ॥१६॥

---

१. ककोशशैल्यनुसारमिह 'वा' इत्येकवकारेण भाव्यम् ।

२. ककोशशैल्यनुसारमिह 'वि' इति द्विवकारेण भाव्यम् ।

प्रतिश्रुत्कायाऽइतिप्प्रति श्रुत्कायै । अर्त्तनम् । घोषाय । भषम् । अन्ताय । बहुवादिनमितिबहु व्वादिनम् । अनन्ताय । मूकम् । शब्दाय । आडम्बराघातमित्याडम्बर [1]आघातम् । महसे । व्वीणावादमितिवीणा व्वादम् । क्रोशाय । तूणवद्ध्ममितितूणव ध्मम् । अवरस्प्पराय । अवरपरायेत्त्यवर पराय । शङ्खद्ध्ममितिशङ्ख ध्मम् । व्वनाय । व्वनपमितिवन पम् । अन्न्यतोरण्ण्यायेत्त्यन्न्यतः ऽअरण्ण्याय । दावपमितिदाव पम् ॥१७॥

नर्म्माय । पुँश्चल्लूम् । हसाय । कारिम् । यादसे । शाबल्ल्याम् । ग्रामण्ण्यम् । ग्रामन्न्युमितिग्ग्राम न्न्यम् । गणकम् । अभिक्क्रोशकमित्त्यभि क्रोशकम् । तान् । महसे । व्वीणावादमितिव्वीणा व्वादम् । पाणिग्घ्नमितिपाणि घ्नम् ।

---

प्रतिश्रुत्कायाऽइतिप्रति श्रुत्कायै । आडम्बराघातमित्याडम्बर आघातम् । तूणवध्ममितितूणव ध्मम् । अवरस्पराय । अवरपरायेत्यवर पराय । शङ्खध्ममितिशङ्ख ध्मम् । अन्यतोरण्यायेत्यन्यतः ऽअरण्याय ॥१७॥

पुँश्चलूम् । शाबल्याम् । ग्रामण्यम् । ग्रामन्युमितिग्राम न्यम् । अभिक्रोशकमित्यभि क्रोशकम् । पाणिघ्नमितिपाणि घ्नम् । तूणवध्ममितितूणव

---

[2]प्रतिश्रुत्कायामितिप्रति श्रुत्कायै । घोषाय । अन्ताय । बहुवादिनमितिबहु वादिनम् । अनन्ताय । शब्दाय । व्वीणावादमितिव्वीणा वादम् । क्रोशाय । अवरस्पराय । अवरपरायेत्यवर पराय । व्वनाय । व्वनपमितिव्वन पम् । अन्यतोरण्यायेत्यन्यतः ऽअरण्याय ॥१७॥

नर्माय । हसाय । यादसे । व्वीणावादमितिव्वीणा वादम् । तूणवध्म-

---

१. 'आघातम्' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'प्रतिश्रुत्कायाऽइतिप्रति श्रुत्कायै' इत्येवं पाठेन भाव्यम् ।

तूणवद्ध्ममितितूणव ध्मम् । तान् । नृत्ताय । आनन्दायेत्त्या नन्दाय । तलवम् ॥१८॥

अग्नये । पीवानम् । पृथिव्यै । पीठसर्प्पिणमितिपीठ सर्प्पिणम् । वायवे । चाण्डालम् । अन्तरिक्षाय । वंशनर्त्तिनमितिवंश नर्त्तिनम्। दिवे । खलतिम् । सूर्य्याय । हर्य्यक्षमितिहरि अक्षम् । नक्षत्रेभ्यः । किर्म्मिरम् । चन्द्रमसे । किलासम् । अह्ने । शुक्लम् । पिङ्गाक्षमितिपिङ्ग अक्षम् । रात्र्यै । कृष्णम् । पिङ्गाक्षमितिपिङ्ग अक्षम् ॥१९॥

अथ । एतान् । अष्टौ । विरूपानितिवि रूपान् । आ । लभते । अतिदीर्घमित्त्यति दीर्घम् । च । अतिह्रस्वमित्त्यति

---

ध्मम् । आनन्दायेत्या नन्दाय ॥१८॥

अग्नये । पृथिव्यै । अन्तरिक्षाय । हर्यक्षमितिहरि अक्षम् । नक्षत्रेभ्यः । अह्ने । शुक्लम् । पिङ्गाक्षमितिपिङ्ग अक्षम् । रात्र्यै । कृष्णम् । पिङ्गाक्षमितिपिङ्ग अक्षम् ॥१९॥

अष्टौ । अतिदीर्घमित्यति दीर्घम् । अतिह्रस्वमित्यति ह्रस्वम् ।

---

मितितूण[1] वध्मम् । नृत्ताय । आनन्दायेत्या नन्दाय ॥१८॥

अग्नये । वायवे । अन्तरिक्षाय । वंशनर्त्तिनमितिवंश नर्त्तिनम् । सूर्य्याय । हर्य्यक्षमितिहरि अक्षम् ॥१९॥

विरूपानितिवि[2] रूपान् ।...

---

१. अपपाठोऽयमस्थानेऽवग्रहरूपः । 'तूणव ध्मम्' इत्येवमवग्रहेण भाव्यम् ।

२. ककोशलैत्यनुसारमिह 'वि' इत्येव द्विवकारेण भाव्यम् ।

ह्र॒स्वम् । अति॑स्थू॒ल॒मित्यति॑ स्थू॒लम् । अति॑कृ॒श॒मित्यति॑ कृ॒शम् । अति॑शु॒क्ल॒मित्यति॑ शु॒क्लम् । अति॑कृ॒ष्ण॒मित्यति॑ कृ॒ष्णम् । अति॑कुल्ब॒मित्यति॑ कुल्बम् । अति॑लोम॒श॒मित्यति॑ लोम॒शम्¹ ॥ अशू॑द्राः । अब्रा॑ह्मणाः । ते । प्रा॒जा॒प॒त्या इति॑ प्राजा॒प॒त्याः ॥ मा॒ग॒धः । पुँ॒श्च॒ली । कि॒त॒वः । क्ली॒बः ॥२०॥

॥ इति वाजसनेयिसंहितापदे त्रिंशत्तमोऽध्यायः ॥

---

अति॑स्थू॒ल॒मित्यति॑ स्थू॒लम् । अति॑कृ॒श॒मित्यति॑ कृ॒शम् । अति॑शु॒क्ल॒मित्यति॑ शु॒क्लम् । अति॑कृ॒ष्ण॒मित्यति॑ कृ॒ष्णम् । अति॑कुल्व॒मित्यति॑ कुल्वम् । अति॑लोम॒श॒मित्यति॑ लोम॒शम् । अशू॑द्राः । अब्रा॑ह्मणाः । प्रा॒जा॒प॒त्या इति॑ प्राजा प॒त्याः । पुँ॒श्च॒ली ॥२०॥

॥ इतिवाजसनेयसंहितापदे त्रिंशतिमो²ऽध्यायः ॥

---

...³शूद्राः ॥२०॥

॥ इति श्रीवाजसनेयिसंहितायां पदेन त्रिंशतिमो⁴ऽध्यायः ॥

●

---

१. अस्यां कण्डिकायां निर्दिष्टानां विरूपाणामष्टानां पुरुषाणां विषये आयुर्वेदीय-चरक-संहिताया अष्टौनिन्दितीयेऽध्याये एवमुल्लेखो दृश्यते—

इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति । तद्यथा—अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिकृष्णश्चातिगौरश्चातिस्थूलश्चातिकृशश्चेति । सूत्रस्थान, अ० २१ ।

इतोऽग्रे एव निन्दितानामष्टानां पुरुषाणां शरीरमधिकृत्य ये दोषास्ते व्याख्याताः ।

२. द्र० पूर्वत्र ५२७ पृष्ठस्था टिप्पणी १ ।

३. अपपाठोऽयम्, 'अशूद्राः' इत्येवं पाठेन भाव्यम् ।

४. द्र० पूर्वत्र ३९६ पृष्ठस्था टिप्पणी २ ।

# एकत्रिंशोऽध्यायः

सहस्रशीर्षेतिसहस्र शीर्षा । पुरुषः । सहस्राक्क्षऽइतिसहस्र अक्क्षः । सहस्रपादितिसहस्र पात् ॥ सः । भूमिम् । सर्वतः । स्पृत्त्वा । अति । अतिष्ठत् । दशाङ्गुलमितिदश [1]अङ्गुलम् ॥१॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भाव्यम् ॥ उत । अमृतत्त्वस्येत्त्यमृत त्वस्य । ईशानः । यत् । अन्नेन । अतिरोहतीत्त्यति रोहति ॥२॥

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पूरुषः । पुरुषऽइतिपुरुषः ॥ पादः । अस्य । विश्वा । भूतानि । त्रिपादितित्रि पात् । अस्य । अमृतम् । दिवि ॥३॥

त्रिपादितित्रि पात् । ऊर्द्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरितिपुनः ॥ ततः ।

---

सहस्राक्षऽइतिसहस्र अक्षः । स्पृत्वा । अतिष्ठत् ॥१॥
भाव्यम् । अमृतत्वस्येत्यमृत त्वस्य । अतिरोहतीत्यति रोहति ॥२॥
विश्वा । त्रिपादितित्रि पात् ॥३॥
त्रिपादितित्रि पात् । विष्वङ् । अक्रामत् ॥४॥

---

य्यत् । य्यत् । य्यत् ॥२॥
ज्याय्यान् ॥३॥

---

१. 'अङ्गुलम्' इति काशिकः पाठः ।

विष्ष्वंङ् । वि । अक्क्रामत् । साशनानशनेऽइतिंसाशनानशने । अभि ॥४॥

ततं÷ । विराडितिंवि राट् । अजायत । विराजऽइतिंवि राजं÷ । अधिं । पूरुंषः । पुरुंषऽइतिपुरुंषः ॥ सः । जातः । अतिं । अरिच्च्यत । पश्श्चात् । भूमिंम् । अथोऽइत्त्यथों । पुरः ॥५॥

तस्म्मांत् । यज्ज्ञात् । सर्व्वहुतऽइतिंसर्व्व हुतं÷ । सम्भृतमितिसम् भृतम् । पृषदाज्ज्यमितिंपृषत् आज्ज्यम् ॥ पशून् । तान् । चक्क्रे । व्वायव्व्यान् । आरण्ण्याः । ग्राम्म्याः । च । ये ॥६॥

ऋचं÷ । सामांनि । जज्ज्ञिरे ॥ छन्दांꣳसि । जज्ज्ञिरे । तस्म्मांत् । यजुं÷ । तस्म्मांत् । अजायत ॥७॥

तस्म्मांत् । [1]अश्श्वां÷ । अजायन्त । ये । के । च ।

---

अरिच्यत । पश्चात् । अथोऽइत्यथों ॥५॥

तस्मांत् । यज्ञात् । पृषदाज्यमितिंपृषत् आज्यम् । चक्रे । वायव्यान् । आरण्याः । ग्राम्याः ॥६॥

जज्ञिरे । जज्ञिरे । तस्मांत् । तस्मांत् ॥७॥

तस्मांत् । [1]अश्वांः । उभयदंतऽइत्युंभय दंतः । जज्ञिरे । तस्मांत् ।

---

विराडितिंवि राट् । अजायत । विराजऽइतिंवि राजं÷ ॥५॥

य्यज्ञात् । व्वायव्यान् । य्ये ॥६॥

य्यजुं÷ । अजायत ॥७॥

[1]अश्वां÷ । अजायन्त । य्ये । उभयादंतः । उभयदंतऽइत्युंभय

---

१. अत्र ५१२ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

उभयादंतः । उभयदंत इत्युभय दंतः ॥ गावंः । ह । जज्ञिरे । तस्मात् । तस्मात् । जाताः । अजावयंः ॥८॥

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः ॥ तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥९॥

यत् । पुरुषम् । वि । [1]अदधुः । कतिधा । वि । अकल्पयन् ॥ मुखम् । किम् । अस्य । आसीत् । बाहूऽइति-बाहू । ऊरूऽइत्यूरू । पादौ । उच्येतेऽइत्युच्येते ॥१०॥

---

तस्मात् ॥८॥

यज्ञम् । औक्षन् । अग्रतः । साध्याः ॥९॥

अकल्पयन् । ऊरूऽइत्यूरू । उच्येतेऽइत्युच्येते ॥१०॥

---

दंतः । अजावयंः ॥८॥

यज्ञम् । अयजन्त । ऋषयः । ये ॥९॥

यत् । अकल्पयन् ॥१०॥

---

१. 'यत्पुरुषं व्यदधुः' इति संहितापाठः । तत्र यद्वृत्तान्नित्यम् (अष्टा० ८।१।६६) इति नियमेन 'अदधुः' क्रियापदमुदात्तम् । उदात्तक्रियायदेन सह गतेः समासो भवति—उदात्तगतिमता च तिङा (वा० २।२।१८) इति नियमेन 'वि' पदेन च तिङि चोदात्तवति (अष्टा० ८।१।७१) नियमेनानुदात्तेन भाव्यम् । तथा सति 'व्यदधुरितिवि अदधुः' इत्येवं पाठेन भाव्यम् । इह तु पदविभागे स्वरशास्त्रस्य द्वयोनियमयोर्भङ्गो दृश्यते । ऋग्पदपाठे (१०।९०। ११) अपीत्थमेव पदविभागो दृश्यते । अत्र कारणं चिन्त्यम् । संभवतो 'व्यकल्पयन्' इत्यस्य पदपाठेन साम्यत्वायेह 'वि' इत्यस्य पृथक्पदत्वमुदात्तत्वं च निदर्शितं स्यात् । 'व्यकल्पयन्' इत्यत्र तु तिङोऽनुदात्तत्वाद् वेः पृथक्पदत्वमुदात्तत्वं तु युक्तमेव । अत्र १४२ पृष्ठस्था 'अभि । आसिञ्चन्' पदविषयिका टिप्पण्यप्यवलोकनीया ।

ब्राह्मणः । अस्य । मुखम् । आसीत् । बाहूऽइतिबाहू । राजन्यः । कृतः ॥ ऊरूऽइत्यूरू । तत् । अस्य । यत् । वैश्श्यः । पद्भ्यामितिपत् भ्याम् । शूद्रः । अजायत ॥११॥

चन्द्रमाः । मनसः । जातः । चक्क्षोः । सूर्य्यः । अजायत ॥ श्रोत्रात् । वायुः । च । प्राणः । च । मुखात् । अग्निः । अजायत ॥१२॥

नाब्भ्याः । आसीत् । अन्तरिक्क्षम् । शीर्ष्णः । द्यौः । सम् । अवर्त्तत ॥ पद्भ्यामितिपत् भ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्प्पयन् ॥१३॥

यत् । पुरुषेण । हविषा । देवाः । यज्ज्ञम् । अतन्न्वत ॥ वसन्तः । अस्य । आसीत् । आज्ज्यम् । ग्रीष्मः । इद्ध्मः । शरत् । हविः ॥१४॥

---

ब्राह्मणः । राजन्यः । ऊरूऽइत्यूरू । वैश्यः । पद्भ्यामितिपत् भ्याम् । शूद्रः ॥११॥

चक्षोः । श्रोत्रात् । अग्निः ॥१२॥

नाभ्याः । अन्तरिक्षम् । शीर्ष्णः । पद्भ्यामितिपत् भ्याम् । श्रोत्रात् । अकल्पयन् ॥१३॥

यज्ञम् । अतन्वत । आज्यम् । ग्रीष्मः । इध्मः ॥१४॥

---

व्यत् । अजायत ॥११॥

सूर्य्यः । अजायत । वायुः । अजायत ॥१२॥

अकल्पयन् ॥१३॥

व्यत् । व्यज्ञम् ॥१४॥

सप्त । अस्य । आसन् । परिधयऽइतिपरि धयः । त्रिः । सप्त । समिधऽइतिसम् इधः । कृताः ॥ देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥१५॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्म्माणि । प्रथमानि । आसन् ॥ ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥१६॥

अद्भ्यऽइत्यत् भ्यः । सम्भृतऽइतिसम् भृतः । पृथिव्यै । रसात् । च । विश्वकर्मणऽइतिविश्व कर्म्मणः । सम् । अवर्त्तत । अग्रे ॥ तस्य । त्वष्टा । विदधदितिवि दधत् । रूपम् । एति । तत् । मर्त्यस्य । देवत्वमितिदेव त्वम् । आजानमित्या जानम् । अग्रे ॥१७॥

---

सप्त । सप्त । यज्ञम् । तन्वानाः । अबध्नन् ॥१५॥

यज्ञेन । यज्ञम् । यत्र । साध्याः ॥१६॥

अद्भ्यऽइत्यत् भ्यः । पृथिव्यै । विश्वकर्म्मणऽइतिविश्व कर्म्मणः । अग्रे । त्वष्टा । देवत्वमितिदेव त्वम् । आजानमित्या जानम् । अग्रे ॥१७॥

---

परिधयऽइतिपरि धयः । यत् । यज्ञम् ॥१५॥

यज्ञेन । यज्ञम् । अयजन्त । यत्र ॥१६॥

विश्वकर्म्मणऽइतिविश्व कर्म्मणः । विदधदितिवि[1] दधत् ॥१७॥

---

१. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

वेद । अहम् । एतम् । पुरुषम् । महान्तम् । आदित्यवर्ण्णमित्यादित्य वर्ण्णम् । तमसः । परस्तात् ॥ तम् । एव । विदित्वा । अति । मृत्युम् । एति । न । अन्यः । पन्थाः । विद्यते । अयनाय ॥१८॥

प्रजापतिरितिप्रजा पतिः । चरति । गर्भे । अन्तः । अजायमानः । बहुधा । वि । जायते ॥ तस्य । योनिम् । परि । पश्यन्ति । धीराः । तस्मिन् । ह । तस्थुः । भुवनानि । विश्वा ॥१९॥

यः । देवेभ्यः । आतपतीत्या तपति । यः । देवानाम् । पुरोहितऽइतिपुरः हितः ॥ पूर्वः । यः । देवेभ्यः । जातः । नमः । रुचाय । ब्राह्मये ॥२०॥

रुचम् । ब्राह्मम् । जनयन्तः । देवाः । अग्रे । तत् । अब्रुवन् ॥ यः । त्वा । एवम् । ब्राह्मणः । विद्यात् । तस्य । देवाः । असन् । वशे ॥२१॥

---

आदित्यवर्ण्णमित्यादित्य वर्ण्णम् । परस्तात् । विदित्वा । मृत्युम् । अन्यः । विद्यते ॥१८॥

प्रजापतिरितिप्रजा पतिः । पश्यन्ति । तस्मिन् । तस्थुः । विश्वा ॥१९॥

देवेभ्यः । आतपतीत्या तपति । देवेभ्यः । ब्राह्मये ॥२०॥

ब्राह्मम् । अग्रे । अब्रुवन् । ब्राह्मणः । विद्यात् ॥२१॥

---

वेद[1] । आदित्यवर्ण्णमित्यादित्य वर्ण्णम् । [अ] यनाय ॥१८॥

अजायमानः । जायते । योनिम् ॥१९॥

यः । यः । यः । रुचाय । ब्राह्मये ॥२०॥

जनयन्तः । यः ॥२१॥

---

१. अन्यकोशेषु 'वेद' इत्येवं पठ्यते ।

श्रीः । च । ते । लक्क्ष्मीः । च । पत्न्यौ । अहोरात्त्रेऽइत्त्यहोरात्त्रे । पाश्श्र्वेऽइतिपाश्श्र्वे । नक्क्षत्त्राणि । रूपम् । अश्श्विनौ । इयात्तमितिविऽ आत्तम् ॥ इष्णन् । इषाण । अमुम् । मे । इषाण । सर्व्वलोकमितिसर्व्व लोकम् । मे । इषाण ॥२२॥

।। इति वाजसनेयिसंहितापदे एकत्रिंशत्तमोऽध्यायः ।।

---

लक्ष्मीः । पत्न्यौ । अहोरात्रेऽइत्यहोरात्रे । पार्श्वेऽइतिपार्श्वे । नक्षत्राणि । अश्विनौ । इष्णन् ॥२२॥

---

व्यात्तमितिवि[1] आत्तम् ॥२२॥

।। इति श्रीवाजसनेयिसंहितायां शाकल्यकृते[2]पदेन एकत्रिंशोऽध्यायः ।।

---

१. ककोशशैल्यनुसारमिह 'व्वि' इत्येवं गुरुवकारेण भाव्यम् ।

२. इत आरभ्य आग्रन्थान्तं पाठोऽयं दृश्यते ।

# द्वात्रिंशोऽध्यायः

तत् । एव । अग्निः । तत् । आदित्यः । तत् ।
वायुः । तत् । ऊँऽइत्यूँ । चन्द्रमाः ॥ तत् । एव । शुक्रम् ।
तत् । ब्रह्म । ताः । आपः । सः । प्रजापतिरितिप्रजा
पतिः ॥१॥

सर्वे । निमेषाऽइतिनि मेषाः । जज्ञिरे । विद्युत-
इतिवि द्युतः । पुरुषात् । अधि ॥ न । एनम् । ऊर्द्ध्वम् । न ।
तिर्य्यञ्चम् । न । मद्ध्ये । परि । जग्रभत् ॥२॥

न । तस्य । प्रतिमेतिप्रति मा । अस्ति । यस्य । नाम ।
महत् । यशः ॥३॥

एषः । ह । देवः । प्रदिशऽइतिप्र दिशः । अनु ।
[1]सर्वाः । पूर्वः । ह । जातः । सः । ऊँऽइत्यूँ । गर्भे ।

---

अग्निः । आदित्यः । ऊँऽइत्यूँ । शुक्रम् । ब्रह्म । प्रजापतिरितिप्रजा
पतिः ॥१॥
जज्ञिरे । विद्युतऽइतिवि द्युतः । मध्ये । जग्रभत् ॥२॥
प्रतिमेतिप्रति मा । अस्ति ॥३॥
प्रदिशऽइतिप्र दिशः । [1]सर्वाः । ऊँऽइत्यूँ । अन्तारित्यन्तः ।

---

वायुः ॥१॥
विद्युतऽइतिवि द्युतः । तिर्य्यञ्चम् ॥२॥
य्यस्य । य्यशः ॥३॥ [1]सर्वाः ॥४॥

---

१. द्रष्टव्यात्र पूर्वत्र ३२८ पृष्ठस्था टिप्पणी १ ।

अन्तरिक्ष्यन्तः ॥ सः । एव । जातः । सः । जनिष्यमाणः । प्रत्यङ् । जनाः । तिष्ठति । सर्वतोमुखऽइतिसर्वतः मुखः ॥४॥

यस्मात् । जातम् । न । पुरा । किम् । चन । एव । यः । आबभूवेत्या बभूव । भुवनानि । विश्वा ॥५॥

येन । द्यौः । उग्रा । पृथिवी । च । दृढा । येन । स्वरितिस्वः । स्तभितम् । येन । नाकः ॥ यः । अन्तरिक्षे । रजसः । विमानऽइतिवि मानः ॥६॥

यम् । क्रन्दसीऽइतिक्रन्दसी । अवसा । तस्तभाने-ऽइतितस्तभाने । अभि । ऐक्षेताम् । मनसा । रेजमाने-ऽइतिरेजमाने ॥ यत्र । अधि । सूरः । उदितऽइत्युत् इतः । विभातीतिवि भाति ॥७॥

वेनः । तत् । पश्यत् । निहितमितिनि हितम् । गुहा । सत् । यत्र । विश्वम् । भवति । एकनीडमित्येक नीडम् ॥

---

जनिष्यमाणः । प्रत्यङ् । तिष्ठति ॥४॥

यस्मात् । आबभूवेत्या बभूव । विश्वा ॥५॥

उग्रा । अन्तरिक्षे ॥६॥

क्रन्दसीऽइतिक्रन्दसी । तस्तभानेऽइतितस्तभाने । ऐक्षेताम् । यत्र । उदितऽइत्युत् इतः ॥७॥

पश्यत् । यत्र । विश्वम् । एकनीडमित्येक नीडम् । तस्मिन् । ओत-

---

१यस्मात् । १यः ॥५॥

१येन । २येन । ३येन । १यः । विमानऽइतिवि मानः ॥६॥

१यम् । १यत्र । विभातीतिवि भाति ॥७॥

१यत्र । विभूरितिवि भूः ॥८॥

तस्मिन् । इदम् । सम् । च । वि । च । एति । सर्वम् । सः । ओतऽइत्त्या उतम् । प्रोतऽइतिप्र उतम् । च । विभूरितिवि भूः । प्रजास्वितिप्र जासु ॥८॥

प्र । तत् । वोचेत् । अमृतम् । नु । विद्वान् । गन्धर्वः । धाम । विभृतमितिवि भृतम् । गुहा । सत् ॥ त्रीणि । पदानि । निहितेतिनि हिता । गुहा । अस्य । यः । तानि । वेद । सः । पितुः । पिता । असत् ॥९॥

सः । नः । बन्धुः । जनिता । सः । विधातेतिवि धाता । धामानि । वेद । भुवनानि । विश्वा ॥ यत्र । देवाः । अमृतम् । आनशानाः । तृतीये । धामन् । अध्यैरयन्तेत्त्यधि ऐरयन्त ॥१०॥

परीत्त्येतिपरि इत्त्य । भूतानि । परीत्त्येतिपरि इत्त्य । लोकान् । परीत्त्येतिपरि इत्त्य । [1]सर्वाः । प्रदिशऽइतिप्र दिशः । दिशः । च ॥ उपस्त्थायेत्त्युप स्थाय । प्रथमजा-

---

ऽइत्या उतम् । प्रोतऽइतिप्र उतम् । प्रजास्वितिप्र जासु ॥८॥

विद्वान् ॥९॥

विश्वा । यत्र । अध्यैरयन्तेत्यधि ऐरयन्त ॥१०॥

परीत्येतिपरि इत्य । परीत्येतिपरि इत्य । परीत्येतिपरि इत्य । [1]सर्वाः । प्रदिशऽइतिप्र दिशः । उपस्थायेत्युप स्थाय । प्रथमजामितिप्रथम

---

विभृतमितिवि[2] भृतम् । यः ॥९॥

विधातेतिवि धाता । यत्र । तृतीये । अध्यैरयन्तेत्यधि ऐरयन्त ॥१०॥

[1]सर्वाः । उपस्थायेत्युप स्थाय ॥११॥

---

१. द्रष्टव्याऽत्र पूर्वत्र ३२८ पृष्ठस्था टिप्पणी १ ।

२. ककोशशैल्यनुसारमिह 'वि' इत्येवं द्विवकारवता पाठेन भाव्यम् ।

मितिंप्रथम जाम् । ऋतस्य । आत्मना । आत्मानम् । अभि । सम् । व्विवेश ॥११॥

परि । द्यावापृथिवीऽइतिद्द्यावापृथिवी । सद्यः । इत्वा । परि । लोकान् । परि । दिशः । परि । स्वरितिंस्वः ॥ ऋतस्य । तन्तुम् । व्वितंतमितिवि तंतम् । व्विचृत्त्येतिवि चृत्त्य । तत् । अपश्श्यत् । तत् । अभवत् । तत् । आसीत् ॥१२॥

सदसं । पतिम् । अद्भुतम् । प्प्रियम् । इन्द्रस्य । काम्म्यम् ॥ सनिम् । मेधाम् । अयासिषम् । स्वाहा ॥१३॥

याम् । मेधाम् । देवगणाऽइतिंदेव गणाः । पितरः । च । उपासंतऽइत्युप आसंते ॥ तया । माम् । अद्य । मेधया । अग्ने । मेधाविनम् । कुरु । स्वाहा ॥१४॥

मेधाम् । मे । वरुणः । ददातु । मेधाम् ।

---

जाम् । आत्मना । आत्मानम् ॥११॥

द्यावापृथिवीऽइतिद्यावापृथिवी । सद्यः । इत्वा । व्विचृत्येतिवि चृत्य । अपश्यत् ॥१२॥

अद्भुतम् । काम्यम् ॥१३॥

उपासंतऽइत्युप आसंते । अद्य । अग्ने ॥१४॥

---

व्वितंतमितिव्वि तंतम् । विचृत्येतिव्वि चृत्य ॥१२॥

प्रियम् । अयासिषम् ॥१३॥

य्याम् । तया । मेधया ॥१४॥

अग्निः । प्रजापतिरितिप्रजा पतिः ॥ मेधाम् । इन्द्रः । च । वायुः । च । मेधाम् । धाता । ददातु । मे । स्वाहा ॥१५

इदम् । मे । ब्रह्म । च । क्षत्रम् । च । उभेऽइत्युभे । श्रियम् । अश्नुताम् ॥ मयि । देवाः । दधतु । श्रियम् । उत्तमामित्युत् तमाम् । तस्यै । ते । स्वाहा ॥१६॥

॥ इति वाजसनेयिसंहितापदे द्वात्रिंशत्तमोऽध्यायः ॥

---

अग्निः । प्रजापतिरितिप्रजा पतिः ॥१५॥

ब्रह्म । क्षत्रम् । उभेऽइत्युभे । अश्नुताम् । उत्तमामित्युत् तमाम् ॥१६॥

॥ इतिवाजसनेयसंहितापदे द्वात्रिंशतिमो[1]ऽध्यायः ॥

---

वायुः ॥१५॥

श्रियम् । मयि । श्रियम् ॥१६॥

॥इति श्रीवाजसनेयिसंहितायां शाकल्यकृते पदेन द्वात्रिंशतिमो[1]ऽध्यायः॥

---

१. द्रष्टव्याऽत्र पूर्वत्र ५२७ पृष्ठस्था टिप्पणी १ ।

# त्रयस्त्रिंशोऽध्यायः

अस्य । अजरासः । दमाम् । अरित्राः । अर्चद्धूमास-ऽइत्त्यर्चत् धूमासः । अग्नयं÷ । पावकाः ॥ श्वितीचयं÷ । श्वात्त्रासं÷ । भुरण्यवं÷ । वनर्षदं÷ । वनसदऽइतिवन सदं÷ । वायवं÷ । न । सोमाः ॥१॥

हरयः । धूमकेतवऽइतिधूम केतवः । वातजूताऽइतिवात जूताः । उपं । द्यवि ॥ यतंन्ते । वृथक् । अग्नयं÷ ॥२॥

यजं । नः । मित्त्रावरुणा । यजं । देवान् । ऋतम् । बृहत् ॥ अग्ने । यक्षि । स्वम् । दमम् ॥३॥

---

अरित्राः । अर्चद्धूमासऽइत्यर्चत् धूमासः । अग्नयं÷ । श्वात्रासं÷ । भुरण्यवं÷ ॥१॥

अग्नयं÷ ॥२॥

मित्रावरुणा । अग्ने । यक्षि ॥३॥

---

अग्नयं÷ । श्वितीचयं÷ । वनसदऽइतिवन[1] सदं÷ । वायवं÷ ॥१॥

हरयः । वातजूताऽइतिवात जूताः । यतंम्[2] । ते[2] । वृथक् । अग्नयं÷ ॥२॥

यजं । यजं । यक्षि ॥३॥

१. ककोशशैल्यनुसारमिह 'वन' इत्येवं पाठेन भाव्यम् ।

२. अस्थाने विच्छेदरूपोऽपपाठोऽयम् । 'यतंन्ते' इति पाठेन भाव्यम् ।

द्वेऽइतिद्वे । विरूपेऽइतिवि रूपे । चरतः । स्वर्थेऽइतिसु अर्थे । अन्यान्येत्यन्या अन्या । वृत्सम् । उप । धापयेतेऽइतिधापयेते ॥ हरिः । अन्यस्याम् । भवति । स्वधावानितिस्वधा वान् । शुक्रः । अन्यस्याम् । ददृशे । सुवर्चाऽइतिसु वर्चाः ॥४॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन् ॥ औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥५॥

अग्निः । वृत्राणि । जङ्घनत् । द्रविणस्युः । विपन्यया ॥ समिद्धऽइतिसम् इद्धः । शुक्रः । आहुतऽइत्या हुतः ॥६॥

---

द्वेऽइतिद्वे । अन्यान्येत्यन्या अन्या । वृत्सम् । अन्यस्याम् । शुक्रः । अन्यस्याम् ॥४॥

अग्निम् । औक्षन् । अस्तृणन् । अस्मै ॥५॥

अग्निः । वृत्राणि । विपन्यया । समिद्धऽइतिसम् इद्धः । शुक्रः । आहुतऽइत्या हुतः ॥६॥

---

[1]विरूपेऽइतिवि रूपे । [2]वत्सम् । धापयेतेऽइतिधापयेते । स्वधावानितिस्वधा वान् । सुवर्चाइतिसु वर्चाः ॥४॥

[3]असपर्यन् । असादयन्त ॥५॥

[4]वृत्राणि । विपन्यया ॥६॥

---

१. इतः पूर्वस्या मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्यैकस्याः कण्डिकासंख्याया भेदो द्रष्टव्यः ।

२. अपपाठोऽयम्, वकारस्य द्वित्वाभावात् । 'वृत्सम्' इति साधुः ।

३. इतः पूर्वस्या मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्य द्वयोः कण्डिकासंख्यायोर्भेदो द्रष्टव्यः ।

४. इतः पूर्वस्या मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्य तिसृणां कण्डिकासंख्यानां भेदो जायते ।

विश्वेभिः । सोम्म्यम् । मधु । अग्ने । इन्द्रेण । वायुना ॥ पिब । मित्रस्य । धामभिरितिधाम भिः ॥७॥

आ । यत् । इषे । नृपतिमितिनृ पतिम् । तेजः । आनट् । शुचि । रेतः । निषिक्क्तम् । निसिक्क्तमितिनि सिक्क्तम् । द्यौः । अभीके ॥ अग्निः । शर्द्धम् । अनवद्यम् । युवानम् । स्वाद्ध्युमितिसु आद्ध्यम् । जनयत् । सूदयत् । च ॥८॥

अग्ने । शर्द्धं । महते । सौभगाय । तव । द्युम्म्नानि । उत्तमानीत्युत् तमानि । सन्तु ॥ सम् । जास्पत्त्यम् । जाःपत्त्यमितिजाः पत्त्यम् । सुयममितिसु यमम् । आ । कृणुष्ष्व । शत्त्रूयताम् । शत्त्रुयतामितिशत्त्रु यताम् । अभि । तिष्ठ । महांसि ॥९॥

---

विश्वेभिः । सोम्यम् । अग्ने । मित्रस्य ॥७॥

निषिक्तम् । निसिक्तमितिनि सिक्तम् । अग्निः । अनवद्यम् स्वाध्युमितिसु आध्यम् ॥८॥

अग्ने । द्युम्नानि । उत्तमानीत्युत् तमानि । जास्पत्यम् । जाःपत्य-मितिजाः पत्यन् । कृणुष्व । शत्रूयताम् । शत्रुयतामितिशत्रु यताम् । तिष्ठ ॥९॥

---

वायुना । पिब । आ[1] ॥७॥

य्यत् । य्युवानम् । जनय्यत । सूदय्यत ॥८॥

सौभगा… । सुय्यममितिसु [2]य्यमम् । शत्रूय्यताम् । शत्रुय्यतामितिशत्रु [3]य्यताम् ॥९॥

---

१. 'पिब । आ' इत्येवं पदच्छेदोऽन्यकोशेषु न दृश्यते, स्वरानुरोधादपि न सम्भवति ।

२. ककोशशैल्यनुसारमिह 'य्यमम्' इत्येव युक्तः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारमिह 'य्यताम्' इत्येवं युक्तः पाठो ज्ञेयः ।

त्वाम् । हि । मन्द्रतमभितिमन्द्र तमम् । अर्कशोकैरित्यर्क शोकैः । वृवृमहे । महि । नः । श्रोषि । अग्ने ॥ इन्द्रम् । न । त्वा । शवसा । देवता । वायुम् । पृणन्ति । राधसा । नृतमाऽइतिनृ तमाः ॥१०॥

त्वेऽइतित्वे । अग्ने । स्वाहुतेतिसु आहुत । प्रियासः । सन्तु । सूरयः ॥ यन्तारः । ये । मघवानऽइतिमघ वानः । जनानाम् । ऊर्वान् । दयन्त । गोनाम् ॥११॥

श्रुधि । श्रुत्कर्णेतिश्रुत् कर्ण । वह्निभिरितिवह्नि भिः । देवैः । अग्ने । सयावभिरितिसयाव भिः ॥ आ । सीदन्तु । बर्हिषि । मित्रः । अर्य्यमा । प्रातर्य्यावाणः । प्रातर्य्यावानऽइतिप्रातः यावानः । अध्वरम् ॥१२॥

---

अर्क्कशोकैरित्यर्क्क शोकैः । अग्ने ॥१०॥

त्वेऽइतित्वे । अग्ने ॥११॥

श्रुत्कर्णेतिश्रुत् कर्ण । वह्निभिरितिवह्नि भिः । अग्ने । मित्रः । प्रातर्य्यावानऽइतिप्रातः यावानः । अध्वरम् ॥१२॥

---

वायुम् ॥१०॥

प्रियासः । सूरयः । यन्तारः । ये । मघवानऽइतिमघ वानः । दयन्त ॥११॥

वह्निभिरितिवह्नि भिः । सयावभिरितिसयाव भिः । अर्य्यमा । प्रातर्य्यावाणः । प्रातर्य्यावानऽइतिप्रातः [1]य्यावानः ॥१२॥

---

१. ककोशशैल्यनुसारमिह 'य्यावानः' इत्येव पाठेन भाव्यम् ।

विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः । मानुषाणाम् ॥ अग्निः । देवानाम् । अवः । आवृणानऽइत्याऽ[1]वृणानः । सुमृडीकऽइति सु [2]मृडीकः । भवतु । जातवेदाऽइति जात वेदाः ॥१३॥

महः । अग्नेः । समिधानस्येति सम् [3]इधानस्य । शर्मणि । अनागाः । मित्रे । वरुणे । स्वस्तये ॥ श्रेष्ठे । स्याम । सवितुः । सवीमनि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥१४॥

आपः । चित् । पिप्युः । स्तर्यः । न । गावः । नक्षन् । ऋतम् । जरितारः । ते । इन्द्र ॥ याहि । वायुः । न । नियुतऽइति नि युतः । नः । अच्छ । त्वम् । हि । धीभिः । दयसे । वि । वाजान् ॥१५॥

---

विश्वेषाम् । यज्ञियानाम् । विश्वेषाम् । अग्निः । आवृणानऽइत्या वृणानः ॥१३॥

अग्नेः । मित्रे । स्वस्तये । श्रेष्ठे । अद्य ॥१४॥

पिप्युः । नक्षन् । अछ ॥१५॥

---

य्यज्ञियानाम् । आवृणानऽइत्या वृणानः । जातवेदाऽइति जात वेदाः ॥१३

स्वस्तये । वृणीमहे ॥१४॥

स्तर्यः । य्याहि । व्वायुः । नियुतऽइति नि [4]य्युतः । दयसे ॥१५

---

१. 'वृणानः' इति काशिकः पाठः ।

२. 'मृडीकः' इति काशिकः पाठः ।

३. 'इधानस्य' इति काशिकः पाठः ।

४. ककोशशैल्यनुसारमिह 'युतः' इत्येवं युक्तः पाठो ज्ञेयः ।

गावः । उप । अवत । अवतम् । महीऽइतिमही । यज्ञस्य । रप्सुदा ॥ उभा । कर्णा । हिरण्ययां ॥१६॥

यत् । अद्य । सूरे । उदितऽइत्युत् इते । अनांगाः । मित्रः । अर्य्यमा ॥ सुवाति । सविता । भर्गः ॥१७॥

आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभिश्रियमित्यभि श्रियम् ॥ रसा । दधीत । वृषभम् ॥१८॥

आतिष्ठन्तमित्या तिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति । स्वरोचिरितिस्व रोचिः ॥ महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वरूपऽइतिविश्व रूपः । अमृतानि । तस्थौ ॥१९॥

प्र । वः । महे । मन्दमानाय । अन्धसः । अर्च ।

---

यज्ञस्य । रप्सुदा । हिरण्यया ॥१६॥

अद्य । उदितऽइत्युत् इते । मित्रः ॥१७॥

अभिश्रियमित्यभि श्रियम् ॥१८॥

आतिष्ठन्तमित्या तिष्ठन्तम् । विश्वे । वृष्णः । विश्वरूपऽइतिविश्व रूपः । तस्थौ ॥१९॥

---

यज्ञस्य । हिरण्यया ॥१६॥

यत् । अर्य्यमा ॥१७॥

श्रियम् । अभिश्रियमित्यभि श्रियम् । वृषभम् ॥१८॥

श्रियः । वृष्णः । विश्वरूपऽइतिविश्व रूपः ॥१९॥

[1]वः । मन्दमानाय । विश्वानराय । विश्वभुवऽइतिविश्व भुवे ।

---

१. ककोशशैल्यनुसारं 'वः' इत्येवं युक्तः पाठो ज्ञेयः ।

त्रिश्वानराय । त्रिश्वाभुवे । त्रिश्वभुवऽइतिविश्व भुवे ॥ इन्द्रस्य । यस्य । सुमखमितिसु मखम् । सहः । महि । श्रवः । नृम्म्णम् । च । रोदसीऽइतिरोदसी । सपर्य्यतः ॥२०॥

बृहन् । इत् । इध्मः । एषाम् । भूरि । शस्तम् । पृथुः । स्वरुः ॥२१॥

इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वभिरितिसोमपर्व भिः ॥ महान् । अभिष्टिः । ओजसा ॥२२॥

इन्द्रः । वृत्रम् । अवृणोत् । शर्द्धनीतिरितिशर्द्ध नीतिः । प्र । मायिनाम् । अमिनात् । वर्प्पणीतिः । वर्प्पनीतिरितिवर्प्प नीतिः ॥ अहन् । व्यंसमितिवि अंसम् । उशधक् । वनेषु । आविः । धेनाः । अकृणोत् । राम्म्याणाम् ॥२३॥

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः ।

---

त्रिश्वानराय । त्रिश्वाभुवे । त्रिश्वभुवऽइतिविश्व भुवे । नृम्णम् ॥२०॥

इध्मः । शस्तम् ॥२१॥

मत्सि । विश्वेभिः । अभिष्टिः ॥२२॥ वृत्रम् । राम्याणाम् ॥२३॥

---

यस्य । [1]नृम्नम् । सपर्य्यतः ॥२०॥

वृत्रम् । [2]माय्रनाम् । [3]वर्पनीतिरितिवर्प नीतिः । व्यंसमितिवि अंसम् ॥२३॥

---

१. अपपाठोऽयम्, 'नृम्णम्' इति शुद्धः पाठो ज्ञेयः ।

२. अपपाठोऽयम्, 'मायिनाम्' इति शुद्धः पाठो ज्ञेयः ।

३. ककोशशैल्यनुसारं 'वर्प्पनीतिरितिवर्प्प नीतिः' इत्येवं शुद्धः पाठः ।

यासि । सत्पतऽइतिसत् पते । किम् । ते । इत्था ॥ सम् । पृच्छसे । समराणऽइतिसम् [1]अराणः । शुभानैः । वोचेः । तत् । नः । हरिवऽइतिहरि वः । यत् । ते । अस्मेऽइत्यस्मे ॥२४॥

आ । तत् । ते । इन्द्र । आयवः । पनन्त । अभि । ये । ऊर्वम् । गोमन्तमितिगो मन्तम् । तितृत्सान् ॥ सकृत्स्वमितिसकृत् स्वम् । ये । पुरुपुत्रामितिपुरु पुत्राम् । महीम् । सहस्रधारामितिसहस्र धाराम् । बृहतीम् । दुदुक्षन् । दुधुक्षन्नितिदुधुक्षन् ॥२५॥

इमाम् । ते । धियम् । प्र । भरे । महः । महीम् । अस्य । स्तोत्रे । धिषणा । यत् । ते । आनजे ॥ तम् । उत्सवऽइत्युत् सवे । च । प्रसवऽइतिप्र सवे । च । सासहिम् । ससहिमितिससहिम् । इन्द्रम् । देवासः । शवसा । अमदन् । अनु ॥२६॥

---

सत्पतऽइतिसत् पते । इत्था । पृछसे । अस्मेऽइत्यस्मे ॥२४॥

तितृत्सान् । सकृत्स्वमितिसकृत् स्वम् । पुरुपुत्रामितिपुरु पुत्राम् । दुदुक्षन् । दुधुक्षन्नितिदुधुक्षन् ॥२५॥

स्तोत्रे । उत्सवऽइत्युत् सवे । प्रसवऽइतिप्र सवे ॥२६॥

---

य्यासि । हरिवऽइतिहरि वः । य्यत् ॥२४॥

आय्यवः । य्ये । [2]गोमतमितिगो मतम् । [3]तितृत्स्नात् । य्ये ॥२५॥

धिय्यम् । य्यत् । [4]अमदम् ॥२६॥

---

१. 'अराणः' इति काशिकः पाठः ।

२. अपपाठोऽयं, लेखकप्रमादजः । '**गोमन्तमितिगो मन्तम्**' इति साधुः ।

३. अपपाठोऽयं स्याल्लेखकप्रमादजः । '**तितृत्सान्**' इति पाठेन भाव्यम् ।

४. अपपाठोऽयं लेखकप्रमादजः । '**अमदन्**' इति शुद्धः पाठो ज्ञेयः ।

विभ्राडितिविऽभ्राट् । बृहत् । पिबतु । सोम्म्यम् । मधुं । आयुः । दधंत् । यज्ञपंताविितियज्ञ पंतौ । अविंह्रुतमित्त्यविं ह्रुतम् ॥ वातंजूतऽइतिवातं जूतः । यः । अभिरक्क्षतीत्त्यंभि रक्क्षंति । त्मनां । प्रजाऽइतिंप्र जाः । पुपोष । पुरुधा । वि । राजति ॥२७॥

येनं । पावक । चक्क्षंसा । भुरण्यन्तंम् । जनांन् । अनुं ॥ त्वम् । वरुण । पश्श्यंसि ॥२८॥

दैव्यौं । अद्ध्वर्य्यूऽइत्त्यंद्ध्वर्य्यू । आ । गतम् । रथैन । सूर्य्यंत्वचेतिसूर्य्यं त्वचा ॥ मद्ध्वां । यज्ञम् । सम् । अञ्जाथेऽइत्त्यंञ्जाथे ॥२९॥

आ । नः । इडांभिः । विदथें । सुशस्तीतिंसु शस्ति । विश्श्वानंरः । सविता । देवः । एतु ॥ अपिं । यथां ।

---

विभ्राडितिंवि भ्राट् । सोम्यम् । यज्ञपंताविितियज्ञ पंतौ । अविंह्रुतमित्यविं ह्रुतम् । अभिरक्षतीत्यंभि रक्षंति । प्रजाऽइतिप्र जाः ॥२७॥

चक्षसा । भुरण्यन्तंम् । पश्यंसि ॥२८॥

दैव्यौं । अध्वर्य्यूऽइत्यंध्वर्य्यू । सूर्य्यत्वचेतिसूर्य्यं त्वचा । मध्वां । यज्ञम् । अञ्जाथेऽइत्यंञ्जाथे ॥२९॥

सुशस्तीतिंसु शस्ति । विश्वानंरः । मत्संथ । विश्वंम् । अभिपित्व-

---

विभ्राडितिंवि भ्राट् । आयुः । य्यज्ञपंताविितिय्यज्ञ[1] पंतौ । वातंजूतऽइतिवातं जूतः । य्यः ॥२७॥ [2]य्येनं ॥२८॥

अध्वर्य्यूऽइत्यंध्वर्य्यू । सूर्य्यत्वचेतिसूर्य्यं त्वचा । य्यज्ञम् ॥२९॥

य्यथां । य्युवानः ॥३०॥

---

१. ककोशशैल्यनुसारमिह 'य्यज्ञ' इत्येवं पाठेन भाव्यम् ।

२. इत पूर्वस्याः कण्डिकायाः पूर्वं गतत्वादित ऊर्ध्वं चतसृणां कण्डिका-संख्यानां भेदो द्रष्टव्यः ।

युवानं । मर्त्सथ । नं । विश्वम् । जगत् । अभिपित्त्व-ऽइत्त्यभि पित्त्वे । मनीषा ॥३०॥

यत् । अद्य । कत् । च । वृत्त्रहन्निति वृत्त्र हन् । उदगाऽइत्त्युत् अगाः । अभि । सूर्य्य ॥ सर्वम् । तत् । इन्द्र । ते । वशे ॥३१॥

तरणिः । विश्वदर्शतऽइतिविश्व दर्शतः । ज्योतिष्क्कृत् । ज्योतिःकृदितिज्ज्योतिः कृत् । असि । सूर्य्य ॥ विश्वम् । आ । भासि । रोचनम् ॥३२॥

तत् । सूर्य्यस्य । देवत्त्वमितिदेव त्वम् । तत् । महित्त्व-मितिमहि त्वम् । मद्ध्या । कर्त्तोः । विततमितिवि ततम् । सम् । जभार ॥ यदा । इत् । अयुक्क्त । हरितः ।

---

ऽइत्यभि पित्वे ॥३०॥

अद्य । वृत्रहन्निति वृत्र हन् । उदगाऽइत्युत् अगाः ॥३१॥

विश्वदर्शतऽइतिविश्व दर्शतः । ज्योतिष्कृत । ज्योतिःकृदितिज्योतिः कृत् । विश्वम् ॥३२॥

देवत्वमितिदेव त्वम् । महित्वमितिमहि त्वम् । मध्या । अयुक्त ।

---

[1]यत् । 'वृत्रहन्निति वृत्र'[1] हन् । सूर्य्य ॥३१॥

विश्वदर्शतऽइतिविश्व दर्शतः । सूर्य्य ॥३२॥

सूर्य्यस्य । विततमितिवि[2] ततम् । [1]यदा । अयुक्त ।

---

१. ककोशशैल्यनुसारमृकारपरो वकारो गुरुर्न भवति ।

२. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

सुधस्त्थादितिसुध स्थात् । आत् । रात्री । वासः । तनुते । सिमस्मै ॥३३॥

तत् । मित्त्रस्य । वरुणस्य । अभिचक्क्षइत्यभि चक्क्षे । सूर्य्यः । रूपम् । कृणुते । द्योः । उपस्त्थइत्युप स्थे ॥ अनन्तम् । अन्यत् । रुशत् । अस्य । पाजः । कृष्णम् । अन्यत् । हरितः । सम् । भरन्ति ॥३४॥

बट् । महान् । असि । सूर्य्य । बट् । आदित्य । महान् । असि ॥ महः । ते । सतः । महिमा । पनस्यते । अद्धा । देव । महान् । असि ॥३५॥

बट् । सूर्य्य । श्रवसा । महान् । असि । सत्रा । देव । महान् । असि ॥ मह्ना । देवानाम् । असुर्य्यः । पुरोहितइतिपुरः हितः । विभ्वितिवि भु । ज्योतिः । अदाभ्यम् ॥३६॥

---

सधस्थादितिसध स्थात् । रात्री । सिमस्मै ॥३३॥

मित्रस्य । अभिचक्षइत्यभि चक्षे । उपस्थइत्युप स्थे । अन्यत् । कृष्णम् । अन्यत् ॥३४॥

आदित्य । अद्धा ॥३५॥

सत्रा । मह्ना । विभ्वितिवि भु । अदाभ्यम् ॥३६॥

---

[1]तनुते । [1]असि । [1]मस्मै ॥३३॥

सूर्य्यः । [2]अनतम् ॥३४॥ सूर्य्य ॥३५॥

सूर्य्य । असुर्य्यः । विभ्वितिवि भु । [3]ज्योतिः ॥३६॥

---

१. पदच्छेदोऽयुक्तः ।

२. अपपाठोऽयं लेखकप्रमादजः ।

३. अपपाठोऽयं यकारजकारयोः समानोच्चारणनिमित्तजः (द्र० २६ पृष्ठस्था टि० १), 'ज्योतिः' इत्येवं पाठेन भाव्यम् ।

आयन्तऽइवेत्याऽयन्तःऽइव । सूर्य्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत ॥ वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥३७॥

अद्य । देवाः । उदितेत्युत्ऽइता । सूर्य्यस्य । निः । अꣳहसः । पिपृत । निः । अवद्यात् ॥ तत् । नः । मित्रः । वरुणः । मामहन्ताम् । ममहन्तामितिममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥३८॥

आ । कृष्णेन । रजसा । वर्त्तमानः । निवेशयन्नितिनिवेशयन् । अमृतम् । मर्त्यम् । च ॥ हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ॥३९॥

प्र । वावृजे । ववृजऽइतिववृजे । सुप्रयाऽइतिसुप्रयाः । बर्हिः । एषाम् । आ । विश्पतीव । विश्पतीऽइवेतिविश्पती

---

आयन्तऽइवेत्याऽयन्तः इव । विश्वा । भक्षत ॥३७॥

अद्य । उदितेत्युत्ऽइता । अवद्यात् । मित्रः ॥३८॥

कृष्णेन । हिरण्ययेन । पश्यन् ॥३९॥

सुप्रयाऽइतिसु प्रयाः । विश्पतीव । विश्पतीऽइवेतिविश्पती इव ।

---

आयन्तऽइवेत्याऽयन्तः इव । सूर्य्यम् । [1]भक्षते ॥३७॥

[2]अद्य? । सूर्य्यस्य । [2]पिपृत? ॥३८॥

निवेशयन्नितिनि वेशयन् । हिरण्ययेन । य्याति ॥३९॥

ववृजऽइतिववृजे[3] । सुप्रयाऽइतिसु प्रयाः? । विश्पतीऽइवेतिविश्पती[4]

---

१. अपपाठोऽयं लेखकप्रमादजः ।

२. विसर्गनिर्देशरूपोऽयमपपाठो लेखकप्रमादजः ।

३. ककोशशैल्यनुसारमिह '०ववृजे' इति युक्तः पाठो ज्ञेयः ।

४. ककोशशैल्यनुसारमिह '०विश्पती' इति युक्तः पाठो ज्ञेयः ।

इव । वीरिटे । इयातेऽइतीयाते ॥ विशाम् । अक्तोः । उषसः । पूर्वहूताविति पूर्वऽहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥४०॥

इन्द्रवायूऽइतीन्द्रवायू । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ॥ आदित्यान् । मारुतम् । गणम् ॥४१॥

वरुणः । प्राविरितिप्र [1]अविता । भुवत् । मित्रः । विश्वाभिः । ऊतिभिरित्यूतिऽभिः ॥ करताम् । नः । सुराधसऽइतिसुऽराधसः ॥४२॥

अधि । नः । इन्द्र । एषाम् । विष्णोऽइतिविष्णो । सजात्यानामितिसऽजात्यानाम् ॥ इत । मरुतः । अश्विना ॥४३

अग्ने । इन्द्र । वरुण । मित्र । [2]देवाः । शर्द्धः । प्र । यन्त । मारुत । उत । विष्णोऽइतिविष्णो ॥ उभा ।

---

अक्तोः । स्वस्तये । नियुत्वान् ॥४०॥

बृहस्पतिम् । मित्रा । अग्निम् । आदित्यान् ॥४०॥

प्राविरितिप्र अविता । मित्रः । विश्वाभिः । ऊतिभिरित्यूतिऽभिः ॥४२

विष्णोऽइतिविष्णो । सजात्यानामितिसऽजात्यानाम् । अश्विना ॥४३॥

अग्ने । मित्र । [2]देवाः । विष्णोऽइतिविष्णो । नासत्या । रुद्रः ॥४४॥

---

इव । इयातेऽइतीयाते । वायुः । स्वस्तये । नियुत्वान् ॥४०॥

इन्द्रवायूऽइतीन्द्रवायू ॥४१॥

विष्णोऽइतिविष्णो ॥४३॥

[2]देवाः । यन्त । विष्णोऽइतिविष्णो ॥४४॥

---

१. 'अविता' इति काशिकः पाठः ।

२. अत्र ४२० पृष्ठस्था टिप्पणी १ द्रष्टव्या ।

नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥४४॥

इन्द्राग्नीऽइतीन्द्राग्नी । मित्रावरुणा । अदितिम् । स्वरितिस्वः । पृथिवीम् । द्याम् । मरुतः । पर्वतान् । अपः ॥ हुवे । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् । भगम् । नु । शꣳसम् । सवितारम् । ऊतये ॥४५॥

अस्मेऽइत्यस्मे । रुद्राः । मेहना । पर्वतासः । वृत्रहत्यऽइतिवृत्र हत्ये । भरहूताविति भर हूतौ । सजोषाऽइतिस जोषाः ॥ यः । शꣳसते । स्तुवते । धायि । पज्रः । इन्द्रज्येष्ठाऽइतीन्द्र ज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥४६॥

अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि । भयमानः । व्ययेयम् ॥ त्राध्वम् । नः । देवाः ।

इन्द्राग्नीऽइतीन्द्राग्नी । मित्रावरुणा । विष्णुम् । ब्रह्मणः ॥४५॥

अस्मेऽइत्यस्मे । रुद्राः । वृत्रहत्यऽइतिवृत्र हत्ये । पज्रः । इन्द्रज्येष्ठाऽइतीन्द्र ज्येष्ठाः । अस्मान् ॥४६॥

अद्य । यजत्राः । त्राध्वम् । त्राध्वम् । अवपदऽइत्यव पदः ।

---

ऊतये ॥४५॥

[1]वृत्रहत्यऽइतिवृत्र[1] हत्ये । यः । धायि ॥४६॥

यजत्राः । [2]वः । भयमानः । व्ययेयम् । यजत्राः ॥४७॥

---

१. ककोशशैल्यनुसारम् ऋकारपरो वकारो न गुरुर्भवतीति कृत्वा उभयत्रैकवकारवता पाठेन भाव्यम् ।

२. ककोशशैल्यनुसारमिह 'वः' पदे संहितेव वकारो गुरुर्न भवतीति कृत्वा 'वः' इत्येव पाठः साधुः ।

निजुरऽइतिनि जुरः । वृकस्य । त्राद्धम् । कुर्त्तात् । अवपदऽइत्यव पदः । यजत्राः ॥४७॥

विश्वे । देवाः । शृणुत । इमम् । हवम् । मे । ये । अन्तरिक्क्षे । ये । उप । द्यवि । स्थ ॥ ये । अग्निजिह्वाऽइत्यग्नि जिह्वाः । उत । वा । यजत्राः ॥४८॥

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतत्त्वमित्यमृत त्वम् । सुवसि । भागम् । उत्तममित्युत् तमम् ॥ आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥४९॥

प्र । वायुम् । अच्छ । बृहती । मनीषा । बृहद्रयिमितिबृहत् रयिम् । विश्वरवारमितिविश्वरव वारम् । रथप्रामितिरथ प्राम् ॥ द्युतद्यामेतिद्युतत् यामा । नियुतऽइतिनि युतः ।

---

यजत्राः ॥४७॥

विश्वे । अन्तरिक्षे । अग्निजिह्वाऽइत्यग्नि जिह्वा? । यजत्राः ॥४८॥

देवेभ्यः । यज्ञियेभ्यः । अमृतत्वमित्यमृत त्वम् । उत्तममित्युत् तमम् । मानुषेभ्यः ॥४९॥

अच्छ । बृहद्रयिमितिबृहत् रयिम् । विश्ववारमितिविश्व वारम् । रथप्रामितिरथ प्राम् । द्युतद्यामेतिद्युतत् यामा । पत्यमानः । इयक्षसि । प्रयज्यो-

---

य्ये । य्ये । य्ये । य्यजत्राः ॥४८॥

य्यज्ञियेभ्यः ॥४९॥

वायुम् । बृहद्रयिमितिबृहत् रयिम् । विश्ववारमितिविश्व वारम् । द्युतद्यामेतिद्युतत् [1]य्यामा । नियुतऽइतिनि [2]य्युतः । इयक्षसि । प्रयज्यो-

---

१. ककोशशैल्यनुसारमिह 'यामा' इत्येवं पाठेन भाव्यम् ।

२. ककोशशैल्यनुसारमिह 'युतः' इत्येवं पाठेन भाव्यम् ।

पत्त्यमानꣳ । कविः । कविम् । इयक्क्षसि । प्रयज्ज्योऽइतिप्र यज्ज्यो ॥५०॥

मित्त्रम् । हुवे । पूतदक्क्षमितिपूत दक्क्षम् । वरुणम् । च । रिशादसम् ॥ धियम् । घृताचीम् । साधन्ता ॥५१॥

दस्रा । युवाकवꣳ । सुताः । नासत्त्या । वृक्क्तबर्हिषऽइतिवृक्क्त बर्हिषꣳ ॥ आ । यातम् । रुद्रवर्त्तनीऽइतिरुद्र वर्त्तनी ॥५२॥

विदत् । यदि । सरमा । रुग्णम् । अद्रेꣳ । महि । पाथः । पूर्व्यम् । सद्ध्र्यक् । करितिकꣳ ॥ अग्ग्रम् । नयत् । सुपदीतिसु पदि । अक्क्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥५३॥

---

ऽइतिप्र यज्यो ॥५०॥

मित्रम् । पूतदक्षमितिपूत दक्षम् ॥५१॥

नासत्या । वृक्तबर्हिषऽइतिवृक्त बर्हिषꣳ । रुद्रवर्त्तनीऽइतिरुद्र वर्त्तनी ॥५२

रुग्णम् । अद्रेꣳ । सध्र्यक् । अग्रम् । अक्षराणाम् । अछ ॥५३॥

---

ऽइतिप्र [1]य्यज्यो ॥५०॥

धिय्यम् ॥५१॥

य्युवाकवꣳ । [2]वृक्तबर्हिषऽइतिवृक्त[2] बर्हिषꣳ । य्यातम् । रुद्रवर्त्तनीऽइतिरुद्र वर्त्तनी ॥५२॥

य्यदि । [3]रुणम् । नय्यत् । [4]सुपदीमितिसु पदि ॥५३॥

---

१. ककोशशैल्यनुसारमिह 'य्यज्यो' इत्येवं पाठेन भाव्यम् ।

२. ककोशशैल्यनुसारमिह ऋकारपरो वकारो गुरुर्न भवति । तेनोभयत्र 'वृक्त' इत्येव साधुः पाठः ।

३. अपपाठोऽयं लेखकप्रमादजः, 'रुग्णम्' इत्येव साधुः पाठः ।

४. अपपाठोऽयं लेखकप्रमादजः, 'सुपदीतिसु' इत्येव युक्तः पाठः ।

नहि । स्पर्शम् । अविदन् । अन्यम् । अस्मात् । वैश्वानरात् । पुरऽएतारमितिपुरः एतारम् । अग्नेः ॥ आ । ईम् । एनम् । अवृधन् । अमृताः । अमर्त्यम् । वैश्वानरम् । क्षैत्रजित्यायेतिक्षैत्र जित्याय । देवाः ॥५४॥

उग्रा । विघनिनेतिवि घनिना । मृधः । इन्द्राग्नीऽइतीन्द्राग्नी । हवामहे ॥ ता । नः । मृडातः । ईदृशे ॥५५॥

उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे ॥ अभि । देवान् । इयक्षते ॥५६॥

ये । त्वा । अहिहत्यऽइत्यहि हत्ये । मघवन्नितिमघ वन् । अवर्द्धन् । ये । शाम्बरे । हरिवऽइतिहरि वः । ये । गविष्टावितिगो इष्टौ ॥ ये । त्वा । नूनम् । अनुमदन्तीत्यनु मदन्ति । विप्राः । पिब । इन्द्र । सोमम् । सगणऽइतिस गणः । मरुद्भिरितिमरुत् भिः ॥५७॥

---

अन्यम् । अस्मात् । वैश्वानरात् । अग्ने? । वैश्वानरम् । क्षैत्रजित्यायेतिक्षैत्र जित्याय ॥५४॥

उग्रा । इन्द्राग्नीऽइतीन्द्राग्नी ॥५५॥

अस्मै । इयक्षते ॥५६॥

अहिहत्यऽइत्यहि हत्ये । गविष्टावितिगो इष्टौ । अनुमदन्तीत्यनु मदन्ति । विप्राः । मरुद्भिरितिमरुत् भिः ॥५७॥

---

क्षैत्रजित्याय्रेतिक्षैत्र जित्याय्र ॥५४॥

विघनिनेतिवि[1] घनिना ॥५५॥

गाय्रत । पवमानाय्र । इय्रक्षते ॥५६॥

य्ये । मघवन्नितिमघ वन् । य्ये । हरिवऽइतिहरि वः । य्ये । य्ये ॥५७॥

---

१. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

जनिष्ठाः । उग्रः । सहसे । तुराय । मन्द्रः । ओजिष्ठः । बहुलाभिमान इति बहुल अभिमानः । अवर्द्धन् । इन्द्रम् । मरुतः । चित् । अत्र । माता । यत् । वीरम् । दधनत् । धनिष्ठा ॥५८॥

आ । तु । नः । इन्द्र । वृत्रहन्निति वृत्र हन् । अस्माकम् । अर्द्धम् । आ । गहि ॥ महान् । महीभिः । ऊतिभिरित्यूति भिः ॥५९॥

त्वम् । इन्द्र । प्रतूर्त्तिष्विति प्र तूर्त्तिषु । अभि । [1]विश्वाः । असि । स्पृधः ॥ अशस्तिहेत्यशस्ति हा । जनिता । विश्वतूरिति विश्व तूः । असि । त्वम् । तूर्य्य । तरुष्यतः ॥६०॥

---

जनिष्ठाः । उग्रः । ओजिष्ठः । अत्र । धनिष्ठा ॥५८॥

वृत्रहन्निति वृत्र हन् । अस्माकम् । ऊतिभिरित्यूति भिः ॥५९।

प्रतूर्त्तिष्विति प्र तूर्त्तिषु । [1]विश्वाः । अशस्तिहेत्यशस्ति हा । विश्वतूरिति विश्व तूः । तरुष्यतः ॥६०॥

---

तुराय । यत् ॥५८॥

[2]वृत्रहन्निति वृत्र[2] हन् ॥५९॥

[1]विश्वाः । तूर्य्य ॥६०॥

---

१. द्रष्टव्याऽत्र पूर्वत्र ३२८ पृष्ठस्था टिप्पणी १ ।

२. ककोशग्रैल्यनुसारमृकारपरो वकारो गुरुर्न भवति, तेन 'वृत्र' इत्येवमेकवकारवता पाठेन भाव्यम् ।

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणीऽइतिक्षोणी । शिशुम् । न । मातरा ॥ [1]विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥६१॥

अदब्धेभिः । सवितरितिसवितः । पायुभिरितिपायु भिः । त्वम् । शिवेभिः । अद्य । परि । पाहि । नः । गयम् ॥ हिरण्यजिह्वऽइतिहिरण्य जिह्वः । सुविताय । नव्यसे ॥६२॥

प्र । वीरयेतिवीर या । शुचयः । दद्रिरे । वाम् । अध्वर्युभिरित्यध्वर्यु भिः । मधुमन्तऽइतिमधु मन्तः ।

---

शुष्मम् । क्षोणीऽइतिक्षोणी । [1]विश्वाः । मन्यवे । वृत्रम् ॥६१॥

अद्य । हिरण्यजिह्वऽइतिहिरण्य जिह्वः । नव्यसे ॥६२॥

दद्रिरे । अध्वर्युभिरित्यध्वर्यु भिः । अर्छ ॥६३॥

---

[2]शुष्मिन् । तुरयन्तम् । ईयतुः । [1]विश्वाः । श्नथयन्त । वृत्रम् । यत् ॥६१॥

[3]पायुभिरितिपायु भिः । गयम् । सुविताय ॥६२॥

वीरयेतिवीर[4] या । शुचयः । [5]वाम् । अध्वर्युभिरित्यध्वर्यु भिः । वायोऽइतिवायो । नियुतऽइतिनि [6]युतः । याहि । मदाय ॥६३॥

---

१. द्रष्टव्याऽत्र पूर्वत्र ३२८ पृष्ठस्था टि० १ ।

२. अपपाठोऽयं लेखकप्रमादजः । 'शुष्मम्' इति शुद्धः पाठो ज्ञेयः ।

३. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्य सप्तानां कण्डिकासंख्यानां भेदो जायते ।

४. ककोशशैल्यनुसारं 'वीर या' इत्येवं पाठेन भाव्यम् ।

५. ककोशसंहितेव 'वाम्' पदे वकारो गुरुर्न भवति ।

६. ककोशशैल्यनुसारमिह 'युतः' इत्येवं पाठेन भाव्यम् ।

सुतासं॑ऽ ॥ वह॑ । वायो॒ऽइति॒वायो॑ । नियुत॒ऽइति॒नि सुत॑ऽ ।
याहि । अच्छ॑ । पिब॑ । सुतस्य॑ । अन्ध॑सह॑ । मदा॑य ॥६३॥

काऽयर्योह॑ । आजानेष्वित्य॒ा जाने॑षु । क्रत्वा॑ ।
दक्षस्य । दुरोणे ॥ रिशादसा । सधस्थ॒ऽइति॒सध स्थे॑ । आ ६४

तिरश्चीन॑ऽ । वित॑त॒ऽइति॒वि त॑तह॑ । रश्मिः॑ । एषाम्।
अधः॑ । स्वित् । आसी३त् । उपरि॑ । स्वित् । आसी३त् ॥
रेतोधा॒ऽइति॒रेतह॑ धाः॑ । आसन् । महिमान॑ऽ । आसन् ।
स्वधा । अवस्तात् । प्रय॑ति॒रिति॒प्र य॑तिह॑ । परस्तात् ॥६५॥

आ । रोद॑सी॒ऽइति॒रोद॑सी । अपृणत् । आ । स्व॑ऽ ।
महत् । जातम् । यत् । एनम् । अपस॑ऽ । अधा॑रयन् ॥

काव्य॑योह॑ । आजानेष्वित्या जाने॑षु । क्रत्वा॑ । दक्षस्य । सधस्थ॒ऽइति॒सध स्थे॑ ॥६४॥

तिरश्चीन॑ऽ । रश्मिः॑ । अवस्तात् । प्रय॑ति॒रिति॒प्र य॑तिह॑ । परस्तात् ॥६५

[1]काव्य॑य्योह॑ । [2]आजनेष्वित्या॑ जाने॑षु ॥६४॥

[3]वित॑त॒ऽइति॒वि[4] त॑तह॑ । आसीत्[5] । आसीत्[5] । प्रय॑ति॒रिति॒प्र [6]य्य॑तिह॑ ॥६५॥

य्यत् । अधा॑रय्यन् । अध्वराय॑ । नीय्यते । [7]अन्य॑ऽ ।

१. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्याष्टानां कण्डिकासंख्यानां भेदो जायते ।

२. अपपाठोऽयं लेखकप्रमादजः । 'आजानेष्वित्या जाने॑षु' इति साधुः ।

३. इतः पूर्वस्याः कण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इत आरभ्य नवानां कण्डिकासंख्यानां भेदो जायते ।

४. ककोशशैल्यनुसारमिह 'व्वि' इत्येवं पाठेन भाव्यम् ।

५. अपपाठोऽयं प्लुतचिह्नरहितः । ऋग्वेदेऽपि प्लुतत्वं दृश्यते ।

६. ककोशशैल्यनुसारमिह 'य्यतिह' इत्येवं पाठेन भाव्यम् ।

७. अपपाठोऽयं लेखकप्रमादजः । 'अत्य॑ऽ' इति शुद्धः पाठो ज्ञेयः ।

मयि । त्यत् । इन्द्रियम् । बृहत् । मयि । दक्षः । मयि । क्रतुः ॥ घर्म्मः । त्रिशुगितित्रि शुक् । वि । राजति । विराजेतिवि राजा । ज्योतिषा । सह । ब्रह्मणा । तेजसा । सह ॥२१॥

पयसः । रेतः । आभृतमित्या भृतम् । तस्य । दोहम् । अशीमहि । उत्तरामुत्तरामित्युत्तराम् उत्तराम् । समाम् ॥ त्विषः । सम्वृगितिसम् वृक् । क्रत्वे । दक्षस्य । ते । सुषुम्णस्य । सुसुम्नस्येतिसु सुम्नस्य । ते । सुषुम्ण । सुसुम्नेतिसु सुम्न । अग्निहुतऽइत्यग्नि हुतः ॥ इन्द्रपीतस्येतीन्द्र पीतस्य । प्रजापतिभक्क्षितस्येतिप्रजापति भक्क्षितस्य । मधुमतऽइतिमधु मतः । उपहूतऽइत्युप हूतः । उपहूतस्येत्युप हूतस्य । भक्क्षयामि ॥२२॥

॥ इति वाजसनेयिसंहितापदे अष्टत्रिंशोऽध्यायः ॥

---

दक्षः । त्रिशुगितित्रि शुक् । ब्रह्मणा ॥२१॥

आभृतमित्या भृतम् । उत्तरामुत्तरामित्युत्तराम् उत्तराम् । क्रत्वे । दक्षस्य । सुषुम्णस्य । सुसुम्नस्येतिसु सुम्नस्य । सुषुम्ण । सुसुम्नेतिसु सुम्न । अग्निहुतऽइत्यग्नि हुतः । प्रजापतिभक्षितस्येतिप्रजापति भक्षितस्य । उपहूतऽइत्युप हूतः । उपहूतस्येत्युप हूतस्य । भक्षयामि ॥२२॥

॥ इति वाजसनेयसंहितापदे अष्टत्रिंशतिमो[1]ऽध्यायः ॥

---

मय्यि । इन्द्रियम् । मय्यि । मय्यि । विराजेतिवि राजा । [2]ज्योतिषा ॥२१॥

पय्यसः । सँवृगितिसम् वृक् । भक्ष्यामि ॥२२॥

इति श्रीवाजसनेयिसंहितायां शाकल्यकृते पदेन षष्टात्रिंशतिमो[1]ऽध्यायः

---

१. द्रष्टव्याऽत्र पूर्वत्र ५२७ पृष्ठस्था टि० १ ।

२. द्रष्टव्याऽत्र पूर्वत्र ५६३ पृष्ठस्था टिप्पणी ३ ।

# एकोनचत्वारिंशोऽध्यायः

स्वाहा । प्राणेभ्य॑÷ । साधिपतिकेभ्य्यऽइतिसाधिपतिकेभ्य्यः ॥ पृथिव्यै । अग्नये । अन्तरिक्षाय । वायवे ॥ दिवे । सूर्याय ॥१॥

दिग्भ्यऽइतिदिक् भ्यः । चन्द्राय । नक्षत्रेभ्यः । अद्भ्यऽइत्यत् भ्यः । वरुणाय ॥ नाभ्यै । पूताय ॥२॥

वाचे । प्राणाय ॥ चक्षुषे । श्रोत्राय ॥३॥

मनसः । कामम् । आकूतिमित्त्या कूतिम् । वाचः । सत्यम् । अशीय ॥ पशूनाम् । रूपम् । अन्नस्य । रस॑÷ । यश॑÷ । श्रीः । श्रयताम् । मयि । स्वाहा ॥४॥

---

प्राणेभ्य॑÷ । साधिपतिकेभ्य्यऽइतिसाधि पतिकेभ्यः । पृथिव्यै । अग्नये । अन्तरिक्षाय ॥१॥

दिग्भ्यऽइतिदिक् भ्यः । नक्षत्रेभ्यः । अद्भ्यऽइत्यत् भ्यः । नाभ्यै ॥२॥

चक्षुषे । श्रोत्राय ॥३॥

आकूतिमित्त्या कूतिम् । सत्यम् ॥४॥

---

अग्नये । अन्तरिक्षाय । वायवे । सूर्याय ॥१॥

चन्द्राय । वरुणाय । पूताय ॥२॥

प्राणाय । श्रोत्राय ॥३॥

अशीय । यश॑÷ । श्रयताम् । मयि ॥४॥

प्रजापतिरितिप्रजा पतिः । सम्भ्रियमाणऽइतिसम् भ्रियमाणः । सम्म्राडितिसम् राट् । सम्भृतऽइतिसम् भृतः । वैश्वदेवऽइतिवैश्व देवः । सऽसन्नऽइतिसम् सन्नः । घर्म्मः । प्रवृक्तऽइतिप्र वृक्तः । तेजः । उद्यतऽइत्युत् यतः । आश्विनः । पयसि । आनीयमानऽइत्या नीयमाने । पौष्णः । विष्यन्दमाने । विस्यन्दमानऽइतिवि स्यन्दमाने । मारुतः । क्लथन् ॥ मैत्रः । शरसि । सन्ताय्यमानऽइतिसम् ताय्यमाने । वायव्यः । ह्रियमाणः । आग्नेयः । हूयमानः । वाक् । हुतः ॥५॥

सविता । प्रथमे । अहन् । अग्निः । द्वितीये । वायुः । तृतीये । आदित्यः । चतुर्थे । चन्द्रमाः । पञ्चमे । ऋतुः । षष्ठे । मरुतः । सप्तमे । बृहस्पतिः । अष्टमे ॥ मित्रः । नवमे । वरुणः । दशमे । इन्द्रः । एकादशे । विश्वे । देवाः । द्वादशे ॥६॥

प्रजापतिरितिप्रजा पतिः । सम्राडितिसम् राट् । वैश्वदेवऽइतिवैश्व देवः । प्रवृक्तऽइतिप्र वृक्तः । उद्यतऽइत्युत् यतः । आश्विनः । आनीयमान-ऽइत्या नीयमाने । पौष्णः । विष्यन्दमाने । मैत्रः । वायव्यः । आग्नेयः ॥५॥

अग्निः । आदित्यः । षष्ठे । सप्तमे । बृहस्पतिः । अष्टमे । मित्रः । विश्वे ॥६॥

सम्भ्रियमाणऽइतिसम् भ्रियमाणः । [1]सम्म्राडितिसम् राट् । वैश्वदेव-ऽइतिवैश्व देवः । प्रवृक्तऽइतिप्र वृक्तः । उद्यतऽइत्युत् [2]य्यतः । पयसि । आनीयमानऽइत्या नीयमाने । विस्यन्दमानऽइतिवि स्यन्दमाने । सन्ताय्यमान-ऽइतिसम् ताय्यमाने । वायव्यः । ह्रियमाणः । आग्नेयः । हूयमानः ॥५॥

द्वितीये । वायुः । तृतीये ॥६॥

१. द्रष्टव्याऽत्र ३७ पृष्ठस्था टि० १ ।

२. ककोशशैल्यनुसारमिह 'यतः' इत्येवं पाठो युक्तो द्रष्टव्यः ।

उग्रश्च । च । भीमश्च । ध्वान्तऽइतिधु[1] आन्तः । धुनिः ॥ सासह्वान् । ससह्वानितिससह्वान् । अभियुग्वेत्यभि युग्वा । च । विक्षिपऽइतिवि क्षिपः । स्वाहा ॥७॥

अग्निम् । हृदयेन । अशनिम् । हृदयाग्रेणेतिहृदय अग्रेण । पशुपतिमितिपशु पतिम् । कृत्स्नहृदयेनेतिकृत्स्न हृदयेन । भवम् । यक्ना ॥ शर्वम् । मतस्नाभ्याम् । ईशानम् । मन्युना । महादेवमितिमहा देवम् । अन्तःपर्शव्येनेत्यन्तः [2]पर्शव्येन । उग्रम् । देवम् । वनिष्ठुना । वसिष्ठहनुरितिवसिष्ठ हनुः । शिङ्गीनि । कोश्याभ्याम् ॥८

---

उग्रः । सासह्वान् । ससह्वानितिससह्वान् । अभियुग्वेत्यभि युग्वा । विक्षिपऽइतिवि क्षिपः ॥७॥

अग्निम् । हृदयाग्रेणेतिहृदय अग्रेण । कृत्स्नहृदयेनेतिकृत्स्न हृदयेन । यक्ना । मतस्नाभ्याम् । मन्युना । अन्तःपर्शव्येनेत्यन्तः पर्शव्येन । उग्रम् । वनिष्ठुना । वसिष्ठहनुरितिवसिष्ठहनुः । कोश्याभ्याम् ॥८॥

---

अभियुग्वेत्यभि [3]युग्वा । विक्षिपऽइतिवि[4] क्षिपः ॥७॥

हृदग्रेन । हृदग्राग्रेणेतिहृदग्र अग्रेण । कृत्स्नहृदग्रेनेतिकृत्स्न हृदग्रेन । यक्ना । वसिष्ठहनुरितिवसिष्ठ हनुः ॥८॥

---

१. बम्बईमुद्रिते 'ध्व आन्तः' इत्येवं पठ्यते । उव्वटमहीधरस्वामि-दयानन्दा न पदपाठानुसारं पदमिमं व्याचख्युः । मन्त्रोऽयं काण्वसंहितायां (३९।१।१) मैत्रा० संहितायां (४।१।१७) चोपलभ्यते । उभयत्र 'ध्वान्तः' पदमाद्युदात्तमुपलभ्यते । तै० आरण्यके (४।२४, ५) अप्यस्य मन्त्रस्य कश्चित् पाठ उपलभ्यते, तत्र 'ध्वान्तः' पदमन्तोदात्तं पठ्यते । अन्धकारवाची ध्वान्त-पदं सर्वत्रैव प्रत्ययस्वरेणान्तोदात्त एव ।

२. 'पर्शव्येन' इति काशिकः पाठः ।

३. ककोशशैल्यनुसारमिह 'युग्वा' इत्येवं पाठेन भाव्यम् ।

४. ककोशशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

उग्रम् । लोहितेन । मित्रम् । सौव्रत्येन । रुद्रम् । दौर्व्रत्येनेतिदौः व्रत्येन । इन्द्रम् । प्रक्रीडेनेतिप्र क्रीडेन । मरुतः । बलेन । साध्यान् । प्रमुदेतिप्र मुदा ॥ भवस्य । कण्ठ्यम् । रुद्रस्य । अन्तःपार्श्व्यमित्यन्तः पार्श्व्यम् । महादेवस्येतिमहा देवस्य । यकृत् । शर्वस्य । वनिष्ठुः । पशुपतेरितिपशु पतेः । पुरीतत् । पुरितदितिपुरि तत् ॥९॥

लोमभ्यऽइतिलोम भ्यः । त्वचे । लोहिताय । मेदोभ्यऽइतिमेदः भ्यः ॥ माꣳसेभ्यः । स्नावभ्यऽइतिस्नाव भ्यः । अस्थभ्यऽइत्यस्थ भ्यः । मज्जभ्यऽइतिमज्ज भ्यः ॥ रेतसे । पायवे ॥१०॥

आयासायेत्या यासाय । प्रायासाय । प्रयासायेतिप्र यासाय । सँय्यासायेतिसम् यासाय । वियासायेतिवि यासाय ।

---

उग्रम् । मित्रम् । सौवत्येन । रुद्रम् । दौर्व्रत्येनेतिदौः व्रत्येन । प्रक्रीडेनेतिप्र क्रीडेन । साध्यान् । प्रमुदेतिप्र मुदा । रुद्रस्य । अन्तःपार्श्व्यमित्यन्तः पार्श्व्यम् । वनिष्ठुः ॥९॥

लोमभ्यऽइतिलोम भ्यः । मेदोभ्यऽइतिमेदः भ्यः । माꣳसेभ्यः । स्नावभ्यऽइतिस्नाव भ्यः । अस्थभ्यऽइत्यस्थ भ्यः । मजभ्यऽइतिमज भ्यः ॥१०॥

आयासायेत्या यासाय । प्रयासायेतिप्र यासाय । उद्यासायेत्युत्

---

दौर्व्रत्येनेतिदौः व्रत्येन । यकृत् ॥९॥

लोहिताय । पायवे ॥१०॥

आयासायेत्या [1]यासाय । प्रायासाय । प्रयासायेतिप्र [1]यासाय । सँय्यासायेतिसम् [1]यासाय । वियासायेतिवि [1]यासाय । उद्यासायेत्युत्

---

१. ककोशशैल्यनुसारमिह 'यासाय' इत्येवं शुद्धः पाठो ज्ञेयः ।

उद्ग्रासायेत्युत् ग्रासाय ॥ शुचे । शोचते । शोचमानाय । शोकाय ॥११॥

तपसे । तप्यते । तप्यमानाय । तप्ताय । घर्म्माय ॥ निष्कृत्यै । निःकृत्याऽइतिनिः कृत्यै । प्रायश्चित्त्यै । भेषजाय ॥१२॥

यमाय । अन्तकाय । मृत्यवे ॥ ब्रह्मणे । ब्रह्महत्यायाऽइतिब्रह्म हत्यायै । विश्वेभ्यः । देवेभ्यः । द्यावापृथिवीभ्याम् ॥१३॥

॥ इति वाजसनेयिसंहितापदे एकोनचत्वारिंशत्तमोऽध्यायः ॥

---

ग्रासाय ॥११॥

तप्यते । तप्यमानाय । तप्ताय । निष्कृत्यै । निःकृत्याऽइतिनिः कृत्यै । प्रायश्चित्यै ॥१२॥

मृत्यवे । ब्रह्मणे । ब्रह्महत्यायाऽइतिब्रह्म हत्यायै । विश्वेभ्यः । देवेभ्यः । द्यावापृथिवीभ्याम् ॥१३॥

॥ इति वाजसनेयसंहितापदे नवत्रिंशो[1]ऽध्यायः ॥

---

[2]ग्यासाय । शोचमानाय । शोकाय ॥११॥

तप्यमानाय । तप्ताय । घर्म्माय । प्रायश्चित्यै । भेषजाय ॥१२॥

यमाय । अन्तकाय । ब्रह्महत्यायाऽइतिब्रह्म हत्यायै ॥१३॥

इति श्रीवाजसनेयिसंहितायां शाकल्यकृते पदेन
[3]एकोन्नचत्वारिंशोऽध्यायः ॥



---

१. द्र० कपाठे 'नवविंशतिमोऽध्यायः' (पृष्ठ ५२७) ।

२. ककोशशैल्यनुसारमिह 'ग्रासाय' इत्येवं शुद्धः पाठो ज्ञेयः ।

३. अपपाठोऽयम् 'एकोन' इत्येवं शुद्धः पाठः स्यात् 'एकान्न' इत्येवं वा ।

# चत्वारिंशोऽध्यायः

ई॒शा । वा॒स्य॑म् । इ॒दम् । सर्व्व॑म् । यत् । किम् । च॒ । जग॑त्याम् । जग॑त् ॥ तेन॑ । त्य॒क्तेन॑ । भु॒ञ्जी॒था॒ः । मा । गृ॒ध॒ः । कस्य॑ । स्वि॒त् । धन॑म् ॥१॥

कु॒र्व॒न् । ए॒व । इ॒ह । कर्म्मा॑णि । जि॒जी॒वि॒षे॒त् । श॒तम् । समा॑ः ॥ ए॒वम् । त्वयि॑ । न । अ॒न्यथा॑ । इ॒तः । अ॒स्ति॒ । न । कर्म्म॑ । लि॒प्य॒ते॒ । नरे॑ ॥२॥

[1]अ॒सु॒र्य्या॑ः । नाम॑ । ते । लो॒काः । अ॒न्धेन॑ । तम॑सा । आवृ॑ता॒ऽइत्या वृ॑ताः ॥ तान् । ते॒ । प्रेत्येति॒प्र इ॒त्य । अपि॑ । ग॒च्छ॒न्ति॒ । ये । के । च॒ । आ॒त्म॒ह॒न॒ऽइत्या॑त्म ह॒नः॑ । जना॑ः ॥३॥

---

जग॑त्याम् । त्य॒क्तेन॑ ॥१॥

अ॒न्यथा॑ । अ॒स्ति॒ । लि॒प्य॒ते॒ ॥२॥

[1]अ॒सु॒र्य्या॑ः । आवृ॑ता॒ऽइत्या वृ॑ताः । प्रेत्येति॒प्र इ॒त्य । ग॒च्छ॒न्ति॒ । आ॒त्म॒ह॒न॒ऽइत्या॑त्म ह॒नः ॥३॥

---

य॒त् ॥१॥ त्वयि॑ ॥२॥

[1]अ॒सु॒र्य्या॑ः । आवृ॑ता॒ऽइत्या वृ॑ताः । ये ॥३॥

---

१. इह स्वरितात् परस्य विसर्गस्य 'यवा विश्वा' आदिपदवत् द्विधा संकेतो द्रष्टव्यः । सर्वत्र कपाठः स्थूलाक्षरमुद्रितेन पाठेन सहान्वेति, बम्बई-मुद्रितं च विपर्य्येति । इह त्वनयोर्वैपरीत्यमुपलक्ष्यते ।

अनेजत् । एकम् । मनसः । जवीयः । न । एनत् । देवाः । आप्नुवन् । पूर्वम् । अर्शत् ॥ तत् । धावतः । अन्यान् । अति । एति । तिष्ठत् । तस्मिन् । अपः । मातरिश्वा । दधाति ॥४॥

तत् । एजति । न । एजति । दूरे । ऊँऽइत्यूँ । अन्तिके ॥ अन्तः । अस्य । सर्वस्य । ऊँऽइत्यूँ । सर्वस्य । अस्य । बाह्यतः ॥५॥

यः । तु । सर्वाणि । भूतानि । आत्मन् । एव । अनुपश्यतीत्यनु पश्यति ॥ सर्वभूतेष्विति सर्व भूतेषु । च । आत्मानम् । ततः । न । वि । चिकित्सति ॥६॥

यस्मिन् । सर्वाणि । भूतानि । आत्मा । एव । अभूत् । विजानत इतिवि 'जानतः ॥ तत्र । कः । मोहः । कः । शोकः । एकत्वमित्येक त्वम् । अनुपश्यत इत्यनु पश्यतः ७

आप्नुवन् । अन्यान् । तिष्ठत् । तस्मिन् । मातरिश्वा ॥४॥
ऊँऽइत्यूँ । ऊँऽइत्यूँ ॥५॥
आत्मन् । अनुपश्यतीत्यनु पश्यति । सर्वभूतेष्विति सर्व भूतेषु । आत्मानम् । चिकित्सति ॥६॥
यस्मिन् । आत्मा । तत्र । एकत्वमित्येक त्वम् । अनुपश्यत इत्य[2] पश्यतः ॥७॥

---

जवीयः । [2]तिष्ठतः ॥४॥
बाह्यतः ॥५॥ यः ॥६॥
यस्मिन् । विजानत इतिवि[3] जानतः ॥७॥

---

१. 'जानतः' इति काशिकः पाठः ।

२. अपपाठः पाठान्तरं वेति विचारार्हम् ।

३. ककोशशैल्यनुसारमिह 'वि' इत्येवं शुद्धेन पाठेन भाव्यम् ।

सः । परि । अगात् । शुक्रम् । अकायम् । अव्रणम् । अस्नाविरम् । शुद्धम् । अपापविद्धमित्यपाप विद्धम् ॥ कविः । मनीषी । परिभूरितिपरि भूः । स्वयम्भूरितिस्वयम् भूः । याथातथ्यतऽइतियाथा [1]तत्थ्यतः । अर्थान् । वि । अदधात् । शाश्वतीभ्यः । समाभ्यः ॥८॥

अन्धम् । तमः । प्र । विशन्ति । ये । असम्भूतिमित्यसम् भूतिम् । उपासतऽइत्युप आसते ॥ ततः । भूयऽइवेतिभूयः इव । ते । तमः । ये । ऊँऽइत्यूँ । सम्भूत्यामितिसम् भूत्याम् । रताः ॥९॥

अन्यत् । एव । आहुः । सम्भवादितिसम् भवात् । अन्यत् । आहुः । असम्भवादित्यसम् भवात् ॥ इति ।

---

शुक्रम् । अव्रणम् । अस्नाविरम् । शुद्धम् । अपापविद्धमित्यपाप विद्धम् । याथातथ्यतऽइतियाथा तथ्यतः । शाश्वतीभ्यः । समाभ्यः ॥८॥

असम्भूतिमित्यसम् भूतिम् । उपासतऽइत्युप आसते । ऊँऽइत्यूँ । सम्भूत्यामितिसम् भूत्याम् ॥९॥

अन्यत् । अन्यत् । असम्भवादित्यसम् भवात् । शुश्रुम । विचचक्षिर-

---

अकायम् । [2]अव्रणम् । अपापविद्धमित्यपाप विद्धम् । स्वयम्भूरितिस्वयम् भूः । य्याथातथ्यतऽइतिय्याथा[3] तथ्यतः ॥८॥

स्ये । भूयऽइवेतिभूयः इव । स्ये ॥९॥

---

१. 'तत्थ्यतः' इति काशिकः पाठः ।

२. अपपाठोऽयम्, 'अव्रणम्' इत्येवं वकारवता पाठेन भाव्यम् ।

३. ककोशशैल्यनुसारमिह 'य्याथा' इत्येवं पाठेन भाव्यम् ।

शुश्रुम । धीराणाम् । ये । नः । तत् । विचचक्षिरऽइतिवि [1]चचक्षिरे ॥१०॥

सम्भूतिमितिसम् भूतिम् । च । विनाशमितिवि नाशम् । च । यः । तत् । वेद । उभयम् । सह ॥ विनाशेनेतिवि नाशेन । मृत्युम् । तीर्त्वा । सम्भूत्येतिसम् भूत्या । अमृतम् । अश्नुते ॥११॥

अविद्याम् । विद्यायाम् ॥ विद्यायाम् । अविद्यायाम् ॥ विद्याम् । अविद्याम् ॥ अविद्यया । विद्यया ॥१२॥

वायुः । अनिलम् । अमृतम् । अथ । इदम् । भस्मान्तमितिभस्म अन्तम् । शरीरम् ॥ ओम् । क्रतोऽइतिक्रतो । स्मर । क्लिबे । कृतम् ॥१३॥

ऽइतिवि चचक्षिरे ॥१०॥

मृत्युम् । सम्भूत्येतिसम् भूत्या । अश्नुते ॥११॥

अविद्याम् । विद्यायाम् । विद्यायाम् । अविद्यायाम् । विद्याम् । अविद्याम् । अविद्यया । विद्यया ॥१२॥

भस्मान्तमितिभस्म अन्तम् । क्रतोऽइतिक्रतो ॥१३॥

य्ये । विचचक्षिरऽइतिवि[2] चचक्षिरे ॥१०॥

विनाशमितिवि नाशम् । य्यः । उभय्यम् । विनाशेतिवि नाशेन ॥११॥

विद्याय्याम् । विद्याय्याम् । अविद्याय्याम् । अविद्यय्या । विद्यय्या ॥१२॥

[3]वायुः ॥१३॥

१. 'चचक्षिरे' इति काशिकः पाठः ।

२. ककोगशैल्यनुसारमिह 'वि' इत्येवं पाठेन भाव्यम् ।

३. इतः पूर्वासां तिसृणां मन्त्र कण्डिकानां केषाञ्चिदेवापुनरुक्तानां पदानां पदपाठस्य द्वादशकण्डिकायामेव पाठात् इह द्वयोः कण्डिकासंख्ययोर्भेदो द्रष्टव्यः ।

हिरण्मयेन । पात्रेण । सत्यस्य । अपिहितमित्यपिहितम् । मुखम् ॥ सः । असौ । आदित्ये । पुरुषः । सः । असौ । अहम् ॥१४॥

ओ३म् । खम् । ब्रह्म[1] ॥

॥ इति वाजसनेयिसंहितापदे चत्वारिंशत्तमोऽध्यायः ॥

---

हिरण्मयेन । पात्रेण । सत्यस्य । अपिहितमित्यपि हितम् । आदित्ये ॥१४

ॐ । खम् । ब्रह्म ॥

॥ इति वाजसनेयसंहितापदे चत्वारिंशतिमो[2]ऽध्यायः ॥

---

[3]हिरण्मयेन । इय? ॥१४॥

ओं । खम्ब्रह्म[4] ॥

[5]इतिश्री वाजसनेयि संहितायां शाकल्यकृते पदेन चत्वारिंशोऽध्यायः ॥४०॥

---

१. मन्त्र-संहितायां पदानीमानि सप्तदशकण्डिकायामेव पठ्यन्ते, पदपाठे तु ततो बहिः । कारणमत्र मृग्यम् ।

२. द्रष्टव्या ५२७ पृष्ठस्था टिप्पणी १ ।

३. इतः पूर्वस्याः मन्त्रकण्डिकायाः पूर्वं गतत्वान्नेह तत्पदानि पठ्यन्ते । अत इह तिसृणां कण्डिकासंख्यानां भेदो द्रष्टव्यः ।

४. पदापार्थक्यम् अपस्वरसंकेतश्चात्र दृश्यते । 'खम् । ब्रह्म' इत्येवं शुद्धेन पाठेन भाव्यम् ।

५. इहैवास्यां पङ्क्तावपि स्वराङ्कनं दृश्यते । इदं च स्वराङ्कनं प्रायेणाशुद्धमेव ।

# प्रथमं परिशिष्टम्

## पाठ-भेद-निदर्शनम्

माध्यन्दिनसंहितायाः पदपाठे क्वचिद् विशिष्टाः पाठा उपलभ्यन्ते। तेषां विषये (एकं विहाय) यथास्थानं टिप्पण्यां विचारः कृतः[1]। तादृशां विशिष्टानां पाठानां झटिति परिज्ञानायेह क्रमशो निर्देश क्रियते—

| पृष्ठम् | मन्त्रः | मुख्यपाठः[2] | विशिष्टः पाठः | स्थान-संकेतः |
|---|---|---|---|---|
| १० | ३० | वेष्प? | वेष्य?[3] | क |
| १३ | २ | ऊर्णँम्रदसमित्यूर्णँ म्रदसम् | ऊर्णँम्रदसमित्यूर्णँम् म्रदसम् | क |
| २२ | २५ | प्रतिष्ठायाँ | प्रतिष्ठायै | दया०, उ० |
| २३ | २५ | प्रतिस्थायाऽइतिप्रति स्थायाँ | प्रतिस्थायाऽइतिप्रति स्थायै | ,, ,, |
| २५ | ३० | अवृषायिषत | वृषायिषत | क |
| ४७ | ७ | द्यावापृथिवीऽइति-द्यावापृथिवी | द्यावापृथिवीऽइति-द्यावापृथिवी | क |
| ४८ | १० | आङ्गिरसी | आङ्गिरसि | दया० |
| ६१ | ६ | योऽइतियो | या। उ (द्वे पदे) | मही० |

---

१. काशिकपाठे यस्मिन् यस्मिन् पदेऽवग्रहादुत्तरभागे नियतः स्वर-विशेषः स सर्वोऽपि यथास्थानमधस्तात् टिप्पण्यां निर्दिष्ट इति ते पुनर्नेह लिख्यन्ते। काशिकपाठभेदस्तत एव द्रष्टव्यः।

२. विविधपाठतुलनासौकर्याय मुख्यपाठस्याप्यत्र प्रायेण व्यञ्जनद्विर्व-चनरहित एव पाठो निर्देक्ष्यते।

३. अस्माकं मते ककोशेऽपि च 'वेष्य?' इत्येव पाठः, तत्र पकारयकार-योर्बहुत्र समानरूपेणोल्लेखात्।

| पृष्ठम् | मन्त्रः | मुख्यपाठः | विशिष्टः पाठः | स्थान-संकेतः |
| --- | --- | --- | --- | --- |
| ६७ | २३ | वलगहनमितिवलग हनम् | बलगहनमितिबलग हनम्[1] | दया० |
| ६७ | २३ | वलगम | बलगम्[2] | दया० |
| ६८ | २५ | वलगहनऽइतिवलग हनः | बलगहनऽइतिबलग हनः[3] | ,, |
| ६८ | २५ | वलगहनावितिवलग हनौ | बलगहनावितिबलग हनौ[3] | ,, |
| ८९ | ३ | उपरिप्रुतेत्युपरि प्रुता | उपरिप्लुतेत्युपरि प्लुता | ग० ट० |
| ११२ | १९ | पन्थाम् | पथाम् | क० ज० |
| १३४ | १८ | पितरा । मातरा | पितरामातरा | नागेशः[4] |
| १४१ | ३६ | दुस्तरऽइतिदुस्तरः | दुस्तरऽइतिदुः तरः | दया० |
| १४४ | ४ | सहौजसऽइतिसह ओजसः | सहौजसऽइतिसह ओजसः | ,, |
| १५० | १९ | आपाम | अपाम | टि० द्र० |
| १५५ | ३ | सुक्त्वाय | युक्त्वाय | क० टि० द्र० |
| १७६ | ६८ | दारूणि | दारुणि | दया० |
| १७८ | ७५ | मस्मसा | भस्मसा | ,, |
| १८१ | ४ | वामदेव्यमितिवाम देव्यम् | वामदेव्युमितिवाम देव्यम् | क० |
| १९४ | ४३ | प्रवणेभिरितिप्र वणेभिः | प्रवणेभिरितिप्रवणेभिः | क०[5] |
| २३७ | ८ | त्रिवलमितित्रि वलम् | त्रिवलमितित्रि बलम् | क० दया० |

१. अयं पदपाठे पाठः, भाष्ये तु गाहतेरुत्तरपदं निरुक्तम् ।

२. भाष्ये गच्छतेरुत्तरपदं निरुक्तम् ।

३. प्रथमपृष्ठस्था टिप्पणी ३ द्रष्टव्या ।

४. महाभाष्यप्रदीपोद्योते ६।३।३३ ।।

५. ऋगथर्वपदपाठयोरपि नावगृह्यते ।

| पृष्ठम् | मन्त्रः | मुख्यपाठः | विशिष्टः पाठः | स्थान-संकेतः |
|---|---|---|---|---|
| २७८ | ३८ | वीध्र्यायेतिवि ईध्र्याय | वीध्र्यायेतिवि ईध्र्याय | ट० |
| २८८ | ३ | घृतश्चुतऽइतिघृत श्चुतं ÷ | घृतश्च्युतऽइतिघृत श्च्युतं ÷ [1] | क० दया० |
| २८८ | ३ | मधुश्चुतऽइतिमधु श्चुतं ÷ | मधुश्च्युतऽइतिमधु श्च्युतं ÷ [1] | ,, ,, |
| ३१४ | ७८ | स्वतंवानितिस्व तंवान् | स्वतंवानितिस्वतं वान् | क० |
| ३५४ | ४७ | ये | य? | क० |
| ३५५ | ५० | प्र । चिकितः | प्रचिकितः | उ० मही० दया० |
| ३६६ | ८२ | सब्वम् | सब्वम् [2] | |
| ३९२ | ७० | चम्वीवेतिचम्वी इव | चम्वीवेतिचम्वि [3] इव ज० ,, | ,, |
| ३९३ | ७२ | वर्ति? | वर्ती? | क० |
| ४०३ | ३० | ऊर्णम्म्रदाऽइत्यूर्णं म्रदाः | ऊर्णम्म्रदाऽइत्यूर्णम् म्रदाः [4] | क० |
| ४०६ | ३९ | मधुश्चुतऽइतिमधु श्चुतं ÷ | मधुश्च्युतऽइतिमधु श्च्युतं ÷ [5] | क० |
| ४१९ | १६ | सादयात् | सादयत् | क० |
| ४५६ | १ | बस्वैं ÷ । तेगाम् | बस्वैं ÷ । तेगान् | ट० |
| | | बस्वैं ÷ । तेगान् (ट) | बस्वैंः । स्तेगान् | तैत्ति० |
| | | तेगाम् | ते । गाम् | दया० |
| ४५८ | २ | निवेष्पमितिनि वेष्पम् | निवेष्यमितिनि वेस्यम् [6] | मुद्रितेषु |
| ४६५ | १९ | यजत्राः | यजत्राः | ज |

१. बम्बईमुद्रिते उव्वटमहीधरभाष्ययुतेऽप्ययमेव पाठः।

२. बम्बईमुद्रित उव्वटमहीधरभाष्ययुतेऽपि 'सब्वं' सर्वानुदात्तमुपलभ्यते

३. ऋक्पदपाठे १०।६१।१५ ॥

४. द्र० पृ० १३, मं० ४ पाठान्तरम्।

५. द्र० पृ० २२८, मं० ३ पाठान्तरम्।

६. पाठभेदविचार एतत्परिशिष्टान्ते द्रष्टव्यः।

| पृष्ठम् | मन्त्रः | मुख्यपाठः | विशिष्टः पाठः | स्थान-संकेतः |
| --- | --- | --- | --- | --- |
| ४८२ | २ | च । रिषत् | चरिषत् | क० |
| ५०० | १९ | त्रिवन्धुरऽइतित्रि वन्धुर? | त्रिवन्धुरऽइतित्रि वन्धुरः | क०, अन्यत्रापि |
| ५१५ | ३१ | सुस्वयन्ती-ऽइतिसुस्वयन्ती | सुस्वयन्तीऽइति सु स्वयन्ती | क० दया० अन्यत्रापि |
| ५१९ | ४२ | चिश्चा | चिश्च्या[1] | क० |
| ५२९ | ३ | पुँश्चलूम् | पुँश्चलम् | क० दया० |
| ५७८ | ८३ | पदा । नि | पदानि | क० अ० उ० |
| ५८३ | ११ | सोऽइतिसो | सा । ऊँऽइत्यूँ[2] | म० दया० |
| ५९४ | ४८ | दैव्यां᳐ | दैव्यां᳐ | ट० |
| ५९६ | ५२ | घृतस्नूरितिघृत स्नूं᳐ | घृतस्नूरितिघृत स्नू?[3] | म० |
| ६२१ | ७ | ध्वान्तऽइतिधु आन्तं᳐ | ध्वान्तऽइतिधू आन्तं᳐ | ट० |
| ६२३ | ३ | असुर्यां᳐ | असुर्या᳐ | ट० |

## वेष्पः—निवेष्पम्—निवेष्पाय—पदानां साधुत्वासाधुत्वविवेचनम्

मा० सं० १।३० मन्त्रे वेष्पः स्थाने वेष्यः पदम्; मा० सं० २५।२ मन्त्रे निवेष्पम् स्थाने निवेष्यम् पदम्; मा० सं० १६।४४ मन्त्रे च निवेष्प्याय स्थाने निवेष्ट्याय पदं क्वचिन्मुद्रितेषु ग्रन्थेषूपलभ्यते (काण्वपाठेऽपि क्रमशः १।१०।२; २७।२।१; १७।७।३ मन्त्रेष्वित्थमेव मुद्रणं क्वचिद् दृश्यते)। अत्र सर्वत्रापि पकारस्थाने यकारवर्णापत्तिरुपलभ्यते। तत्र मा० सं० १।३० मन्त्रे निस्सन्दिग्धो वेष्पः पकारवान् पाठ इत्यस्माकीनैराचार्यैः पदवाक्यप्रमाणज्ञैः पण्डितब्रह्मदत्तजिज्ञासुभिः स्वकीये यजुर्वेदभाष्यविवरणे १८७ संख्याकान् संहिताया हस्तलेखान्, ४१ मितान् पदपाठस्य हस्तलेखान् दृष्ट्वा ४१ संख्यामितानां वेदपाठिनां प्रत्यक्षं पाठमनुनिशम्य स्थिरीकृतः (द्र० भाग १ पृष्ठ

१. द्र० २८८ पृष्ठस्था टि० १।

२. द्र० ६१ पृष्ठस्था टि० १।

३. 'घृतस्नू' शब्द ऋग्वेदे (१।१६।२; ३।६।६) अप्यन्तोदात्त एवोपलभ्यते। द्रष्टव्यात्र ५९६ पृष्ठस्था टिप्पणी।

१३४—१४७ द्वि० सं०)। अत्र वेष्यः पाठस्य या भ्रान्तिः सा वैबरसम्पादित-संहिता-ब्राह्मण-श्रौतसूत्रेषु वेष्यः इति पाठमुद्रणमूलेत्यपि तत्रैव व्यक्तीकृतम्।

इत्थमेव मा० सं० १६।४४ मन्त्रे निवेष्प्याय इत्येवं पकारवान् पाठः संहिताग्रन्थेषु उवटमहीधरयोश्च भाष्ययोरुपलभ्यते (दयानन्दसरस्वतीकृते भाष्ये निवेष्याय पाठो मुद्रणप्रमादजः)। पण्डितविश्वबन्धुशास्त्रिणा स्वकीये वैदिकपदानुक्रमकोशे (पृष्ठ १८३२) अस्य पदस्य **निवेष्याय** इत्येवं पाठः स्वीकृतः, काण्वसंहितायां (१७।७।३) तैत्तिरीयसंहितायां चाप्ययमेव पाठ उररीकृतः, परन्तु काण्वतैत्तिरीयसंहितयोरपि निवेष्प्याय इत्येवासंदिग्धः पाठ उपलभ्यते। मा० सं० २५।२ मन्त्रेऽपि निवेष्पम् इत्येव वैदिकानां पाठः (का० सं० २७।२।१ मन्त्रेऽपि निवेष्पम् इत्येव पाठः)। यत्तु मुम्बईमुद्रित उवटमहीधरभाष्ये मन्त्रे व्याख्याने च **निवेष्यम्** इत्येवं पाठ उपलभ्यते, स वैबरसम्पादितग्रन्थानुकरणमूलकः (अत्रापि स्वा० द० भाष्ये निवेष्यम् पाठो मुद्रणप्रमादज एव)। पण्डितविश्वबन्धुशास्त्रिणाऽपि मा० सं० २५।२; का० सं० २७।२।१ मन्त्रे यत् 'निवेष्यम्' पदं स्वीकृतं, तदपि वैबरसम्पादितग्रन्थानुकरणमूलकमेव। यत्तु मुम्बईमुद्रिते सभाष्ये शतपथे (१।३।१।१७) **विष्णोर्वेष्योऽसि** मुद्रितः पाठो दृश्यते, सोऽपि वैबरसम्पादितशतपथानुकरणमूलक एव (अत्र भाग १, पृष्ठ ६५ टिप्पण्यवलोकनीया, अत्र वैदिकानां **वेष्पः** इति पकारवान् एव पाठो निर्दिष्टः)। एवमेव मुम्बईमुद्रिते शतपथे ५।३।४।११ कण्डिकायां **अथ निवेष्यं गृह्णाति** इति पाठो दृश्यते, सोऽपि वैबरसम्पादितशतपथानुकरणरूप एव। अत्र हि **निवेष्य**-पदेन 'आवर्तोदकम्' गृह्यत इति तदीयेन सायणभाष्येण कात्यायनश्रौतसूत्रव्याख्यानेन च प्रतीयते। मा० सं० १६।४४ मन्त्रपठितस्य निवेष्प्याय पदस्य व्याख्याने पकारवत् निवेष्पपदमावर्तकस्य भ्रमस्य (भंवर) वाचकमिति स्पष्टमाहतुरुवटमहीधरौ। तेनात्रापि शतपथे **निवेष्प्यं** इत्येव शुद्धः पाठो ज्ञेयः। यत्तु विद्याधरमिश्रः स्वीये कात्यायनश्रौतव्याख्याने **विष्णोर्वेष्पः** (२।७।२) इति निर्देशे वैबरमुद्रितमपपाठं परिमृज्य शुद्धं पाठं निर्दिशन्नपि उत्तरत्र (का० श्रौ० १५।४।३२ सूत्रे) **निवेष्याः** इत्येवं पठितवान्। तच्चिन्त्यम्। काश्यां चौखम्बामुद्रिते कर्कभाष्ये (का० श्रौ० १५।४।३० सूत्रे) **निवेष्येन** इत्येवं पठ्यते, स प्रत्यक्षं वैबरमुद्रितग्रन्थानुकरणमूलकोऽपपाठः, नह्यत्र तृतीयान्तपदस्य कश्चिदर्थः सम्भवति। प्रकरणानुसारं **निवेष्प्याः** **निवेष्प्याः** इत्येवं वा द्वितीयान्तं पदमेव साधु। अपि च 'निवेष्येन' पाठे णत्वमपि प्राप्नोति, तस्य वारणमपि दुःशकमेव। यत्तु मैत्रायणीयानामाम्नाये (३।१५।२) **निवेष्येण** इति श्रूयते, सोऽपि स्वरानुरोधादपपाठ एव प्रतीयते।

**अथ स्वर-मीमांसा**—'वेष्प' इति पकारवान् शब्दः प्रत्ययस्वरेण, 'निवेष्प' इति च कृदुत्तरपदप्रकृतिस्वरे प्रत्ययस्वरेणान्तोदात्तः सम्पद्यते। **वेष्य** इत्येवं यकारवति पाठे यत्-प्रत्यये **यतोऽनावः**(अ० ६।१।२१३)इति नियमेन 'वेष्य' शब्द आद्युदात्तः स्यात्, यद्वा **तित्स्वरितम्** (अ० ६।१।१८५) इत्युत्सर्ग-नियमेन अन्तस्वरितः स्यात् ('मेध्य' शब्दे संहिताभेदेन उभौ स्वरौ दृश्येते), निवेष्यशब्देऽपि कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वमन्तस्वरित्वं वा स्यात्, अन्तोदात्तौ तु **वेष्यनिवेष्य** शब्दौ न कथंचिदपि संभवतः। यत्तु शौनकसंहितायां (६।१२।४=६।७।४ अजमेर सं०) निवेष्यः इतिपदस्यान्तोदात्तस्वरः पण्डित-विश्वबन्धुशास्त्रिणा पदानुक्रमकोशे (पृ० १८३२) प्रदर्शितः, सोऽपि राथ-ह्विटनीसंस्करणमूलक एव। वस्तुतस्त्वथर्वकोशेषु निवेष्यः इत्येवमन्तस्वरित-त्वस्य बाहुल्येनोपलम्भाद् अन्तस्वरितपाठ एव तत्र युक्तः। अत एवास्माभिः अजमेरमुद्रिताया अथर्वसंहितायाः षष्ठावृत्तौ निवेष्यः इत्येव पाठो विहितः।

**माध्यन्दिनपाठस्य निश्चयेऽन्तःसाक्ष्यम्**—माध्यन्दिनसंहितायाः पद-पाठस्य यस्मिन् पाठे संयुक्तानां वर्णानां द्वित्वं भवति, तस्मिन् पाठे षकारपकार-योगे षकारात्परः पकारो द्विर्लिख्यते, षकारयकारयोगे च यकारात् पूर्वः षकारो द्विर्लिख्यते। सत्येवं ष्प-ष्ययोर्द्विर्वचनप्रक्रियाभेदे पकारयकारभ्रान्तिस्तूदेत्येव न। एवं च द्विर्वचनयुक्तेषु कोशेषु सर्वत्र पकारस्यैव द्विर्लेखदर्शनात् त्रिष्वपि स्थलेष्वसन्दिग्धः पकारवानेव पाठः।

एतेन काण्वमाध्यन्दिनसंहितयोः तद्ब्राह्मणे श्रौतसूत्रे च **वेष्पः निवेष्पं निवेष्याय** इत्येव वैदिकानामविगीताः पाठा इत्युपपादितम् (अस्माभि-रुपलब्धेष्वपि हस्तलेखेषु प्रायेण पकारवानेव पाठः, यत्तु क्वचित् यकारवान् पाठो दृश्यते स पकार-यकारयोर्लिपिसादृश्यमूलक एव)। ये तु खलु बैबरमुद्रा-पितान् ग्रन्थान् चक्षुर्निमील्यानुसरन्ति त एवात्र अवैदिकान् भ्रष्टान् पाठान् पठन्त्युदाहरन्ति च।

एतेन ये भारतीया विपश्चितः पाश्चात्यविद्वद्भिः सम्पादितान् ग्रन्थान् सर्वथा दोषविरहितान् मत्वा तेषां परं प्रामाण्यमाश्रयन्ति ते पदे पदे स्खलन्ति। ऋग्वेदस्य मैक्समूलरसम्पादितसंस्करणमाश्रित्य तन्मन्त्रगणनाय प्रवृत्ताः सर्वेऽपि विद्वांसो भ्रान्ताः, इत्यस्माभिर् **ऋग्वेदस्य मन्त्रसंख्या** नाम्नि निबन्धे बहोः कालात् पूर्वं व्यक्तीकृतम्।

वस्तुतस्तु वैदिकपाठविचारे संप्रदायविदो वैदिका एव प्रमाणम्, इत्यल-मतिपल्लवितेन।

# द्वितीयं परिशिष्टम्

## यमानां स्वरूपम्, संख्याः, लेखन-प्रकारश्च

वैदिकेषु पलक्क्नी चक्ख्नतुः जाग्ग्मः, जग्घ्नुः इत्यादिषु अनुनासिके पञ्चमे वर्णे परतः सवर्गीयादुत्तरस्य मध्यस्थस्य नासिक्यत्वेनोच्चारितस्य वर्णस्य यमत्वं प्रसिद्धम्। तथा चोक्तं कौशिकशिक्षायाम्—

पलक्क्नी चक्ख्नतुर्जग्ग्मर्जग्घ्नुरित्यत्र यद् वपुः।
नासिक्येनोक्तं कादीनां त इमे यमाः।
तेषामुकारः संस्थानवर्गीयत्वलक्षकः॥[1] इति।

औदव्रजिराचार्योऽप्याह—अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वगुणः इति (ऋक्तन्त्रव्याकरण प्रपा० १)।

नारदीयशिक्षायां (२।२।८) यमलक्षणम्—

अनन्त्यश्च भवेत् पूर्वोऽन्त्यश्च परतो यदि।
तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः॥ इति।

एवमेवान्यासु शिक्षासु यमस्वरूपत्वमुपलभ्यते। ऋक्प्रातिशाख्ये (६।२९)ऽप्युक्तम्—

स्पर्शा यमाननुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु॥ इति।

व्याख्यातं चोवटेन—अननुनासिकाः स्पर्शाः स्वान् यमानापद्यन्तेऽनुनासिकेषु स्पर्शेषु परेषु इति।

तैत्तिरीयप्रातिशाख्ये (२१।१२)ऽपि—स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान् नासिक्याः॥ इति।

---

१. उद्धृतं वर्णोच्चारणशिक्षायाम् अजमेरमुद्रितायां सप्तमप्रकरणे। तत्र 'चक्ख्नतुः जग्घ्नुः' इत्यपपाठौ। एवमेव 'त इमेऽयमाः' इत्येवम् 'अयमाः' छेदोऽपि वैदिकमतविरुद्धो ज्ञेयः।

शुक्लयजु प्रातिशाख्येऽपि—कुँ खुँ गुँ घुँ इति यमाः (८।२४) इत्येवं यमा निर्दिष्टाः।

यमसंज्ञका वर्णा अनुनासिका इत्यापिशलिः पाणिनिश्चापि स्वकीय-लोकवेदसाधारण्योः शिक्षयोः प्रतिजानते। तथाहि—अनुस्वारयमा नासिक्याः[1]॥ इति।

तत्र कति यमा इत्यत्र विवदन्ते व्याख्यातारः। चत्वारो यमा इत्येके संगिरन्ते, विंशतिर्यमा इत्यपरे। तथाहि—चत्वारो यमाः कुँ खुँ गुँ घुँ इति याज्ञवल्क्यशिक्षायाम् (२१२, काशीमुद्रिते शिक्षासंग्रहे) उच्यते।

उवटस्तु शुक्लयजु प्रातिशाख्यस्य कुँ खुँ गुँ घुँ इति यमाः सूत्रस्य व्याख्याने सूत्रोक्तान् कुँ खुँ गुँ घुँ इत्येतानुपलक्षणं मन्यमानः यमसंज्ञका वर्णा विंशतिसंख्याका भवन्ति इत्येवं विंशतिसंख्याकान् यमान् आह।

याज्ञवल्क्यशिक्षायां चतुष्ट्वमुल्लिख्यापि यथोत्तरश्लोके तन्निदर्शनान्युक्तानि तथा विंशतिरेव यमास्तन्मतेऽपीति ज्ञायते। तथाहि तन्निदर्शकः श्लोकः—

रुक्क्मेति प्रथमो ज्ञेयः सक्त्थ्ना इत्यपरो भवेत्।
विद्द्मा ते तु तृतीयश्च जम्भे दद्ध्मश्चतुर्थकः॥[2] इति।

अस्मिन् श्लोके स्पष्टमेव सक्त्थ्ना पदे चतुर्थवर्गस्य द्वितीयो वर्णस्थकारः, विद्द्मा पदे चतुर्थवर्गस्य तृतीयो वर्णः, दद्ध्मः पदे तस्यैव वर्गस्य चतुर्थो वर्णो यमत्वेनोदाहृतः। एतेन ज्ञायते यत् पूर्वत्रोक्ते चत्वारो यमाः पाठे चतुष्ट्वसंख्या प्रथमवर्गस्थानामेव चतुर्णां वर्णानां द्योतिका नास्ति, अपितु प्रतिवर्गं प्रथमद्वितीयतृतीयचतुर्थवर्णानां सस्थानत्वेन पिण्डीकृत्योक्ताः। तेन वर्गभेदन विंशतिः सन्तोऽपि यमाः सस्थानत्वेन पिण्डीकृत्य चतुर्धा एव।

अत एव याज्ञवल्क्यशिक्षाया व्याख्यात्राऽमरनाथशास्त्रिणाऽप्युक्तम्—चत्वार इति। उकारः सादृश्यार्थः इति।

---

१. आपिशलशिक्षा १।१४॥ पाणिनीयशिक्षा १।१६॥ द्र० अस्मत्सम्पादितानि शिक्षासूत्राणि (द्वि० संस्क०)।

२. मुद्रितपाठे पूर्वयोरुदाहरणयोर्मुद्रणे द्वित्वाभावरूपा या अशुद्धिः तां परिमृज्यात्र पाठो निर्दिष्टः।

अयमेवार्थः पूर्वोद्धृतकौशिकशिक्षासूत्रेषु तेषामुकारः सस्थानवर्गीय-लक्षकः इत्येवं स्पष्टमुक्तः ।

एतेन चत्वार एव यमा इति मतं प्रत्युक्तं वेदितव्यम् ।

अथेदानीं विचार्यते द्वितीयतृतीयचतुर्थपञ्चमवर्गस्थानां यमानां निर्देशः लिप्यां कथं कर्तव्य इति । कुतः संदेह इति चेत् ? माध्यन्दिनसंहिताया आधुनिकेषु मुद्रितग्रन्थेषु क्वचिल्लिखितग्रन्थेषु च 'पत्नी' इत्येवमादिषु केषुचित् पदेषु 'पत्क्नी' इत्येवं पाठदर्शनात् । आश्चर्यकरं त्वेतद् यत्तेष्वेव ग्रन्थेषु आत्मा विद्द्मः दद्ध्मः गृभ्णामि इत्यादिषु न प्रथमवर्गीयाः क ग घ वर्णा निर्दिश्यन्ते । एतेन ज्ञायते पत्न्यावहोरात्रे (३१।२२) मन्त्रे पत्क्नावहोरात्रे लेखनमाहोपुरुषिकामात्रम् । अमरनाथशास्त्रिणा याज्ञवल्क्यशिक्षाव्याख्यायाष्टिप्पण्यां (पृष्ठ १५५ टि० ३) 'ननु तकारस्य द्विर्भावे द्वितीयतकारस्यैव (शु० य० प्रा० १।१६१) यमत्वे ककारलेखनमसंगतमिति चेत् इत्येवमाशङ्क्य न, नासामूलेन करणेन यमोच्चारणे प्रवृत्तो यत्नः जिह्वामूलीयसदृशीं श्रुतिमुत्पादयेत् इति तथैव संभवाभिप्रायेण लिखनात् इत्येवं ककारलेखनस्य समुत्पत्तिर्दर्शिता, सा गतानुगतिको लोको न लोकः पारमार्थिकः इत्याभणकमनुसरति । अपि च वर्गीयप्रथमस्य यमस्य जिह्वामूलीयसदृशी ध्वनिरभिप्रेता, तर्हि वर्गीयतृतीयचतुर्थयोर्यमयोः कीदृशी ध्वनिरुत्पादनीयेति न तेन महानुभावेन स्पष्टीकृतम् । एतेन 'पत्क्नी' इत्येवं ककारलेखनं तादृशोच्चारणं च शास्त्रविरुद्धमिति स्पष्टम् ।

# तृतीयं परिशिष्टम्

## ꣩ ꣪ चिह्नयोः स्वरूपं तदुच्चारणञ्च

वैदिकासु कासुचित् संहितासु ꣩ इत्येवं ꣪ इत्येवं वैकप्रकारकं चिह्न-मुपलभ्यते । माध्यन्दिनसंहितायां तु ꣩ ꣪ इत्युभौ चिह्नौ स्थितिभेदेन व्यवस्थितावुपलभ्येते । ꣩ ꣪ इत्येतौ कस्य वर्णस्य द्विविधव्यवस्थितोच्चारणस्य चिह्नाविति विचार्यते ।

इमौ चिह्नौ सदा तत्रैवोपलभ्येते यत्र रशषसहेषु परतोऽनुस्वारस्य परसवर्णं न भवति । माध्यन्दिनसंहितायाम् अनुस्वारस्य रशषसहवर्णान् विहाय सर्वत्रैव नित्यं परसवर्णत्वं भवति । रशषसहानां सवर्णो सानुस्वारं वर्णान्तरं नास्ति इति वैयाकरणा वैदिकाश्च मन्वते । तेन रशषसहेषु परतोऽनुस्वारस्य परसर्वणत्वं न भवति, अनुस्वारः स्वेनैव रूपेणावतिष्ठते । माध्यन्दिना यथा यवयोर्गुरुलघुलघुतरभेदेन त्रिविधं विशिष्टमुच्चारणं विदधते, तथैवानुस्वारस्यापि ह्रस्वदीर्घभेदेन द्विविधं विशिष्टमुच्चारणं कुर्वते ।

पुरा कालेऽनुस्वारस्य यवयोरिव त्रिविधमुच्चारणमभूदिति प्रातिशाख्य-परिशिष्टभूतात् प्रतिज्ञापरिशिष्टाज्ज्ञायते । तथाहि तत्सूत्रम्—

तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैः ।
दीर्घात् परो ह्रस्वो ह्रस्वात् परो दीर्घो गुरौ परे गुरुः ॥ ३।२ ॥

एषु प्राचीनाचार्यैरुक्तस्तृतीयो भेद इदानीं लुप्तः । तथा चोक्तमस्य सूत्रस्य व्याख्यानेऽनन्तभट्टेन—

वस्तुतस्तु गुरुदीर्घयोर्भेदो नास्ति तथाप्युपाधिभेदाद् भेदो मन्तव्यः । अस्ति चात्रोपाधिः—संज्ञाभेदो लिपिभेदश्च । तृतीयस्त्विदानीं प्रायशः परिभ्रष्टः, तथापि प्राचीनसंप्रदायानुरोधाज्ज्ञायते ।

**नायं वर्णविशेषः**—यथा चास्माभिः पूर्वमुपपादितं तथा ꣩ ꣪ इत्येताभ्यां चिह्नाभ्यां निर्दिष्टं नानुस्वाराद् वर्णान्तरं किञ्चित् । अत एव

प्रातिशाख्ये वर्णप्रकरणेऽस्य निर्देशो नोपलभ्यते । यदि चास्य वर्णान्तरत्वं स्वीक्रियेत तर्हि प्रातिशाख्येन विरोध उत्पद्यते । प्रातिशाख्ये अं इत्यनुस्वारः (८।२१) सूत्रेण अनुस्वारस्य सद्भावः सूचितः । माध्यन्दिनसंहितायाम् अनुस्वारस्य नित्यं परसवर्णत्वं भवतीत्युक्तं पुरस्तात्, अत एव क्वचिदपि वैदिकपाठे[1]ऽनुस्वारो नोपलभ्यते । सति चानुस्वाराभावे यथा प्रातिशाख्यप्रवक्त्रा माध्यन्दिनपाठेऽदृश्यमाणानां वर्णान्तराणां तस्मिन् ळहळजिह्वामूलीयोपध्मानीयनासिक्या[2] न सन्ति माध्यन्दिनानाम्, लृकारो दीर्घः, प्लुतश्चोक्तवर्जम् (८।३५) इति सूत्रेण प्रतिषेध उक्तस्तथाऽनुस्वारस्यापि प्रतिषेधो व्यधास्यत् । न च तेनानुस्वारस्य प्रतिषेधो विहितः । तेन ज्ञायते ऽस्त्यनुस्वारस्य माध्यन्दिनसंहितायां सद्भावः । स च रशषसहपर एव सम्भवति यत्रानुस्वारस्य परसवर्णत्वं न प्राप्नोति । एतेन ज्ञायते यन्माध्यन्दिनसंहितायां ँ ँ॑ इत्येवं भूतौ यौ द्वौ लिपिचिह्नावुपलभ्येते तावनुस्वारस्यैव द्विविधोच्चारणाय कल्पितौ, न वर्णान्तरस्य कस्यचिद् द्विविधस्य । एतेनान्यसंहितास्वपि यत्र ँ ँ॑ इत्येवं वैकविधमेव चिह्नमुपलभ्यते तदप्यनुस्वारस्यैव ज्ञेयः ।

यत्तु प्रतिज्ञासूत्रे—अथानुस्वारस्य ँ॑ इत्यादेशः शषसहरेफेषु इत्यत्रादेशरूपेण निर्देशः, कृतः सोऽपि लिपिचिह्नरूपादेशपर एव व्याख्यातव्यः, न तु वर्णान्तरादेशरूपः । अन्यथा पूर्वमुक्तः प्रातिशाख्यविरोध आपद्येत ।

अनुस्वारस्य लिपिचिह्नभेदे कारणम्—यदि ँ ँ॑ चिह्नाभ्यां निर्दिष्टोऽनुस्वार एव तर्हि वर्णान्तरवल्लिपिभेदः कुत इति चेद्, उच्यते—माध्यन्दिनसंहितायाम् अनुस्वारस्य द्विविधोच्चारणस्य (प्राचीनमते त्रिविधस्य) विहितत्वात् द्विविधोच्चारणभेदनिदर्शनाय लिप्यां द्विविधं चिह्नमावश्यकम्, तच्च द्विविधं चिह्नं यथानुस्वारचिह्नं वर्णोपरि निर्दिश्यते तथोपरि सुकरतया न संभवति, अतस्तस्य द्विविधं चिह्नं वर्णानन्तरं ँ ँ॑ रूपेण निर्दिश्यते ।

ँ ँ॑ निर्दिष्टयोरुच्चारणप्रकारः—साम्प्रतिका वैदिका आभ्यां चिह्नाभ्यां निर्दिष्टस्यानुस्वारस्य ग्वङ् गुङ् इत्येवमुच्चारणं विदधति । एतादृश-

---

१. माध्यन्दिनसंहिताया येषु मुद्रितग्रन्थेषु अनुस्वार उपलभ्यते ते सर्वे वेबरमुद्रितग्रन्थानुसारमेव मुद्रिताः सन्ति । न तादृशो वैदिकानां पाठः, अतस्तान् दृष्ट्वा न भ्रमितव्यम् ।

२. नासिक्यः=अनुनासिकस्वरः । सत्यपि नासिक्यस्य निषेधे 'सँस्कृत' इत्येवामादिषु क्वचिद् नासिक्यः स्वरः कथं दृश्यते इति विचारार्हम् ।

मुच्चारणं प्रत्यक्षमेव दोषग्रस्तम्, नह्यर्धमात्रिकस्य वर्णस्य सार्धद्विमात्रिकं ग्वङ्, द्विमात्रिकं गुङ् इत्येवं वोच्चारणरणं साधु शक्यते वक्तुम् ।

याज्ञवल्क्यशिक्षाव्याख्यात्राऽमरनाथशास्त्रिणा ग्वङ् इत्येवमुच्चारणस्य स्पष्टमशास्त्रीयत्वमुक्तम्—ये च 'गणपतिग्वङ्हवामहे' इत्येवमुच्चारयन्ति तेऽनधीतविद्या प्रातिशाख्याद्यनभिज्ञाश्च । पृष्ठ १०६ ।

ह्रस्वदीर्घसंज्ञयोरभिप्रायः—न च दीर्घात् परस्य ह्रस्वसंज्ञायाः ह्रस्वात् परस्य च दीर्घसंज्ञाया विधानात् मात्रिकद्विमात्रिकालिकेन भवितव्यम् । नह्यत्र ह्रस्वदीर्घशब्दौ अचां ह्रस्वदीर्घसंज्ञावत् द्विमात्रैकमात्राकालविधायकौ, अपितु द्विविधस्यानुस्वास्योच्चारणे प्रयत्नस्य गुरुलघुभावस्यैव द्योतकौ ।[1]

एतेन ꣳ ꣴ चिह्नाभ्यां संकेतितस्य द्विविधस्यानुस्वारस्य गुरुलघुप्रयत्नाभ्यामेवोच्चारणं कर्तव्यम्, न तु ग्वङ् गुङ् इत्येवं रूपेण इति सम्यक् व्यवस्थापितम् ।

---

१. अमरनाथशास्त्रिणाऽपि पूर्वोद्धृतप्रतिज्ञापरिशिष्टसूत्रस्य आदेश शब्द एवं व्याख्यातः—तत्रादेशश्च द्विमात्रिकाद्युपलक्षितवर्णविशेषोच्चारणस्वरूप एव ।

# तुरीयं परिशिष्टम्

## यकारषकारयोर्जकारखकारोच्चारणयोर्विवेचनम्

साम्प्रतिका माध्यन्दिना यथालक्षणं गुरुसंज्ञकस्य[1] यकारस्य जकारोच्चारणं षकारस्य टवर्गसंयोगं ककारादिसंयोगं च विहाय खकारोच्चारणं कुर्वन्ति। तद्विषये विचार्यते—किमनयोर्जकारखकारोच्चारण शास्त्रसम्मतमुताशास्त्रीयम्। तत्र तावत् यथाक्रममनयोर्जकारखकारोच्चारणविधायकानि वचनानि प्रस्तूयन्ते संक्षेपेण—

जकारोच्चारणविधायकानि वचनानि—याज्ञवल्क्यशिक्षायामेव विधीयन्ते—

पादादौ च पदादौ च संयोगावग्रहेषु च।
जशब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥१५०॥

प्रातिशाखीय-प्रतिज्ञा-परिशिष्टेऽपि—

'अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य, संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणम्'। २।१ ॥

एवमेव माध्यन्दिनशिक्षाया लघुमाध्यन्दिन शिक्षायां च विहितम्।

तत्र जकारोच्चारणं किम्मूलकमिति तावद् प्रस्तूयते—माध्यन्दिनाः यकारवकारयोस्त्रैविध्यं प्रतिजानते गुरुलघुलघुतरभेदेन। तदुक्तं याज्ञवल्क्य-—शिक्षायाम्—

वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः।
आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतरः॥
यवर्णस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः।
.......................................॥ १५५-१६१ ॥

---

१. क्व यकारो गुरुसंज्ञो भवतीत्यस्य निदर्शनं याज्ञवल्क्यशिक्षायां विस्तरेणोक्तम्। तदनुसृत्यास्माभिः सोदाहरणनिर्देशो 'यकारवकारयोर्विशिष्टा लेखनपद्धतिः' इत्यस्मिन् प्रकरणे पूर्वत्र (पृष्ठ ३५-३६) यथाशास्त्रं विहितस्तत्र द्रष्टव्यः।

अत्र स्मृतयोर्गुरुसंज्ञकयोरुच्चारणं केन प्रयत्नेन भवतीति तावद् विवेचनीयम् । अन्तस्थानां वर्णानां शिक्षाकारैः ईषत्स्पृष्टः प्रयत्न ऐकमत्येन प्रतिपाद्यते । तेन यदा ईषत्स्पृष्टप्रयत्नजौ यकारवकारौ ईषत्स्पृष्टप्रयत्नात् किंचिदधिकेन प्रयत्नेनोच्चार्येते तदेमौ गुरू भवतः । एतच्च पदान्तयोर्यकार-वकारयो र्विधायके व्योर्लघुप्रयत्नतरः शाकटायनस्य (अ० ८।३।१८) इति पाणिनीये सूत्रे प्रयत्नशब्दनिर्देशेन विज्ञातुं शक्यते । अयमेवार्थः सुस्पृष्टं न विजानीयात् (१६१) इति याज्ञवल्क्यशिक्षावचनेनोच्यते । अत्र सुस्पृष्ट-मित्यस्य न स्पृष्टप्रयत्नेनोच्चारणे विवक्षा । तेन यथा पदान्तीयौ यकारवकारा-वीषत्प्रयत्नौ सन्तावपि लघुप्रयत्नेनोच्चार्येते, तथैव गुरुसंज्ञकौ यकारवकारावपि ईषत्प्रयत्नावेव गुरुप्रयत्नेनोच्चारणीयौ इत्याचार्याणामभिप्रायो ज्ञेयः । यथा पदान्तीयौ लघुतरौ यकारवकारौ लघुप्रयत्नेनाविस्पष्टरूपेणोच्चार्येते, तथैव गुरू यकारवकारौ गुरुप्रयत्नेन सुस्पष्टमुच्चारणीयौ । तेन गुरू यकारवकारौ सुस्पष्टौ, लघू यकारवकारौ स्पष्टौ लघुतरौ यकारवकारावीषत्स्पष्टावुच्चारणीयाविति भावो विस्पष्ट एव ।

एतेन विवेचनेनेदं सुव्यक्तं भवति यथा लघुतरौ यकारवकारौ ईष-त्स्पृष्टलघुतरप्रयत्नेनोच्चार्यमाणौ न वर्णान्तररूपेण विक्रियेते, तथैव ईषत्स्पृष्ट-गुरुप्रयत्नजावपि नोच्चारणे वर्णान्तरं भेजेते इति । अत एव गुरुवकारो सर्व-कोशेषु व्व इत्येवं लिख्यते, वकाररूपेणैव चोच्चार्यतेऽद्ययावत् । तथैव गुरु-यकारस्यापि प्राचीनकाले य्य इत्येव प्रचार आसीत् (द्र० अस्मदीयो १४७१ वैक्रमाब्दे लिखितः 'क' कोशः) । इयमेव च यकारद्वित्वलेखनपद्धतिरुत्तरकाले य इत्येवं लेखने मध्येबिन्दुनिर्देशने च परिवर्तिता ।

उत्तरकाले यदा शास्त्रतात्पर्यानभिज्ञैरीषत्स्पृष्टप्रयत्नजस्य यकारस्य स्पृष्टप्रयत्नेनोच्चारणमारब्धं, तदाऽयं यकारः समानस्थानीये स्पृष्टप्रयत्नजे जकारे परिवर्तितः । यद्वाऽयं दोषो देशविशेषजेन करणदोषेण वैदिकपाठेऽप्युत्पन्नः । यथा बाङ्गा स्वकरणदोषेणान्तस्थं वकारं बहोः कालात् बकाररूपेणैवोच्चरन्ति । तेषां बवयोः समोच्चारणदोषेण लेखनेऽपि दोषोऽयमुपलभ्यते । बाङ्गा महान्तो वैयाकरणा अप्यनेन दोषेण ग्रस्ता अन्तस्थवकारवता धातुना व्युत्पद्यमानान् शब्दान् बकारवता धातुना निष्पादयन्ति[1] । बाङ्गेषु यकारस्य जकारोच्चारणे-ऽप्ययमेव हेतुः ।

१. अत एव पुरुषोत्तमदेवो भाषावृत्तेरादौ **जबगडदश्** सूत्रे **'वश्'** प्रत्याहारं निदर्श्य **'पुनर्बश्'** इत्युक्तवान् । पुनः पदप्रयोगोऽत्र अन्तस्थपवर्गीययोः समानोच्चारणनिमित्तज एव ।

वाजसनेयिसंहितायाः प्रवक्तुरपि मिथिलादेशे स्थितिरितिहासग्रन्थैर्विज्ञायते। मैथिलेष्वपि बाङ्गानामिव बकारवकारयोर्जकारयकारयोः समानोच्चारणदोष उपलभ्यते।

ईषत्स्पृष्टस्य स्पृष्टप्रयत्नेनोच्चारणं शिक्षाशास्त्रे परिगणितेषूच्चारणदोषेषु पीडनं ध्मातः निर्हतम् इत्यादिनामभिरभिधीयते। अनेनैव दोषेण यदाऽन्तस्थो यकारो दुष्टः सन् स्पृष्टप्रयत्नेनोच्चार्यते, तदा सस्थानीये स्पृष्टप्रयत्नजे जकारे विपरिणमते। यदा च स्पृष्टप्रयत्नजो जकारो लेशेन (शिथिलेन) अर्धकेन वा दोषेण ग्रस्तो भवति, तदा स समानस्थानीये ईषत्स्पृष्टप्रयत्नजे यकारे विपरिणमते। अत एवापभ्रंशासु पालिप्राकृतादिभाषासु यमुनाया जमुनारूपे, जानाति इत्यस्य याणादि इत्येवं यकारजकारयोः परस्परं व्यापत्तिरुपलभ्यते।

यद्येवं तर्हि जकारोच्चारणनिदर्शकवचनानां कोऽभिप्राय इति चेत्? उच्यते—न तेषां चवर्गीयजकारोच्चारणे तात्पर्यम्, अपितु तत्सदृशसुस्पष्टोच्चारण एव तात्पर्यं व्याख्येयम्। अत एव प्रतिज्ञा-परिशिष्टव्याख्यात्रा स्पष्टमुक्तम्—'अत एव सम्प्रदायविद एवंविधे यकारे स्पृष्टप्रयत्नज्ञापनाय मध्ये बिन्दुं प्रक्षिपन्ति। स्पृष्टप्रयत्न स्थानैक्याच्चवर्गतृतीयसदृश यकारं पठन्ति'। २।२॥

अत्र सदृशशब्दप्रयोगात् सुस्पष्टं भवति, यत्स जकारपाठ न शास्त्रानुमत मन्यते। अन्यथा स चवर्गतृतीयं जकारं पठन्ति इत्येवावक्ष्यत् सुस्पष्टतायै। एतेन याज्ञवल्कीयशिक्षाया 'जशब्दः' इत्यस्यापि 'जसदृशः' शब्द इत्येवाभिप्रायो व्याख्येयः। अयमेवाभिप्राय उत्तरे १६१ तमे श्लोके सुस्पृष्टशब्दस्यापि ज्ञेयः। व्याख्यातं चामरनाथशास्त्रिणा—सुस्पृष्टम्=कालविलम्बेन गुरुभूतम्। (पृष्ठ १११)

इदं चात्रावधेयम्—अनन्तव्याख्याने 'स्पृष्टप्रयत्नज्ञापनाय' इति यदुक्तं तन्न साधु। यतो हि लघुयकारो यथा लघुतरप्रयत्नेनोच्चार्यमाणो न स्वमीषत्स्पृष्टप्रयत्नं विजहाति, तथा गुरुयकारोऽपि न गुरुप्रयत्नेनोच्चार्यमाणः स्वमीषत्स्पृष्टप्रयत्नं विहाय स्पृष्टप्रयत्नं भजितुं समर्थः। एतेन याज्ञवल्क्यशिक्षायां सुस्पृष्टं तं विजानीयात् इत्यत्र सुस्पष्टस्थाने सुस्पृष्टपाठः प्रामादिक इति विज्ञायते। स्पृष्टप्रयत्नविवक्षायां—स्पृष्टं च तं विजानीयात् इत्येव वचनं साधीयान् स्यात्। तदा सुस्पृष्टस्य सुस्पष्टमित्येवाभिप्रायो मन्तव्यः। अमरनाथशास्त्रिव्याख्याने कालविलम्बेन गुरुभूतम् इत्यत्र कालविलम्बेनेति वचन

प्रामादिकम् । नह्यत्र यकारवकारोच्चारणयोर्गुरुलघुलघुतरशब्दैः कालभेदो विवक्षितोऽपि तु प्रयत्नभेदः, एतच्च व्योलघुप्रयत्नतरः शाकटायनस्य (अ० ८।३।१८) इति पाणिनीये सूत्रे प्रयत्नपदनिक्षेपेण ज्ञायते, इत्युपपादितमस्माभिः प्राक् ।

षकारस्य खकारोच्चारणम्—याज्ञवल्क्यशिक्षायां षकास्य खकारोच्चारणविधायकं वचनं नोपलभ्यते । तथापि प्रतिज्ञापरिशिष्टे माध्यन्दिनलघुमाध्यन्दिनशिक्षयोः खकारोच्चारणविधिः श्रूयते । तथाहि—

अथो मूर्धन्योष्मणोऽसंयुक्तस्य टुमृते संयुक्तस्य च खकारोच्चारणम् । २।७ ॥[1]

अत्र लघुमाध्यन्दिनशिक्षायामयं विशेष उपलभ्यते—षकारस्य खकारः स्याट्टुकयोगे तु नो भवेत् ।

अत्र कयोगे खकारोच्चारणनिषेधस्य ककारस्यादौ संयोगे तात्पर्यम्, न कान्तसंयोगे । तेन 'क्ष' इत्येवं संयोगे षकार एवोच्चार्यते, शुष्क्वाय इत्यत्र च खकारः ।

अत्रापि न षकारस्य खकारोच्चारणे तात्पर्यमपि तु खकारसदृशकण्ठमूर्धान्तरालस्थानेन (मूर्ध्न उपरितनभागेन) खकारवत् सुस्पष्टरूपेणोच्चारणे तात्पर्यम् । अत एवानन्तभट्टोऽप्यस्य सूत्रस्य व्याख्यान आह—'षटौ मूर्धनोति सूत्रात् षकारो मूधन्यः स्थानकरणपरित्यागेनार्धस्पृष्टषकारस्थाने कवर्गीय प्रतिरूपकं खकारोच्चारणं कर्तव्यम् ।

अत्र प्रतिरूपकशब्दः स्पष्टमेव द्योतयति यन्न षकारस्य खकारोच्चारणे तात्पर्यम्, अन्यथा कवर्गीयखकारोच्चारणं कर्तव्यम् इत्येवावक्ष्यत् । अनन्तस्य षकारस्यार्धस्पृष्टप्रयत्नलेखनं शिक्षान्तरानुरोधेन स्यात् ।

वकारस्य बकारोच्चारणम्—केचन वैदिका गुरुवकारस्य बकारोच्चारणं विदधति । तादृशोच्चारणस्य क्वचिदप्यविधानाद् बकारोच्चारणं दोष एव ज्ञेयः ।

एतेन शास्त्रतात्पर्यपर्यालोचनेन स्पष्टं प्रतीयते—यद् यकारस्य जकारोच्चारणं षकारस्य खकारोच्चारणं च न केवलं शिक्षाशास्त्रविरुद्धमपि तु माध्यन्दिनसम्मतयोर्याज्ञवल्क्यशिक्षाप्रतिज्ञापरिशिष्टयोरपि तत्तात्पर्याज्ञानमूलकमेव ।

●

१. मुद्रिते ग्रन्थे सूत्रसंख्या १२ निर्दिश्यते, स मुद्रणप्रमादो ज्ञेयः, पूर्वत्र ६ संख्या दर्शनात् ।

# पञ्चमं परिशिष्टम्

## संशोधनं परिवर्तनं परिवर्धनं च

'वैदिकपदपाठानां तुलनात्मकमध्ययनम्' इत्यत्र प्राग्भागे—पृष्ठ २४ पं० ५ इत्यतोऽग्रे परिवर्धनीयम्—

यद्यपि माध्यन्दिन-यजुःपदपाठे द्वन्द्वसमासेऽवग्रहो न दृश्यते, तथापि क्वचिदवग्रह उपलभ्यते। यथा—

ऋक्सामाभ्यामित्यृक् सामाभ्याम्। ४।१॥

एवमेव ऋक्सामयोरित्यृक् सामयोः (४।९); ऋक्सामानीत्यृक् सामानि (१८।४१) इत्यत्रापि च।

बृहद्रथन्तरेऽइतिबृहत् रथन्तरे। १२।४; १८।२३॥

इत्थं यत्र क्वचिद् द्वन्द्वेऽपि समासेऽवग्रहो दृश्यते, तत्कारणं मृग्यम्।

पृष्ठ ४३ पं० १९ '······प्रायेण वर्तते' इत्यत्र इयं टिप्पणी परिवर्धनीया—

एतादृशः स्वरसंचारः प्रायेण आदिमेषु दशस्वेवाध्यायेषु दृश्यते। यतस्तावान् ग्रन्थः (सं० १) मुम्बईनगरस्थे निर्णयसागरयन्त्रालये मुद्रितोऽभूत्। उत्तरभागः काश्यां प्रयागे च मुद्रितोऽतस्तत्र काशीपाठानुसारमेव स्वरसंचारो दृश्यते।

पृष्ठ ४५ पं० २ इत्यतोऽग्रे परिवर्धनीयम्—

ऋकारपरो यकारोऽप्यस्मिन् पाठे सर्वत्र 'यृ' इत्येवं लघुरेवोपलभ्यते।

पृष्ठ ४८ पं० २४ इत्यतोऽग्रे परिवर्धनीयम्—

२९।४२ पदपाठे तस्य संहितापाठे चोपलभ्यमानं 'चिश्चा' पदमपि ककोशे 'चिश्च्या' इत्येवं सयकारो दृश्यते।

**विशेषः**—अस्मिन् शोधनपत्रे पदादौ क्वचित् मुद्रितयोः ब य इत्येतयोः व य इत्येवं शोधनं न प्रदर्शितम्, सर्वजनानां विदितत्वात्।

| पृष्ठ | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५ | ५ | अथभाग० | अथाभाग० |
| २८ | ४ | दुदे | दुधे |
| २८ | ५ | असंदत | असंदत् |
| ३१ | ८ | तन्वा ÷ | तन्वा ÷ |
| ३३ | ४ | सꣳहितेति० | सꣳहितेति० |
| ३५ | ९ | ब्रह्मण ÷ | ब्रह्मण६ |
| ३७ | १० | सम्राडितिसम् राट् | सम्राडितिसम् राट् |
| ३७ | १२ | गार्हपत्य० | गार्हपत्य० |
| ३८ | ६ | मेधा६ | मेधा? |
| ३९ | ६ | जोषसः | जोषस६ |
| ३९ | ११ | अव्या | अव्या |
| ४० | ४ | चेरुः | चेरु? |
| ४० | ७ | रिषः | रिष? |
| ४० | ११ | ददामि | ददामि |
| ४३ | २ | उर्वारुकमि० | उर्वारुकमि० |
| ४७ | २ | व्रातात् | व्रातात |
| ४८ | ५ | इत्यूर्णं | इत्यूर्णं |
| ४८ | ६ | मयि | मयि |
| ४८ | ७ | असि? | असि |
| ४८ | ८ | सुसस्या | सुसस्या |
| ४९ | | मृडीकाम् | मृडीकाम् |
| ४९ | ४ | मनोयुजा | मनोयुजा |
| ४९ | ७ | श्वात्रा? | श्वात्रा? |
| ५० | ३ | मन्दिषीमहि | मन्दिषीमहि |
| ५१ | ८ | यज्ज्यां। उ० | अज्ज्यां। अदितिः। उ० |
| ५२ | २ | सगर्भभ्य | सगर्भ्य |
| ५२ | ७ | त्वा | त्वा |
| ५३ | ११ | महरुष ÷ | महरुष ÷ |
| ५४ | १ | रत्कनधामितिरत्कन धाम् | रत्नधामितिरत्न धाम् |
| ५४ | ५ | प्रजा | प्रजा |
| ५४ | ६ | प्राणन्तु | प्राणन्तु |

| पृष्ठ | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | ९ | सुग्मे॑ | सुग्मे |
| ५४ | १२ | पुषेयम् | पुषेयम् |
| ५५ | १० | ग्राम् | गाम् |
| ५६ | २ | अरुणस्य | अरुणस्य |
| ६५ | ५ | दुरर्वेऽइति | दुरर्वेऽइति |
| ६५ | १२ | त्वा | त्वा |
| ६८ | ८ | ग्राम् | ग्राम् |
| ६८ | ११ | स्थ | स्थ |
| ६९ | ५ | मारुत॑ | मारुत॑ |
| ७० | २ | वृद्धय॑ | वृद्धय॑ |
| ७१ | २ | प्रतक्वेति० | प्रतक्वेति |
| ७२ | २ | ०सम् इव | सम् इव |
| ७२ | २ | सोमं | सोम |
| ७२ | ८ | विद्वान् | विद्वान् |
| ७२ | ९ | ते | ते |
| ७४ | १ | अन्न्यान् । उप | अन्न्यान् । न । अन्न्यान् । उप |
| ७५ | ३ | एतस्य | एतस्य |
| ७५ | ४ | त्वा | त्वा |
| ७६ | ६ | दिवीवेति० | दिवीवेति० |
| ७७ | ११ | ते | ते |
| ७८ | ३ | पशून् | पशून् |
| ७८ | ७ | धा॑ | धा॑ |
| ८० | १३ | गच्छताम् | गच्छताम् |
| ८१ | २ | कुल्मर्ण ÷ | कुल्मर्ण ÷ |
| ८२ | ५ | अहोरात्रे० | अहोरात्रे० |
| ८२ | १२ | राजन् | राजन् |
| ८३ | ९ | अमू॑ | अमू॑ |
| ८४ | ११ | हविष्य ÷ | हविष्य ÷ |
| ८९ | १ | त्वा | त्वा |
| ८९ | ७ | इतिद्यावा पृथिवी | इतिद्यावापृथिवी |
| ९१ | ७ | देवा॑ | देवा॑ |

| पृष्ठ | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९२ | ६ | मृष्ट्टंः | मृष्टंः |
| ९२ | ११ | आसन् | आसन् |
| १०६ | ३ | व्विवस्वन् | व्विवस्वन् |
| ११० | २ | मघवन्निति० | मघवन्निति० |
| ११८ | २ | नः | नः |
| ११८ | ४ | आ | आ |
| ११९ | ६ | हविषा | हविषा |
| १२५ | ३ | अगन् | अगन् |
| १२९ | १ | नाम व्वचसा | नाम । व्वचसा |
| १२९ | ६ | य्यः | यः |
| १२९ | १४ | युज्यमानः | युज्यमानः |
| १३० | २१ | रूहेयम् | रुहेयम् |
| १३० | २२ | पृष्ठ ४४ | पृष्ठ ४५ |
| १३२ | ४ | पर्णम् | पर्णम् |
| १३३ | २ | व्वाजिनः | व्वाजिन ः |
| १३४ | १ | गन्ताम् | गन्ताम् |
| १३६ | ६ | बभूव | बभूव |
| १४५ | ४ | तपोजा | तपोजा |
| १५९ | ११ | अद्धानम् | अद्धानम् |
| १६९ | ११ | द्विषः | द्विषः |
| १७४ | ३ | देवः | देवः |
| १७५ | ७ | कृता | कृता |
| १८० | ९ | देवाः | देवाः |
| १८० | १२ | चतुः पदऽइति | चतुः पदऽइति |
| १८१ | १ | ०प्र थानम् | ०प्र थानम् |
| १८१ | ६ | नाम | नाम |
| १८२ | २ | आ | आ |
| १८४ | ९, १७ | अग्ने (अग्ने) | अग्ने (अग्ने) |
| १८५ | ४ | उषायाः | उखायाः |
| १८५ | ८ | सर्वाः | सर्वाः |
| १९२ | ९ | नः | नापेक्षते |

| पृष्ठ | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९३ | १ | ज्ञानम् | ज्ञान॑म् |
| १९३ | ८ | न॒ | न |
| २०२ | ११ | पृ॒ण | पृ॒णे॑ |
| २०५ | ९ | षा | षा? |
| २०७ | ५ | षा | षा? |
| २०९ | १३ | यु॒ञ्ज्जयम् | यु॒ञ्ज्जय॑म् |
| २१२ | ११ | सोम | सोम॑ |
| २१४ | टि० २ | ०पि मुडागमः | ०पि डटो मडागमः |
| २१५ | ९ | च | च॒ |
| २१६ | ८ | ०मिति॑ षातु | ०मिति॑यातु॒ |
| २१६ | १० | अमी० | अ॒मी० |
| २१८ | ३ | न॒? | न॒ꣳ |
| २२० | ९ | षा? | षा |
| २२४ | ७ | स्तुभा | स्तुभा॑ |
| २२५ | १३ | ज्याति॑षा | ज्योति॑षा |
| २२७ | ६ | रजसꣳ | रज॑सꣳ |
| २२८ | १ | मा॒ | मा |
| २४४ | ९ | वसंव? | वसं॑वꣳ |
| २५३ | ६ | ब्रु॒धꣳ | ब्रु॒ध? |
| २५४ | ५ | सु॒रुँत् | सु॒रुँ॑ग्रत् |
| २५९ | ५ | सु॒सहँऽइति॑ | सु॒सहु॒ऽइति॑ |
| २५९ | १८ | श्येन॒ | श्येन॑ |
| २६२ | ६ | सत्प॑ति॒० | सत्प॑ति॒० |
| २६२ | ११ | अ॒प्प्र॑युच्छ॒० | अप्प्र॑युच्छ॒० |
| २६२ | १४ | म॒ध्यम् | मध्य॑म् |
| २६४ | ७ | शो॒चिꣳ | शो॒चि? |
| २६६ | ६ | काशि॒नी | काशि॑नी |
| २६६ | ८ | गि॒रि॒श॒न्तेति॑० | गि॒रि॒श॒न्तेति॑० |
| २६८ | ६ | इ॒षवं॑ꣳ | इ॒षवꣳ |
| २६८ | १० | इ॒षव॑ꣳ | इ॒षवꣳ |
| २७२ | ३ | वि॒कृ॒ता॒ना॒मिति॑० | वि॒कृ॒ता॒ना॒मिति॑० |

| पृष्ठ | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७६ | ५ | अपगल्भायेत्यप गल्भाय | अपगल्भायेत्यप गल्भाय |
| २८० | ५ | निवेष्प्युायेति० | निवेष्प्युायेति० |
| २९५ | ७ | ष्वेद | ष्वेद |
| ३०१ | ६ | देवा? | देवाः |
| ३०४ | ८ | ०रित्त्या भजन्ती | रित्त्या भजन्ती |
| ३०६ | ३ | इतित्प्र | इतिप्प्र |
| ३०६ | ८ | क्रेतुम् | केतुम् |
| ३०८ | ११ | ज्यौति ÷ | ज्योति ÷ |
| ३०८ | १३ | रोदसीऽइति | रोदसीऽइति |
| ३२४ | ७, १४, १९ | अधिसवनऽइति | अधिसवनेऽइति |
| ३२५ | ५, १३ | बृहद्द्रथन्तर० | बृहद्द्रथन्तरे० |
| ३२९ | १० | नः | नः |
| ३३१ | ९ | अवस्यू ? | अवस्यू ? |
| ३३६ | ११ | अधि | आधि |
| ३३७ | ५ | इन्द्रम | इन्द्र |
| ३५५ | ६ | सिष्ठाः | ग्रासिष्ठाः |
| ३६३ | १९ | २२८ | ३२८ |
| ३७० | ६ | ०दितीन्द्रिय | ०दितीन्द्रिय |
| ३७३ | १ | पृष्टी? | पृष्ठी? |
| ३७३ | १३ | पृष्ठी? | पृष्ठी? |
| ३८२ | १ | इन्द्रम् | इन्द्रम् |
| ३८७ | १३ | यिम् | रयिम् |
| ३९६ | २ | बृत्रहेति० | बृत्रहेति० |
| ४०० | ६ | इतियहश्री | इतियहश्री |

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद विषयक ग्रन्थ

१. **ऋग्वेदभाष्य**—(संस्कृत, हिन्दी; ऋग्वेदादिभाष्यभूमिका सहित)—प्रति भाग सहस्राधिक टिप्पणियां, १०-११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ६०.००; द्वितीय भाग ४०.००; तृतीय भाग ५०.००।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत्त जिज्ञासु कृत विवरण। प्रथम भाग १५०.००, द्वितीय भाग ७५.००।

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्रसूची सहित। १००.००

४. **तैत्तिरीयसंहिता-पदपाठ**—दाक्षिणात्यपाठानुसारी। बृहद् आकार में। पृष्ठ संख्या ६७०। १५०.००

५. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्याय कृत। १-३ काण्ड ५०.००, ४-५ काण्ड ५०.००, ६ काण्ड ५०.००, ७-८ काण्ड ५०.००, ९-१० काण्ड ५०.००, ११-१३ काण्ड ५०.००, १४-१७ काण्ड ५०.००, १८-१९ काण्ड ५०.००, बीसवां काण्ड ५०.००।

६. **ऋग्वेदादिभाष्य-भूमिका**—पं० युधिष्ठिर मीमांसक द्वारा सम्पादित एवं शतशः टिप्पणियों से युक्त। मूल्य ५०.००

७. **ऋग्वेदादिभाष्य-भूमिका-परिशिष्ट**—भूमिका पर किये गये आक्षेपों के ग्रन्थकार द्वारा दिये गये उत्तर। ५.००

८. **भूमिका-भास्कर**—स्वामी विद्यानन्द सरस्वती, दो भागों में पूर्ण, प्रथम भाग १५०.००, दूसरा भाग १५०.००।

९. **माध्यन्दिन (यजुर्वेद) पदपाठ**— १००.००

१०. **गोपथ-ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों में अधिक शुद्ध और सुन्दर संस्करण। ८०.००

११. **वैदिक-सिद्धान्त-मीमांसा**—(प्रथम भाग) पं० युधिष्ठिर मीमांसक लिखित वेदविषयक १९ विशिष्ट निबन्धों का अपूर्व संग्रह। ७५.००

१२. **वैदिक-सिद्धान्त-मीमांसा**—(द्वितीय भाग) पं० युधिष्ठिर मीमांसक द्वारा लिखित वेदाङ्गादि विषयक निबन्धों का अपूर्व संग्रह। १००.००

**१३. कात्यायनीय ऋक्सर्वानुक्रमणी**—(ऋग्वेदीया)—षड्गुरुशिष्य विरचित संस्कृत टीका सहित। इसमें ऋग्वेद के प्रतिमन्त्र ऋषि देवता और छन्दों का संकलन है। इस संस्करण में टीका का पूरा पाठ प्रथम बार छापा गया है। विस्तृत भूमिका और अनेक परिशिष्टों से युक्त। १५०.००

**१४. ऋग्वेदानुक्रमणी**—वेङ्कट माधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। प्रत्येक वेदार्थ के जिज्ञासु के लिये यह ग्रन्थ परम उपयोगी है। व्याख्याकार—श्री डा० विजयपाल जी विद्यावारिधि। ५०.००

**१५. वैदिक-साहित्य-सौदामिनी**—स्व० श्री पं० वागीश्वर वेदालङ्कार कृत काव्यप्रकाश, साहित्यदर्पण आदि के समान वैदिक साहित्य पर शास्त्रीय विवेचनात्मक ग्रन्थ। ७०.००

**१६. ऋग्वेद की ऋक्संख्या**—लेखक—पं० युधिष्ठिर मीमांसक। ५.००

**१७. वेद-श्रुति-आम्नाय-संज्ञा-मीमांसा**—(संस्कृत-हिन्दी) इसमें सप्रमाण दर्शाया गया है कि मन्त्रों की ही वेदसंज्ञा है। युधिष्ठिर मीमांसक। ३.००

**१८. वैदिक-छन्दोमीमांसा**—लेखक—पं० युधिष्ठिर मीमांसक। ५०.००

**१९. वैदिक-स्वर-मीमांसा**—वेद में प्रयुक्त उदात्तादि स्वरों का विस्तृत विवेचन किया गया है। लेखक—पं० युधिष्ठिर मीमांसक। ५०.००

**२०. वैदिक वाङ्मय में प्रयुक्त विविध स्वराङ्कन प्रकार**—लेखक—पं० युधिष्ठिर मीमांसक। १०.००

**२१. वेदों का महत्त्व तथा उनके प्रचार के उपाय, वेदार्थ की विविध प्रक्रियाओं की ऐतिहासिक मीमांसा**—(संस्कृत-हिन्दी)—यु० मी० १५.००

**२२. देवापि और शन्तनु के आख्यान का वास्तविक स्वरूप**—लेखक—श्री पं० ब्रह्मदत्त जी जिज्ञासु। ८.००

**२३. वेद और निरुक्त**—श्री पं० ब्रह्मदत्त जी जिज्ञासु। ३.००

**२४. निरुक्तकार और वेद में इतिहास**—पं० ब्रह्मदत्त जिज्ञासु। ३.००

**२५. त्वाष्ट्री सरण्यू की वैदिक कथा का वास्तविक स्वरूप**—लेखक—पं० धर्मदेव जी निरुक्ताचार्य। ३.००

**२६. कतिपय वैदिक-शब्दों के अर्थों की मीमांसा**—पं० ईश्वरचन्द्र जी विद्यासागर। ५.००

**पुस्तक प्राप्ति स्थान—**

**रामलाल कपूर ट्रस्ट बहालगढ़, (सोनीपत-हरियाणा)**

**रामलाल कपूर एण्ड सन्स २५९६, नई सड़क, दिल्ली**